KĀVYAMĀLĀ 1.



# THE ĀRYĀ-SAPTAS'ATĪ

OF

GOVARDHANĀCHĀRYA

WITH

The Commentary Vyañgyārtha-dīpanā

OF

ANAÑTA-PAṆḌIT.



EDITED BY

PAṆḌIT DURGĀPRĀSAD

AND

KĀS'INĀTH PĀṆḌURANG PARAB

&

VĀSUDEV LAXMAṆ S'ĀSTRĪ PAṆS'ĪKAR.

Third Revised Edition.

PUBLISHED BY

PĀNDURANG JĀWAJĪ,

PROPRIETOR OF THE "NIRṆAYA SĀGAR" PRESS,

BOMBAY.

1934.

*Price* 1½ *Rupee.*

काव्यमाला १.



श्रीगोवर्धनाचार्यविरचिता

# आर्यासप्तशती ।

अनन्तपण्डितकृतया व्यङ्ग्यार्थदीपनाटीकया समेता ।



जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादतनय-
पण्डितकेदारनाथशर्मणा, काशिनाथ पाण्डुरङ्ग परब
इत्यनेन मुम्बापुरवासिपणशीकरोपाह्वविद्वद्वर-
लक्ष्मणशर्मतनुजनुपा वासुदेवशर्मणा
च संशोधिता ।

तृतीयं संस्करणम् ।

सा च
मुम्बय्यां
पाण्डुरङ्ग जावजी इत्येतैः
स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रापयित्वा प्राकाश्यं नीता ।

शकाब्दाः १८५६, खिस्ताब्दाः १९३४.

मूल्यं १॥ सार्धो रूप्यकः ।

# काव्यमाला।



## श्रीगोवर्धनाचार्यविरचिता

# आर्यासप्तशती।

### अनन्तपण्डितकृतया व्यङ्ग्यार्थदीपनाख्यया व्याख्ययालङ्कृता।



ग्रन्थारम्भवज्या।

सर्वे साधुजनाः सदायतहृदा सत्संप्रदायादलं
यज्ज्ञानाय कणादगौतममतान्यालोच्य तत्त्वार्थदान्।
वेदान्तान्परिशीलयन्ति रहसि स्वानन्दकन्दाकरं
वन्दे तं जगदीश्वरं दयितया सानन्दमालिङ्गितम्॥
यत्पादाम्बुजमब्जभूप्रभृतयो देवाः सदैवान्तरे
ध्यायन्ति ग्लपयन्ति दुःखनिवहं लीलामनुष्याकृतिम्।
फुल्लेन्दीवरमित्रनेत्रमतसीपुष्पावभासं लस-
च्छ्रीरामं कलयामि चेतसि चिरं चैतन्यमात्रात्मकम्॥

---

१. गोवर्धनाचार्यसमयस्त्वद्यापि सम्यङ् ज्ञायते. परं त्वयं गीतगोविन्दकर्तुर्जयदेवात्प्राचीनस्तत्समकालीनो वेति वक्तुं शक्यते, यतो जयदेवेन गीतगोविन्दप्रारम्भे 'शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धनस्पर्धी कोऽपि न विश्रुतः' इत्युक्तमस्ति जयदेवकविश्च वङ्गदेशाधिपस्य वल्लालसेनसूनोर्लक्ष्मणसेनस्य सभायामासीदिति श्रीसनातनगोस्वामिनां मतम्. 'गोवर्धनश्च शरणो जयदेव उमापतिः। कविराजश्च रत्नानि समितौ लक्ष्मणस्य च॥' इत्ययं श्लोको लक्ष्मणसेनसभागृहद्वारोपरि शिलायामुत्कीर्ण आसीत्, तस्माद्गोवर्धनजयदेवादयः सर्वेऽपि लक्ष्मणसेनसभायामासन्निति केचित्. लक्ष्मणसेनश्च खिस्तसंवत्सरस्यैकादशशतकसमाप्तिपर्यन्तं वङ्गदेशं पालयामासेति केचिदितिहासविदः.
२. सप्तशतीटीकाकारोऽनन्तपण्डितस्तु टीकासमाप्तौ स्वसमयं लिखितवानेव.

पञ्चाशद्वर्णभेदैरपरिमिततरैरर्थजातिश्च युक्ता
नानालंकाररम्या गणितगुणगणा साधुवृत्तैरुपेता।
वाक्सृष्टिर्यत्प्रसादात्प्रसरति रसनोपान्तदेशे निमेषा-
न्नित्यं चित्तेऽनुरक्ते वसतु मम सुखं भारती सा रसाढ्या॥
गोवर्धनोक्तिसुखदाननिदानमेतद्व्यङ्ग्यार्थदीपनमनल्पचमत्कृतीनाम्।
भूयादनन्तविबुधेन विधीयमानं प्रीत्यै सदा सकलपण्डितमण्डलीनाम्॥
आर्यार्थग्रहणे तावदार्या एवाधिकारिणः।
अतोऽत्र दृष्टिस्तैरेव कार्या नान्यैः कदाचन॥
गभीरार्थप्राप्तौ नियतवचसामाशयजुषां
गुणालंकाराणां भवति घटना सत्वरतरम्।
अतो हेतोश्चेतो विपुलमतिना तत्र विषये
नियोज्यं येनान्तः सततसुखसंबाधवसतिः॥
संत्यज्य दोषं गुण एव दृष्टिर्विधीयतामित्यफलं वचो मे।
विहाय नीरं सकलोऽपि हंसः पयः प्रगृह्णात्युपदेशतः किम्॥

विशिष्टशिष्टैष्टकर्तव्यतापत्तिप्राप्तमङ्गलमनुपङ्गतो व्याख्यातृश्रोतृमङ्गलायोपनिबध्नाति—

पाणिग्रहे पुलकितं वपुरैशं भूतिभूषितं जयति।
अङ्कुरित इव मनोभूर्यस्मिन्भस्मावशेषोऽपि॥ १॥

**पाणिग्रह इति**। भूतिभूषितं भस्मनालंकृतम्। भस्मनो भूषणत्वं मनोभवीयत्वेन। यत्तु 'भूत्यैश्वर्येण' इति व्याख्यानं तदंशमित्यनेन गतार्थत्वात्प्रकृतानुपयुक्तत्वाच्चोपेक्ष्यम्। पाणिग्रहे। अर्थादत्यन्तानुरक्तकामिन्याः। पुलकितं जातरोमाञ्चम्। सात्त्विकभावोदयादिति भावः। ऐशमीशसंबन्धि। चैत्रादिवदीशपदस्य कर्पूरगौरत्वादिमच्छरीरोपहितात्मनि शक्तौ गौरवात्, लाघवात्तादृशशरीर एव शक्तत्वात्, नित्यज्ञानादिमदात्मनि लक्षणा। यद्वा 'ईश ऐश्वर्ये' इति धातोरचि निष्पन्नेनेशपदेन शक्त्या जगत्कर्तृत्वाद्यैश्वर्यवत्त्वं बोध्यते। तत्संबन्धस्य शरीरान्तरे सत्त्वेऽपि भूतिभूषितविशेषणमहिम्ना शंकरीयत्वमायाति वपुषि। एवं च मनोभूभस्मसंबन्धि सर्वोत्कर्षशालित्वयोग्यत्वं व्यज्यते। वपुर्जयति। यद्वा भूतिभूषितमित्यनेन भूषणसामान्याभावप्रतिपादनेऽपि सर्वोत्कर्षशालित्वे देवीपाणिग्रहणजन्यपुलकवत्ता हेतुः। जयतीत्यनेनेशे सर्वोत्कर्षशालित्वप्रतिपादनेन सर्वान्तर्गते स्वस्मिन्नपकर्षप्रतिपादनान्नतिरावेद्यते। भस्मावशेषोऽपि। एवं चाङ्कुरीभावानर्हत्वेऽपि तद्भवनेन देवीपाणौ सुधा-

रूपत्वमावेद्यते । मनोभूः । एवं च मनसो बीजरूपताप्रतिपादनेन तस्यान्तर्गतत्वाद्वपुष्यङ्कुरवत्तायोग्यत्वं व्यज्यते । विशिष्यानाकलनीयरूपस्यापि भवनयोग्यत्वेन वपुषि विशेषभवनयोग्यत्वं वा । यस्मिन्वपुष्यङ्कुरित इव संजाताङ्कुर इवेति भस्मसंसर्गिरोमाञ्चेऽङ्कुरोत्प्रेक्षा । एवं च यथाङ्कुरसंजातमहत्तरतरुकिसलयकुसुमफलादिनान्यजनोपकारस्तथैतदङ्कुरभाविकुमारफल्यादिना तारकवधेन सकलजनोपकारो भवितेति ध्वन्यते । अत्राङ्कुरितत्वेन पाणिस्पर्शस्यामृतरूपत्वं वस्तुना वस्तु व्यज्यते ॥

मा वम संवृणु विषमिदमिति सातङ्कं पितामहेनोक्तः ।
प्रातर्जयति सलज्जः कज्जलमलिनाधरः शंभुः ॥ २ ॥

**मा वमेति** । इदमित्यपलापानर्हत्वम् । अथवा जगद्विनाशविदितविभवत्वमिति व्यज्यते । विषं मा वम, किं तु संवृण्विति सातङ्कम् । सातङ्कत्वं च सकलजगद्विनाशे पुनस्तद्विधानदुष्करत्वविनिर्णयेन । पितामहेन । एवं च भ्रमयोग्यत्वं हरस्य च लज्जायोग्यत्वं ध्वन्यते । प्रातरुक्तः । प्रातरित्यनेन कज्जले स्फुटयोग्यत्वं ध्वन्यते । अतः सलज्जः । न त्वपत्रपावान् । पितामहेन कज्जलत्वेनाज्ञानात् । कज्जलमलिनाधरः । नेत्रचुम्बनादिति भावः । शंभुः । एवं च कामिनीप्रीत्यतिशयशालित्वं द्योत्यते । जयति । पितामहसंत्रासजनकगरलगिलनेन, ब्रह्मणः प्रार्थनया, सुभगकामिनीरतचिह्नत्वेन वा ॥

जयति प्रियापदान्ते गरलग्रैवेयकः स्मरारातिः ।
विषमविशिखे विशन्निव शरणं गलबद्धकरवालः ॥ ३ ॥

**जयतीति** । गरलं ग्रैवेयकं कण्ठभूषा यस्य स स्मरारातिः प्रियापदान्ते जयति । एवं च कुपितकामिनीप्रसादनकर्तव्यतायाः परमपुरुषार्थत्वं व्यज्यते । गरलग्रैवेयक इत्यनेन जीवनायोग्यत्वम् । स्मरारातिरित्यनेन स्मरबाधावत्त्वेन क्वचिदपि सुखावस्थानायोग्यत्वं ध्वन्यते । एवं चैतादृशस्यापि सर्वोत्कर्षशालित्वे प्रियापदान्तेऽवस्थितिरेव हेतुः । अतः प्रियापदान्तावस्थितेर्नान्यदधिकतरं वस्त्विति द्योत्यते । यद्वा गरलग्रैवेयक इत्यनेन जीवननिःस्पृहत्वम् । एवं चैतादृशस्यापि कुपितकामिनीप्रसादनलम्पटत्वम्, किमुतान्येषामिति ध्वन्यते । गलबद्धखड्गः । विषमविशिखे । एवं च शरणार्हत्वं व्यज्यते । शरणं विशन्निव गच्छन्निव । विषमविशिखे विशन्निवेत्युत्प्रेक्षया विषमविशिखस्यापि प्रियापदसांनिध्येनाधिकत्वम्, किं पुनरन्यस्येति द्योत्यते । अत एव स्त्रीणां चरणे मदन इति कामतन्त्रे । अन्योऽपि शस्त्रं गले बद्ध्वा शरणं गच्छतीति लौकिकम् ॥

जयति ललाटकटाक्षः शशिमौलेः पक्ष्मलः प्रियाप्रणतौ ।
धनुषि स्मरेण निहितः सकण्टकः केतकेषुरिव ॥ ४ ॥

**जयतीति** । शशिमौलेः । एवं च सकलङ्कस्याप्येतादृशादरसंपादनेन संतापातिभीरुत्वं ध्वन्यते । तेन च कुपितकामिनीप्रसादनेऽवश्यकर्तव्यत्वम् । पक्ष्मलः प्रशस्तपक्ष्मवान् । पक्ष्मलपदं केतकोत्प्रेक्षादार्ढ्याय । ललाटकटाक्षः । एवं च भ्रूमध्यसंबन्धित्वं द्योत्यते । तेन च धनुर्निहितबाणोत्प्रेक्षादार्ढ्यम् । प्रियाप्रणतौ प्रियाविषयकहरप्रणतौ सत्यां जयति । चाटुवचनाद्यसाध्यमानापनोदकार्यकारित्वेनेति भावः । स्मरेण सकण्टकः । एवं च निःसरणानर्हत्वं ध्वन्यते । धनुषि निहितः । न तु शीघ्रं परित्यक्तः । एवं च मुष्टिबन्धनदार्ढ्येन भेदविशेषकारित्वम् । तेन च मानलक्ष्यभङ्गेऽतिशीघ्रविधेयत्वं ध्वन्यते । केतकेषुरिव । स्मरस्य पुष्पसायकत्वादिति भावः । एवं च मानापनोदनत्वं व्यज्यते । केचित्तु प्रियाकर्तृकसेवाप्रणतौ समान्मथविकारललाटकटाक्षो जयतीत्यपि वदन्ति ॥

जयति जटाकिंजल्कं गङ्गामधु मुण्डवलयवीजमयम् ।
गलगरलपङ्कसंभवमम्भोरुहमाननं शंभोः ॥ ५ ॥

**जयतीति** । जटाः किंजल्कानि यत्रेति रूपकम् । एवमग्रेऽपि ॥

संध्यासलिलाञ्जलिमपि कङ्कणफणिपीयमानमविजानन् ।
गौरीमुखार्पितमना विजयाहसितः शिवो जयति ॥ ६ ॥

**संध्येति** । कङ्कणरूपफणिपीयमानमपि । कङ्कणपदेन प्रात्यक्षिकत्वं ध्वन्यते । फणिपदेन भूषणयोग्यत्वं ध्वन्यते । पीयमानमित्यनेन ज्ञानयोग्यत्वं ध्वन्यते । संध्यासलिलाञ्जलिम् । राजदन्तादिवदञ्जलेः सलिलमिति समासः । संध्यापदेन तदेकचित्तावश्यकत्वं व्यज्यते । अञ्जलिपदेन भूयस्त्वं द्योत्यते । तेन च तत्पानस्य विलम्बसाध्यत्वेनावश्यज्ञेयत्वम् । अविजानन् । अत्र हेतुमाह—गौरीमुखार्पितमनाः । गौरीत्यनेन मनःसंलग्नतायोग्यत्वं मुखे ध्वन्यते । अर्पितपदेन ग्रहणायोग्यत्वं ध्वन्यते । एवं चैतादृशविषयज्ञानाभावेनात्यन्तासक्तिर्गौर्यां गिरिशस्य व्यज्यते । अत एव । विजया गौरीसखी तया हसितः शिवो जयति । एतादृशपरिहासस्याप्युत्कर्षाधायकत्वादिति भावः ॥

प्रतिबिम्बितगौरीमुखविलोकनोत्कम्पशिथिलकरगलितः ।
स्वेदभरपूर्यमाणः शंभोः सलिलाञ्जलिर्जयति ॥ ७ ॥

**प्रतीति** । सलिलाञ्जलिर्जयति । एवं चाञ्जलिजलप्रतिबिम्बितगौरीवदनविलोकनसंजातकम्परूपसात्त्विकभावविश्लथकरगलितत्वेऽपि स्वेदरूपसात्त्विकभावभराकस्मिकपूरणात्सर्वोत्कर्षशालित्वमिति भावः ॥

प्रणयकुपितप्रियापदलाक्षासंध्यानुबन्धमधुरेन्दुः ।
तद्वलयकनकनिकषग्रावग्रीवः शिवो जयति ॥ ८ ॥

**प्रणयेति** । प्रणयेन न वास्तवं कुपिता या प्रिया । एवं च चरणप्रणामयोग्यत्वं ध्वन्यते । तस्याश्चरणलाक्षारूपसंध्यानुबन्धसुन्दरश्चन्द्रो यस्य । तस्याः पार्वत्याः कङ्कणकनकस्य निकषोपलरूपा ग्रीवा यस्य । एवं च मानापनोदनात्कण्ठपुरःसरमालिङ्गनादि ध्वन्यते । एतादृशः शिवो जयति । प्रियाप्रसादादिति भावः । स्वकार्योद्देशविहितप्रियाप्रणामेन संध्याचन्द्रमसोरपि सङ्गसंपादनादनायासेन परोपकारित्वलाभादिति भावः ॥

पूर्णनखेन्दुर्द्विगुणितमञ्जीरा प्रेमशृङ्खला जयति ।
हरशशिलेखा गौरीचरणाङ्गुलिमध्यगुल्फेषु ॥ ९ ॥

**पूर्णेति** । गौर्याश्चरणाङ्गुलिमध्यगुल्फेषु । अत्र मध्यस्याङ्गत्वाभावान्नैकवद्भावः । मध्यमपदलोपी समासो वा । पूर्णो नखेन्दुर्यया । पूर्वं नखस्यार्धचन्द्रत्वादिति भावः । द्विगुणीकृतं मञ्जीरं यया । पूर्वं मञ्जीरस्यैकगुणत्वादिति भावः । प्रेम्णः शृङ्खला यया । पूर्वं सुवर्णाभरणान्तरवत्त्वेऽपि प्रेमस्थितिसंपादकाभिनवभूषणत्वादिति भावः । एवं च यथा यथा मानापनोदनं तथा तथा शिरश्चरणसंयोगोऽधिकतरः संवृत्त इति भावः । एवं च सहसा मानिनीचरणे मस्तकस्थापनेऽपि भीतिरावेद्यते । एतादृशी हरचन्द्रलेखा जयति । युगपदनेककार्यसंपादनादिति भावः ॥

श्रीकरपिहितं चक्षुः सुखयतु वः पुण्डरीकनयनस्य ।
जघनमिवेक्षितुमागतमब्जनिभं नाभिसुषिरेण ॥ १० ॥

**श्रीकरेति** । पुण्डरीकनयनस्य विष्णोः । श्रीकरपिहितम् । रतरीतिवसनविहीनतया लज्जावशादिति भावः । श्रियः करेण । न तु श्रिया । आनन्दाविर्भावादिति भावः । अत एव करोतीति कर इति करपदमन्वर्थम् । ततो नाभिरन्ध्रेण ।

सुषिरपदमन्यानवलोकनीयत्वं व्यनक्ति । जघनमीक्षितुमागतमिवेत्युत्प्रेक्षा । एवं च लक्ष्मीजघनदर्शनलालसत्वं व्यज्यते । पिधानानर्थक्यं च । अब्जसदृशम् । एवं च नाभिकमलभ्रान्त्या पिधानायोग्यत्वमावेद्यते । चक्षुर्वो युष्मान्सुखयतु । पिहितेऽपि हि गोलकेऽन्यमार्गेणागत्य जघनविलोकनकारितया सुखलम्पटत्वेन सुखदानस्य सुखप्राप्तिनिदानतयान्यस्य सुखजनकत्वं तस्येति भावः । नन्वत्र पुण्डरीकनयनस्येत्यनेन कमलसादृश्यसिद्धावब्जनिभमित्यस्य न तथा प्रयोजनमिति चेन्न । पुण्डरीकनयन इत्यत्र रूढिरेव । यद्वाब्जपदस्य वक्रतात्पर्यान्यथानुपपत्त्या रक्ताब्जे लक्षणा । एवं च लक्ष्म्याः सिताम्भोजत्वेन नेत्रज्ञानेऽपि रक्ताम्भोजत्वेनाज्ञानात् । तद्रूपाङ्गीकारेण निभृतमार्गेणागमनेन जघनदर्शनकारित्वेऽपि न श्रीकरपिहितत्वमिति व्यज्यते । अन्योऽप्यत्यन्तलम्पटो रूपान्तरेण निभृतमार्गेण च गत्वा स्वकार्यं साधयतीति लौकिकम् । केचित्तु रत्नमित्युक्ते रक्तरत्नमेव, अब्जमित्युक्ते रक्ताब्जमेवोपलक्ष्यते कविसंप्रदायादिति वदन्ति ॥

श्यामं श्रीकुचकुङ्कुमपिञ्जरितमुरो मुरद्विषो जयति ।
दिनमुखनभ इव कौस्तुभविभाकरो यद्विभूषयति ॥ ११ ॥

**श्याममिति**। श्यामम् । विष्णोः श्यामत्वादिति भावः। श्रीकुचकुङ्कुमपिञ्जरितम् । एवं च दृढालिङ्गनमभिव्यज्यते । तन्मुरद्विष उरः । एवं च कठिनत्वमुरसि व्यज्यते । तेन च श्रीकठिनकुचकुम्भसंघट्टनसहिष्णुत्वम् । जयति । सर्वोत्कर्षे लक्ष्मीदृढालिङ्गनं हेतुः । दिनमुखनभ इव । प्रातःकालीननभसः स्वतो नीलिमत्वात्संध्यासंवलितत्वाच्च तथाविधोरसः सादृश्यम् । कौस्तुभ एव विभाकरः । पक्षे कौस्तुभवद्विभाकरः सूर्यः । यदुरो विभूषयति । एवं च त्रिभुवनाधिपतेर्निरीहस्यापि कौस्तुभाभरणधारणमुदरवर्त्यनेकलोकयुगपत्प्रकाशविश्रान्तिविधाननिदानतां ध्वनयति । एवं च विभाकरादतिशयो व्यज्यते कौस्तुभे ॥

प्रतिबिम्बितप्रियातनु सकौस्तुभं जयति मधुभिदो वक्षः ।
पुरुषायितमभ्यस्यति लक्ष्मीर्यद्वीक्ष्य मुकुरमिव ॥ १२ ॥

**प्रतीति**। सकौस्तुभम् । अत एव प्रतिबिम्बिता प्रियायास्तनुर्यत्र । यन्मुकुरमिव वीक्ष्य लक्ष्मीः पुरुषायितं विपरीतरतमभ्यस्यति । तन्मधुभिदो वक्षः । एवं च दार्ढ्यमावेद्यते स्वच्छताविशेषो वा । जयति । लक्ष्म्याः पुरुषायिताभ्यासनिदानतैव सर्वोत्कर्षे हेतुः । अन्योऽप्यादर्शे प्रतिबिम्बमवलोक्यैवान्यानवलोकनीयचेष्टाविशेषाभ्यासं करोतीति लौकिकम् ॥

केलिचलाङ्गुलिलम्भितलक्ष्मीनाभिर्मुरद्विषश्चरणः ।
स जयति येन कृता श्रीरनुरूपा पद्मनाभस्य ॥ १३ ॥

**केलीति** । क्रीडाचपलाङ्गुल्या लम्भितः स्पृष्टो लक्ष्म्याः । चरणसेवाकारिण्या इति भावः । नाभिर्येन । अत एव येन श्रीः पद्मनाभस्यानुरूपा । चरणरूपपद्मनाभित्वेनेति भावः । कृता । स मुरद्विषश्चरणो जयति । ब्रह्मणोऽप्यसाध्यकार्यकरणादिति भावः ॥

रोमावली मुरारेः श्रीवत्सनिषेविताग्रभागा वः ।
उन्नालनाभिनलिनच्छायेवोत्तापमपहरतु ॥ १४ ॥

**रोमावलीति** । मुरारेः । एवं च सामर्थ्यमभिव्यज्यते । तेन च तद्वत्त्वेऽपि भृगुचरणहननसहिष्णुत्वेन क्षमातिशयत्वम् । श्रीवत्सेन भृगुचरणचिह्नेन निषेवितः । तत्संबन्धवानित्यर्थः । अग्रभागो यस्याः सा । एतादृशी रोमावली । उदूर्ध्वं नालं यस्यैवंभूतं यन्नाभिनलिनं तच्छायेव । एवं च रोमावल्यां नालच्छायोत्प्रेक्षा श्रीवत्से च नलिनच्छायोत्प्रेक्षेति भावः । उत्तापं महासंतापमपहरतु । कमलच्छायायाः संतापापनोदकत्वादिति भावः ॥

आदाय सप्ततन्त्रीचितां विपञ्चीमिव त्रयीं गायन् ।
मधुरं तुरंगवदनोचितं हरिर्जयति हयमूर्धा ॥ १५ ॥

**आदायेति** । सप्तसंख्याकानां तन्त्राणामग्निष्टोमादीनां समाहारः सप्ततन्त्री तद्व्याप्ताम् । तत्प्रतिपादनपरामिति यावत् । 'तन्त्रं प्रधाने यागे च' इति विश्वः । पक्षे तन्त्री लोहतन्तुविशेषः । त्रयीं विपञ्चीमिवादाय मधुरं तुरंगवदनानां गन्धर्वाणामुचितं योग्यम् । एवं चैतादृशगानकर्तृत्वाभावस्तेषामिति व्यज्यते । गायन् । हयमूर्धा हयग्रीवः । एवं च तुरंगवदनोचितगानकर्तृकत्वम् । हरिर्जयति । एतादृशविलक्षणगानगुणरूपवत्त्वादिति भावः ॥

स जयति महावराहो जलनिधिजठरे चिरं निमग्नापि ।
येनाङ्गैरिव सह फणिगणैर्बलादुद्धृता धरणी ॥ १६ ॥

**स इति** । येन जलनिधिजठरे । डलयोरैक्याज्जडनिधित्वेन धरणीस्थानदानयोग्यत्वम् । चिरमित्यनेन झटिति निःसारणायोग्यत्वं व्यज्यते । निमग्नापि । अ-

न्त्रैरिवाहिसमूहैः सह बलात्कारेण धरण्युद्धृता । स महावराहः । एवं चैतद्दंष्ट्राया अन्ते दृढत्ववक्रत्वाभ्यां जठरान्तर्गतत्वेनान्त्ररूपफणिसमूहसहितधरोद्धारसामर्थ्यमुचितमिति व्यज्यते । जयति । अनन्यसाध्यकार्यकरणादिति भावः ॥

ब्रह्माण्डकुम्भकारं भुजगाकारं जनार्दनं नौमि ।
स्फारे यत्फणचक्रे धरा शरावश्रियं वहति ॥ १७ ॥

**ब्रह्माण्डमिति**। ब्रह्माण्डं कुम्भस्तं करोतीति तम् । एवं च यथा कुम्भकारस्य कुम्भकरणे न क्लेशस्तथास्य ब्रह्माण्डकरण इति व्यज्यते । भुजगस्याकार इवाकारो यस्य तम् । एवं च वास्तवैतद्रूपं याथातथ्येन निर्णेतुमशक्यमिति व्यज्यते । जनार्दनम् । एवं चैतद्भीतिरवश्यं विधेयेति ध्वन्यते । तेन चैतदाज्ञा नोल्लङ्घनीयेति । स्फारे । एवं च धराशरावश्रीसंपादनयोग्यत्वं द्योत्यते । यस्य फणासमूहे धरा । एवं च महत्तरत्वं व्यज्यते । शरावस्य स्वल्पमृद्भाजनविशेषस्य श्रियं वहति । तत्तुल्या दृश्यत इति भावः । एवं च परमेश्वरभुजगरूपस्यातिविशालत्वं ध्वन्यते । अन्यस्यापि कुलालस्य चक्रे शरावो भवतीति लौकिकम् । अत्र धरा शरावश्रियं वहतीत्येतावतैव फणचक्रे स्फारत्वसिद्धावुत्तमकाव्यत्वे स्फारपदोपादानमनुचितमित्याभाति ॥

चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रिये जयति ।
शंकरपर्यन्तजितो विजयस्तम्भः स्मरस्येव ॥ १८ ॥

**चण्डीति**। प्रिये शंकरे शिरसा चरणस्पृशि कोपापनोदनाय प्रणतिकारिणी सती शंकरमभिव्याप्य जयवतः स्मरस्य विजयस्तम्भ इव चण्डीजङ्घारूपः काण्डो वंशो जयति । स्वतः सुखविशेषजनकतया तुच्छविषयपराङ्मुखस्याप्येतादृश्यवस्थासंपादनादिति भावः । एवं चैहिकामुष्मिकसुखापेक्षया सीमन्तिनीसङ्गसुखेऽधिकतरत्वमावेद्यते ॥

उन्नालनाभिपङ्केरुह इव येनावभाति शंभुरपि ।
जयति पुरुषायितायास्तदाननं शैलकन्यायाः ॥ १९ ॥

**उन्नालेति**। येन शंभुरपि । अपिना विष्णोरनवतारत्वेन नाभिपङ्केरुहत्वायोग्यत्वं व्यज्यते । ऊर्ध्वनालं यन्नाभिपङ्केरुहं तद्वानिव । यद्वा विष्णुरिवेत्यर्थः । एवं च शरीरस्य नालसाम्यदर्शनात्कृशाङ्गीत्वमभिव्यज्यते । अवभाति । पुरुषायितायाः

शैलकन्यायाः । एवं च दार्ढ्यम् । तेन पुरुषायितसंपादनयोग्यत्वं ध्वन्यते । तदाननं जयति । अघटितघटनापटुत्वादिति भावः ॥

अङ्कनिलीनगजाननशङ्काकुलबाहुलेयहृतवसनौ ।
सस्मितहरकरकलितौ हिमगिरितनयास्तनौ जयतः ॥ २० ॥

**अङ्केति** । अङ्के निलीनो यो गजाननस्तच्छङ्कया। स्तनयोः कुम्भिकुम्भसाम्यादिति भावः । आकुलः । कथं मां विहायैनमेव संगोप्य बहुकालं स्तन्यं प्रयच्छतीति धियेति भावः । यद्वा नयनपिधानक्रीडायां गजाननोऽङ्क एव निलीनो न त्वन्यत्र गत इति मत्वेति भावः । आकुलपदेन शीघ्रमविचारितकार्यकारित्वं व्यज्यते । यो बाहुलेयस्तारकजित्तेन हृतवसनौ । गजाननिर्णयार्थमिति भावः । सस्मितः । कथमतिगुप्तयोरप्याकस्मिकप्राकट्यमिति धियेति भावः । यो हरः । एवं च स्वत एव वसनहरणादिना तत्कार्यकारित्वं ध्वन्यते। तेन करकलितौ । करोतीति कर इति स्वतस्तत्कार्यकारित्वेऽपि हरप्रहितत्वेनाकलने दार्ढ्यं द्योत्यते। हिमगिरितनयायाः। एवं च शैलसहितकठिनत्वं द्योत्यते। तेन चावश्यकरकलनयोग्यत्वम्। अत एव हरोऽतिस्मेर इत्यपि युक्तम्। स्तनौ जयतः । भ्रमवतान्येनाविष्कृतत्वेऽप्यन्यस्य सुखसंपादनादिति भावः। यद्वा गजाननशिखिवाहनयोः सकलविघ्ननिवारकत्वकार्यमात्रपुरस्करणीयत्वात्तारकवधद्वारकविश्वसंतोषपोषकत्वनिदानस्तन्यवत्त्वादिति भावः । यद्वा स्मरविरोधिनोऽप्यानन्दजनकत्वादिति भावः ॥

कण्ठोचितोऽपि हुंकृतिमात्रनिरस्तः पदान्तिके पतितः ।
यस्याश्चन्द्रशिखः स्मरभल्लनिभो जयति सा चण्डी ॥ २१ ॥

**कण्ठोचित इति** । आलिङ्गनार्होऽपि । पक्षेऽर्धचन्द्राकारतया कण्ठलक्ष्ययोग्योऽपि । हुंकृतिमात्रेण, न तु करतर्जनादिना । पक्षे बाणादिना । निरस्तः । अत एव यस्याः पदान्तिके । प्रणामार्थमिति भावः । पक्षे वेगवशादिति भावः । स्मरशरसदृशः । अर्धचन्द्रशेखरत्वादिति भावः । स्मरभल्लनिभ इत्यनेन मानापनोदनसमर्थत्वं द्योत्यते । यद्वा स्मरभल्लस्य निभं छद्म । 'निभं छद्मसदृक्षयोः' इत्यभिधानात् । एवं च रूपान्तरसंपादनाद्व्रीळातिशयो द्योत्यते। चन्द्रशिखः शंभुः पतितः । चन्द्रशिख इत्यनेनोद्दीपकचन्द्रस्यापि मानापनोदकत्वान्माने बाहुल्यमभिव्यज्यते । सा चण्डी जयति । मदनार्धनाराचादीनामप्यगणनादिति भावः ॥

देवेऽर्पितवरणस्रजि बहुमाये वहति कैटभीरूपम् ।
जयति सुरासुरहसिता लज्जाजिह्मेक्षणा लक्ष्मीः ॥ २२ ॥

**देव इति** । अर्पितवरणस्रजि । एवं च सज्ञाद्यभावेन तात्त्विकरूपापरिचयो द्योत्यते । बहुमाये । एवं च रूपान्तरग्रहणसामर्थ्यमभिव्यज्यते । देवे विष्णौ । देवपदेन क्रीडारसिकतयानेकविधदेहधारणनिपुणत्वमावेद्यते । कैटभीरूपम् । दैत्यवञ्चनायेति भावः । वहति सति । एवं च प्रात्यक्षिकत्वेनापलापानर्हत्वं व्यज्यते । सुरासुरहसिता । कथं सर्वान्सुरान्विहायायमीदृशो वृत इति । अत एव लज्जाकुटिलेक्षणा । किमियं कामिन्येव पुरुषभ्रमान्मया वृतेति धियेति भावः । लक्ष्मीर्जयति । सर्वोपहासवत्त्वेऽप्यधैर्याकरणादिति भावः ॥

तानसुरानपि हरिमपि तं वन्दे कपटकैटभीरूपम् ।
यैर्यद्बिम्बाधरमधुलुब्धैः पीयूषमपि मुमुचे ॥ २३ ॥

**तानिति** । तान्सकपटत्वेन प्रसिद्धानसुरानपि । सुष्ठु रान्ति ते सुरास्तद्भिन्नान्सर्वदासमीचीनग्राहकानपि वन्दे । पीयूषादप्यधिकमेतस्या अधरामृतमिति तात्त्विकज्ञानेन समीचीनवस्तुग्राहकत्वादिति भावः । तं कपटशून्यत्वेन प्रसिद्धं कपटकैटभीरूपं हरिमपि वन्दे । कपटाज्ञानेऽपि कपटाकरदैत्यवञ्चनानिपुणकपटरूपधारणादिति भावः । यैरसुरैर्यस्याः कैटभ्या लक्ष्म्या अधरमधुनि लुब्धैः । मधुपदमुन्मादजनकतां व्यनक्ति । पीयूषमपि । एवं च परित्यागानर्हत्वेऽपि तत्करणेन कैटभीरूपे विशेषशालित्वं ध्वन्यते ॥

तल्पीकृताहिरगणितगरुडो हाराभिहतविधिर्जयति ।
फणशतपीतश्वासो रागान्धायाः श्रियः केलिः ॥ २४ ॥

**तल्पीति** । तल्पीकृताहिः । एवं च सर्पबाधाया अप्यगणनेन रागातिशयो व्यज्यते । अगणितगरुडः । एवं च सर्वत्र गमनयोग्यत्वेन पक्षित्वेन विवेकशून्यतया वान्यत्रैतत्कथनयोग्यत्वेऽप्येतदगणनयापि स एव द्योत्यते । हाराभिहतविधिः । हारस्य नाभिसंबन्धादिति भावः । आलिङ्गनान्तरभूतस्य त्यागार्हत्वेऽपि तदुपर्येव प्रक्षेपेण केलिज्ञानसंपादनेन लज्जाशून्यत्वेन स एव द्योत्यते । यद्वा कथमद्यापि नापसरतीति क्रोधान्निकटवर्तिहाराभिहननेन हारापायभीतिशून्यत्वेन, अयं च हननक्रोधात्कुत्र कुत्र न वदिष्यतीति ज्ञानहीनतया स एवावेद्यते । शतसंख्याहि-

फणपीतश्वासः । एवं च संख्यायाः पानान्वयो न संभवतीति दूषणमपास्तम् । एवं च मरणभीतिशून्यत्वेन स एव ध्वन्यते । एवंविधा रागान्धायाः केलिः । एवं चान्याभिरङ्गनाभिर्यद्रागप्रकटनं क्रियते तन्मिथ्येति भावः । जयति । एतादृशप्रतिबन्धकसमूहेऽपि जायमानत्वादिति भावः । अत्र तल्पीकृताहिरित्यादिना व्यञ्जनया रागातिशयप्रतिपादनाद्रागान्धाया इत्यस्य न तथा प्रयोजनमित्याभाति ॥

स्मेराननेन हरिणा सस्पृहमाकारवेदिनाकलितम् ।
जयति पुरुषायितायाः कमलायाः कैटभीध्यानम् ॥ २५ ॥

**स्मेरेति** । स्मेरं किंचिद्धास्यवत् । सुखविशेषाविर्भावादिति भावः । यदाननम् । अर्थाल्लक्ष्म्याः । तेन कृत्वाकारवेदिना स्मेराननरूपज्ञापकज्ञानवता हरिणाकलितमनुमितम् । स्मेराननेनेति हरिणेत्यस्यापि विशेषणम् । विपरीतरतकारिण्याः श्रियः सस्पृहम् । एवं च स्वस्यापि सुन्दरत्वेऽपि तद्विषयस्पृहावत्त्वेनानिर्वचनीयरूपशालित्वं कैटभ्यां व्यज्यते । कैटभीध्यानम् । एवं च स्त्रियोऽपि स्त्रीध्यानेनाद्भुतत्वं कैटभीरूपे द्योत्यते । जयति । त्रिभुवनाभिरामया रमयापि क्रियमाणत्वादिति भावः ॥

कृतकान्तकेलिकुतुकश्रीशीतश्वाससेकनिद्राणः ।
घोरितविततालिरुतो नाभिसरोजे विधिर्जयति ॥ २६ ॥

**कृतेति** । कृतं कान्तं मनोज्ञं यत्केलिकुतुकम् । एवं चोत्साहविशेषेण सुरतसंपादनाच्छ्वासबाहुल्यं व्यज्यते । यत्तु कान्तेन विष्णुना सह यत्केलिकुतुकमिति तन्न । अन्येन सहाप्रसक्तेः । कान्तकेलिरित्यनेन सुरतक्रीडवायातीत्यपि न । अक्षक्रीडादेः संभवात् । नाभिसरोज इत्यादिनैव तत्प्रतीतेश्च । यया । एतादृशी या श्रीस्तस्याः शीताः । मदनानलसंतापनिवृत्तेरिति भावः । ये श्वासास्तेषां सेकेन निद्राणः । सेकस्य द्रवद्रव्यीयत्वेन श्वासद्वारा वारिसंबन्धो लक्ष्यते । तेन च सुखनिद्रायोग्यत्वं व्यज्यते । विततालिरुतमेव घोरितं यस्य । नाभिसरोजे विधिर्जगन्निर्माणकर्ता । एवं च श्रमवत्त्वान्निद्रायोग्यत्वं ध्वन्यते । जयति । सरोजशयनशीतमन्दसुगन्धसमीरणसुखस्वापवत्त्वादिति भावः ॥

एकरद द्वैमातुर निस्त्रिगुण चतुर्भुजापि पञ्चकर ।
जय षण्मुखनुत सप्तच्छदगन्धिमदाष्टतनुतनय ॥ २७ ॥

**एकेति** । एकदन्त । द्वैमातुर । पार्वतीगङ्गारूपमातृद्वयवत्त्वात् । निस्त्रिगुण ।

एवं ब्रह्मरूपत्वं द्योत्यते। चतुर्भुजापि पञ्चकर। अपिर्विरोधाभासार्थकः। शुण्डामादाय पञ्चकरत्वम्। अन्यथा तु तस्यास्ति चतुर्भुजत्वम्। षण्मुखनुत। ज्येष्ठत्वादिति भावः। सप्तच्छदगन्धिर्मदो यस्य। अष्टतनुर्महादेवस्तत्तनय। एतादृशस्त्वं जय। संख्याक्रममात्रमत्र॥

मङ्गलकलशद्वयमयकुम्भमदम्भेन भजत गजवदनम्।
यद्दानतोयतरलैस्तिलतुलनालम्बि रोलम्बैः॥ २८॥

**मङ्गलेति**। मङ्गलकलशद्वयरूपौ कुम्भौ यस्य तम्। एवं च विघ्नविनाशनक्षमत्वं ध्वन्यते। गजवदनम्। अदम्भेन। एवं च दम्भेन भजनमनर्थकमित्यावेद्यते। यदीयदानोदकार्थं चञ्चलैः। सौरभ्यशालित्वाद्दानोदकस्येति भावः। तरलपदेन सकलकुसुमगन्धाधिकत्वं दानगन्धे व्यज्यते। रोलम्बैर्भ्रमरैः। तिलसाम्यम्। श्यामत्वादिति भावः। एवं च कुम्भयोर्महत्तरत्वं ध्वन्यते। आलम्बि। गणपतिविषयकोऽत्र भावध्वनिः॥

याभिरनङ्गः साङ्गीकृतः स्त्रियोऽस्त्रीकृताश्च ता येन।
वामाचरणप्रवणौ प्रणमत तौ कामिनीकामौ॥ २९॥

**याभिरिति**। याभिः स्त्रीभिरनङ्गो मदनः साङ्गीकृतः। स्वयं तत्साहाय्यसंपादनादिति भावः। येन मदनेन ताः स्त्रियोऽस्त्रीकृताः। स्वविजयसाधनत्वेनेति भावः। इति वामस्य सुन्दरस्य। समीचीनस्येति यावत्। यदाचरणम्। समीचीनाचरणमित्यर्थः। तत्र प्रवणौ तत्परौ। एवं चाङ्गहीनस्य साङ्गतासंपादनात्, एवमेव स्त्रीत्वेन नायकाधीनानां स्त्रीणां स्वास्त्ररूपतासंपादनेन नायकस्य तदधीनत्वसंपादनात्, उपकारप्रवणत्वमुभयोर्व्यज्यते। अत एवैतादृक्कामिनीकामौ प्रणमत। एवं चैतत्सेवया समीचीनमेव भविष्यतीति ध्वन्यते। यत्राङ्गरहितस्याङ्गवत्तासंपादनात्, स्त्रीणां च स्त्रीभिन्नत्वसंपादनात्, विरुद्धाचरणस्वाभाव्यात्, कामिनीकामौ प्रणमत, एवं चैतयोः संगतिः सतां नोचितेति व्यज्यत इति व्याख्यानं तन्मङ्गलप्रकरणविरोधादसमञ्जसमिवाभाति। यद्वा परस्परमप्येतयोरीदृशविपरीताचरणप्रवणत्वे प्रियान्यस्य तत्करणस्यातिसुगमत्वात्तत्सेवैव समुचितेति ध्वन्यते॥

अथ कवीन्स्तौति—

विहितघनालंकारं विचित्रवर्णावलीमयस्फुरणम्।
शक्रायुधमिव वक्रं **वल्मीकभुवं** कविं नौमि॥ ३०॥

**विहितेति**। शक्रायुधमिव। विहिता घना बहवोऽलंकारा उपमादयो येन तम्।

पक्षे विहितमेघालंकरणम्। विचित्राणां वर्णानामक्षराणां यावली तत्प्रचुरं स्फुरणं स्फूर्तिर्यस्य तम्। पक्षे वर्णा नीलपीतादयस्तत्पङ्क्तिर्विकारः स्फुरणमुत्पत्तिर्यस्य तम्। वक्रं वक्रोक्तिकुशलम्। पक्षे यथाश्रुतम्। वल्मीकभुवं वाल्मीकिम्। शक्रधनुषोऽपि तत एवोत्पत्तिरिति लौकिकम्। कविं काव्यकर्तारं नौमि। रूपकमत्रालंकारः॥

**व्यास**गिरां निर्यासं सारं विश्वस्य भारतं वन्दे।
भूषणतयैव संज्ञां यदङ्कितां भारती वहति॥ ३१॥

**व्यासेति**। व्यासवचसां निर्यासम्। एवं च तत्त्वार्थवत्त्वं सरसत्वं च व्यज्यते। विश्वस्य जगतः सारम्। एवं चेत उत्पन्नपुरुषार्थसाधनत्वं ध्वन्यते। एतादृशं भारतं वन्दे। यदङ्कितां भारतचिह्नितां संज्ञां भूषणतयैव भारती सरस्वती वहति। एवं च भारत्या भूषणरूपतन्नामप्रसिद्धनामवत्त्वप्रतिपादनेन सर्वग्रन्थाधिकत्वमावेद्यते भारते। एवकारेण स्वाभाविकत्वव्युदासः। अन्योऽप्यप्रसिद्धः प्रसिद्धस्य कस्यचिन्नाम्ना प्रसिद्धो भवतीति लौकिकम्। भारतकर्तृत्वेन व्यासस्तुतिरित्यवधेयम्॥

सति काकुत्स्थकुलोन्नतिकारिणि रामायणे किमन्येन।
रोहति कुल्या गङ्गापूरे किं बहुरसे वहति॥ ३२॥

**सतीति**। काकुत्स्थानां कुलम्। तदुन्नतिकारिणि। कुलपदेन सर्वेषामप्युन्नतिसंपादनेन शतकोटिप्रविस्तरत्वं तेन च बहुतरप्रमेयवत्त्वं च व्यज्यते। बहुरसे प्रभूतशृङ्गारादिरसशालिनि। पक्षे बहुजलवति। एवं च तापापनोदकत्वं व्यज्यते। अत एवैतादृशरामायणे सत्यन्यकाव्येन किम्। तेन गतार्थत्वादिति भावः। अत्र दृष्टान्तमाह—गङ्गापूरे वहति सति कुल्याल्पा कृत्रिमा सरित्किं रोहति। काक्वा नेत्यर्थः। न चित्तपथमवतरतीति भावः॥

अतिदीर्घजीविदोषा**द्व्यासेन** यशोऽपहारितं हन्त।
कैर्नोच्येत **गुणाढ्यः** स एव जन्मान्तरापन्नः॥ ३३॥

**अतीति**। अत्यन्तदीर्घजीवित्वदोषात्। चिरकालजीवित्वरूपदोषादित्यर्थः। अतिचिरजीवित्वस्यान्यत्र गुणत्वेऽप्यत्र दोषत्वमिति भावः। दोषपदं परिहरणीयत्वं व्यञ्जयति। व्यासेन यशः। हन्त इति खेदे। अपहारितम्। यशःपदमत्यन्तसंरक्षणीयत्वं व्यञ्जयति। अत एव खेदौचित्यम्। एतदेवाह—स एव व्यास एव

जन्मान्तरमापन्नो गुणाढ्यो बृहत्कथाकर्ता कैर्नोच्येत । अपि तु सर्वैरित्यर्थः । एवं गुणाढ्यव्यवहारे व्यासस्य चिरजीवित्वमेव प्रतिबन्धकं संवृत्तमिति भावः । एवं चैतादृग्यशसि स्पृहा न कृता, किंतु चिरजीवित्व इति महन्मूर्खत्वमावेद्यते व्यासे । तेन च व्यासाधिकत्वं गुणाढ्ये ॥

श्रीरामायणभारतबृहत्कथानां कवीन्नमस्कुर्मः ।
त्रिस्रोता इव सरसा सरस्वती स्फुरति यैर्भिन्ना ॥ ३४ ॥

**श्रीति** । वाल्मीकिव्यासगुणाढ्यान्नमस्कुर्मः । यैर्वाल्मीक्यादिगुणैर्भिन्ना । विलक्षणरीत्यनुसरणादिति भावः । सरसा शृङ्गारादिमती । पक्षे सजला । वाणी सती नदीव त्रिस्रोता गङ्गेव । स्वर्गमृत्युपातालेषु प्रवाहवत्त्वाद्गङ्गायाः । एवं च वाल्मीक्यादिवाचां सकलकल्मषविनाशकत्वं द्योत्यते । स्फुरति । एवं च त्रितयवाचां वास्तवैकरूपत्वमेवेति व्यज्यते । तेन च वाल्मीक्यादित्रितयस्य समानत्वमावेद्यते । यद्वा वाल्मीक्यपेक्षया किंचिन्न्यूनत्वं व्यासे, ततो गुणाढ्य इति ध्वन्यते । पूर्वत्र श्रीपदं त्रिष्वप्यन्वेति, अत्र रामायणमात्रे ॥

साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये ।
शिक्षासमयेऽपि मुदे रतलीलाकालिदासोक्ती ॥ ३५ ॥

**साकूतेति** । साकूतं साभिप्रायम्, मधुरं रसोत्कर्षाधायकरसनिष्ठगुणवत्, कोमलं शब्दगुणशालि एतादृशं यद्विलासशालिन्याः कण्ठकूजितं तत्प्राये । प्रायः-शब्दः क्रमेण बाहुल्यसादृश्योपस्थापकः । रतलीलाकालिदासोक्ती शिक्षासमयेऽपि मुदे । एवं चोभयोः समत्वमिति भावः । एवं च सर्वजनस्याप्युपदेशसमये बहुधा दुःखदत्वेन रतलीलाकालिदासोक्त्योः सुखप्रदत्वेन वाग्विलासाधिक्यं ध्वन्यते ॥

**भवभूतेः** संबन्धाद्भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥ ३६ ॥

**भवेति** । भवभूतेः शिवैश्वर्यस्य संबन्धाद्धारत्येव सरस्वत्येव भूधरभूर्नगेन्द्रकन्या भाति । एवं चाणिमाद्यैश्वर्यान्तर्गतेच्छानभिघातरूपप्राकाम्याद्धारत्या नगेन्द्रकन्यारूपत्वम् । तथा भवभूतेः कवेः । एवं चेशैश्वर्याभेदबोधनेन स्वेच्छानुरूपकार्यकारित्वं व्यज्यते । संबन्धाद्धारत्येव भूधरभूः पर्वतभूमिः । एवं च नान्यथा शङ्कनीयत्वमिति भावः । भाति । अन्यथैतत्कृतकरुणरसप्रधाने 'अपि ग्रावा रोदित्यपि दलति

वज्रस्य हृदयम्' इत्युत्तरचरित्रीयपद्ये ग्रावा शैलः। 'ग्रावाणौ शैलपाषाणौ' इत्यमरः। किमिति रोदिति। यद्वा भवभूतेः संबन्धादित्यस्य भवैश्वर्याविनाभावादित्यर्थः। भूधरभूः शैलतनया भारती भाति। सरस्वतीरूपेण दृश्यत इत्यर्थः। एवं च यत्रेशैश्वर्यं तत्र शैलसुतयावश्यं स्थेयमिति नियमादीशैश्वर्यवति कवौ शैलसुता सरस्वतीरूपेणावस्थितेति भावः। एवं चैतत्कवेर्दक्षिणामूर्त्युपासकत्वं व्यज्यते। अत एव भवस्य शंभोर्भूतिरैश्वर्यं यस्मिन्निति नाम्नि व्युत्पत्तिरपि संगच्छते। अथवा कवौ भवभूत्यभेदबोधनेन पार्वतीसत्त्वमावश्यकम्। विपक्षे तर्कमाह—अन्यथा। एतत्कृतकारुण्ये। एवं चान्यैर्बहुभिः करुणरसप्रधानानि काव्यानि विहितानि, परंतु न तत्र शैलरोदनमिति भावः। ग्रावा किमिति रोदिति। एवं चैतत्कृतकारुण्ये जामातृसंबन्धेन शैलस्यापि रोदनमिति भावः। अथवा। भवभूतेः शिवैश्वर्यस्य संबन्धात्। तत्कृपात इत्यर्थः। भारती भूधरभूरेव। भूधर इति कविनाम। भवभूतिरिति 'गिरिजायाः कुचौ वन्दे भवभूतिसिताननौ' इति पद्यकरणोत्तरं पदवीनाम। तस्माद्भवत्वे दृश्येव जाता। एवं च सरस्वतीप्रचारस्तत एवेत्यन्यकविव्यतिरेको ध्वन्यते। नन्वेतत्कवेर्भूधरत्वे किं प्रमाणमत आह—अन्यथा। एतत्कवेर्भूधरत्वाभावे। एतत्कृतकारुण्ये ग्रावा पाषाणः कथं रोदिति। एवं चैतत्कृतकारुण्योत्तरकालीनपाषाणरोदनस्यैतत्संबन्धाभावेऽन्यथानुपपत्त्या कवौ भूधरत्वसिद्धिः। एवं च जन्यजनकभावसंबन्धाद्रोदने युक्तैव। एवकार इवार्थ इति केचित्॥

जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि।
प्रागल्भ्यमधिकमाप्तुं वाणी **बाणो** बभूवेति॥ ३७॥

**जातेति**। प्राक्पूर्वं यथा शिखण्डिनी द्रुपदपुत्री शिखण्डी द्रुपदपुत्ररूपा बभूव, तथा वाणी सरस्वत्यधिकप्रागल्भ्यप्राप्त्यर्थं बाणः कादम्बरीकर्तृरूपा बभूव। पवर्गतृतीयान्तस्थवबकारयोरभेदादिति भावः। एवं च सरस्वतीतोऽधिकत्वं बाणे द्योत्यते। वस्तुतस्तु बवयोरैक्ये दोषाद्भेद एव॥

यं गणयन्ति गुरोरनु यस्यास्ते धर्मकर्म संकुचितम्।
कविमहमुशनसमिव तं तातं **नीलाम्बरं** वन्दे॥ ३८॥

**यमिति**। यं गुरोः प्रभाकरात्। एवं च तत्र प्रभाकरतन्त्रनिपुणत्वं तातस्याद्योत्यते। पक्षे बृहस्पतेः। अनु पश्चाद्गणयन्ति। यस्यास्ते नाशे। पक्षे सूर्यमण्डल-

सांनिध्येनादर्शने। धर्मकर्म संकुचितम्। तातसदृशस्यान्यस्य धर्मकर्मप्रवर्तकस्याभावादिति भावः। पक्षे मल्मास इव शुक्रास्तेऽपि केषांचित्कर्मणां निषेधादिति भावः। यद्वा यस्य तातस्य धर्मकर्म। एवं चाधर्मकर्मणोऽभावो व्यज्यते। संकुचितं सम्यक् कौ पृथिव्यां चितं व्याप्तम्। आस्ते। एवं च कर्मठत्वेन सर्वत्र तातप्रसिद्धिरिति भावः। यद्वा यस्याधर्मकर्मविषये संकुचितं संकोचः। भीतिरिति यावत्। आस्ते। कविं काव्यकर्तारम्। पक्षे तन्नामानम्। उशनसमिव शुक्रमिव। तं प्रसिद्धं तातं नीलाम्बराभिधं वन्दे॥

सकलकलाः कल्पयितुं प्रभुः प्रबन्धस्य कुमुदबन्धोश्च।
सेन[1]कुलतिलकभूपतिरेको राकाप्रदोषश्च॥ ३९॥

**सकलेति**। प्रबन्धस्य चतुःषष्टिकलाः। कुमुदबन्धोश्चन्द्रस्य च षोडशकलाः। कल्पयितुं वक्तुं कर्तुं वा। पक्षे दर्शयितुम्। सेनकुलतिलकभूपतिः सेतुकर्ता प्रवरसेननामा राजा। पौर्णमासीप्रदोष एकः प्रभुः समर्थः। नान्य इत्यर्थः॥

काव्यस्याक्षरमैत्रीभाजो न च कर्कशा न च ग्राम्याः।
शब्दा अपि पुरुषा अपि साधव एवार्थबोधाय॥ ४०॥

**काव्यस्येति**। अक्षराणां वर्णानां मैत्रीमेकवर्गपठितत्वादिरूपाम्। एकस्थानकत्वे सत्येकप्रयत्नकत्वरूपा वा भजति तस्य। एवं च बन्धविशेषशालित्वं व्यज्यते। पुरुषविशेषणमप्यक्षरमैत्रीभाज इति। काव्यस्य योजनाविशेषवच्छब्दार्थोभयस्य अर्थबोधाय। कर्कशाः श्रुतिकटवः। तेषां रसापकर्षकत्वादिति भावः। पक्षे क्रूरमतयः। एवं च परोक्तिखण्डनमात्रनिपुणत्वं च व्यज्यते। न च ग्राम्या अविदग्धप्रयुक्ताः। एवं च चारुत्वाभावो व्यज्यते। पक्षे ग्राममात्रवासिनः। एवं च काव्यवासनावासितान्तःकरणत्वाभावो ध्वन्यते। शब्दा अपि पुरुषा अपि। किं तु साधव एव। व्याकरणसिद्धा एव असाधुत्वज्ञानस्यार्थबोधप्रतिबन्धकत्वात्। पक्षे निर्मलमतय एव। एवं चार्थप्रतिबिम्बभवनयोग्यत्वं द्योत्यते। यद्वा काव्यार्थवासनाशालिन इत्यर्थः। एवं चान्येषां काव्यबोधानर्हत्वमिति भावः॥

---

१. सेनकुलं कायस्थकुलं वङ्गदेशप्रसिद्धम्. तत्तिलकायमानो भूपतिर्लक्ष्मणसेनः. यत्सभायां गोवर्धनाचार्य आसीत्. न तु सेतुबन्धकाव्यकर्ता कश्मीरमहाराजः प्रवरसेनः. स तु क्षत्रियकुलावतंस आसीदिति राजतरङ्गिण्यां स्फुटमेव.

वंशे घुण इव न विशति दोषो रसभाविते सतां मनसि।
रसमपि तु न प्रतीच्छति वहुदोषः संनिपातीव ॥ ४१ ॥

**वंश इति**। वंशे वेणौ घुण इव कीट इव रसभाविते शृङ्गारादिभावनावति। पक्षे जलातिशयसंबन्धवति। औषधीद्रवलेपवतीति कश्चित्। सतां मत्सररहितानां सहृदयानां वा मनसि। मनसीत्येकवचनेन समीचीनमनसामेकव्यसनशालित्वं ध्वन्यते। दोषो न विशति। एवं च सुतरामवस्थित्यभावो द्योत्यते। वहुदोषो दोषैकदृक्। पक्षे 'क्षणे दाहः क्षणे शीतमस्थिसंधिशिरोरुजः' इत्यादिबहूपद्रववान्। संनिपातीव युगपत्प्रकुपितवातपित्तादिमान्। रसमपि शृङ्गारादिकमपि। एवं चावश्येच्छायोग्यत्वं व्यज्यते। पक्षे मृगाङ्कादिकमपि। एवं च का वार्ता क्वाथादेरिति भावः। न प्रतीच्छति न गृह्णातीति किं वक्तव्यमिति भावः॥

विगुणोऽपि काव्यबन्धः साधूनामाननं गतः स्वदते।
फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति ॥ ४२ ॥

**विगुण इति**। विगुणोऽपि ये ये काव्ये गुणास्तदन्यतमशून्योऽपि। काव्यबन्धः। अत्र वन्धपदमधिकमाभाति। यद्वा वन्धो रचनामात्रम्। साधूनाम्। एवं च गुणवत्तासंपादनकर्तृत्वं ध्वन्यते। स्वदते सुखसंपादको भवति। सुवंशैः सरलवेणुभिरनूद्यमानः। एवं चानुवादसंपादनेऽपि सुजनदुर्जनयोरन्तरं भवतीति भावः। फूत्कारोऽपि। एवं च सुखाजनकत्वं ध्वन्यते। श्रुतिं हरति श्रवणसुखसंपादको भवति॥

स्वयमपि भूरिच्छिद्रश्चापलमपि सर्वतोमुखं तन्वन्।
तितउस्तुषस्य पिशुनो दोषस्य विवेचनेऽधिकृतः ॥ ४३ ॥

**स्वयमिति**। स्वयं भूरिच्छिद्रोऽपि बहुवाच्योऽपि। एवं च स्वदोषेषु दर्शनयोग्यत्वेऽपि तद्दर्शनाभावेन भ्रान्तत्वमावेद्यते। पक्षे वहुरन्ध्रोऽपि। सर्वतोमुखं सकलजनसमक्षम्। पक्षे सर्वदिग्विषयम्। चापलं मौखर्यम्। एवं च जनभीतिशून्यत्वं ध्वन्यते। पक्षे चाञ्चल्यम्। तन्वन्विस्तारयन्। एवं च विरत्यभावो ध्वन्यते। तितउः। 'तितउर्ना चालनी स्त्रियाम्' इत्यभिधानम्। पिशुनः परोत्कर्षासहिष्णुः। विवेचने निर्णये। पक्षे स्वीकारे। अधिकृतो दत्ताधिकारः। एवं च गुणादिकं विहाय दोषमात्राङ्गीकर्तृत्वं दुष्टानामिति भावः॥

अन्तर्गूढानर्थानव्यञ्जयतः प्रसादरहितस्य।
संदर्भस्य नदस्य च न रसः प्रीत्यै रसज्ञानाम्॥ ४४॥

**अन्तरिति**। अभ्यन्तरं गूढस्थितिम्। पक्षे निलीनान्। अर्थान्प्रतिपाद्यविषयान्। पक्षे पदार्थान्। अव्यञ्जयतो व्यञ्जनाविषयानकुर्वतः। पक्षेऽप्रकाशयतः। अत एव प्रसादेन काव्यगुणेन। पक्षे निर्मलतया। रहितस्य। संदर्भस्य काव्यस्य। नदस्य च। पुंस्त्वनिर्देशेन निर्मलत्वस्यावश्यापेक्षणीयत्वमित्यावेद्यते। यद्वा नदत्वेन विरलतया तत्तुल्यप्रतिपादनात्काव्येऽतिविरलत्वमावेद्यते। उक्तं हि [आनन्दवर्धनेन]—'द्वित्रा एव कवयो द्वित्राण्येव काव्यानि' इति। रसः शृङ्गारादिः। पक्षे जलम्। रसज्ञानाम्। एवं चान्येषां प्रीत्यजनकत्वेऽपि न काचित्क्षतिरिति भावः। प्रीत्यै न॥

यदसेवनीयमसताममृतप्रायं सुवर्णविन्यासम्।
सुरसार्थमयं काव्यं त्रिविष्टपं वा समं विद्मः॥ ४५॥

**यदिति**। यदसतां सहृदयभिन्नानाम्। पक्षे पापवताम्। असेवनीयम्। अमृततुल्यम्। पक्षेऽमृतबहुलम्। सुवर्णानां शोभनाक्षराणां विन्यासो ग्रथनं यत्र। 'वर्णं तु चाक्षरे' इत्यमरः। पक्षे सुवर्णस्य हेम्नो विन्यासो रचनादि यत्र। शोभनरसार्थोभयप्रचुरम्। पक्षे देवसमूहबहुलम्। काव्यं त्रिविष्टपं स्वर्गं वा समं विद्मः। एवं चात्र नान्यथाभाव आशङ्कनीय इति भावः। एवं च स्वर्गार्थं यथा सद्भिर्यत्नः क्रियते तथा काव्यार्थं विधेय इति व्यज्यते॥

सत्कविरसनाशूर्पीनिस्तुषतरशब्दशालिपाकेन।
तृप्तो दयिताधरमपि नाद्रियते का सुधा दासी॥ ४६॥

**सदिति**। सत्कवेः। एवं चासत्कवेर्निरासः। रसनैव शूर्पयल्पं शूर्पम्। 'प्रस्फोटनं शूर्पमस्त्री' इत्यमरः। यथा स्वल्पशूर्पेण निस्तुषता जायते न तथा महाशूर्पेणेति स्त्रीसंप्रदायः। तया निस्तुषतरो निर्दोषः शब्दरूपो यः शालिस्तत्पाकेन। परिणतनिर्दोषकाव्यास्वादेनेत्यर्थः। तृप्तो दयितायाः। एवं चातिस्पृहणीयत्वमधरे ध्वन्यते। अधरमप्यत्युत्कृष्टतां व्यञ्जयति। नाद्रियते का सुधा दासी। एवं च माध्वीकादेः कुत्र गणनेति भावः। एवं च सुधातोऽधरे, ततोऽपि सत्काव्येऽधिकत्वं ध्वन्यते। एवं च स्वर्गार्थं यत्नं विहाय काव्यार्थमेव स विधेय इति ध्वन्यते। अत्र च 'शरीरं

तावदिष्टार्थव्यवच्छिन्ना पदावली' इति दण्डिमतेनार्थविशेषविशिष्टशब्दस्यैव काव्यत्वमिति । प्रदीपकृन्मतेन च शब्दमात्रोपादानम् ॥

अकलितशब्दालंकृतिरनुकूला स्खलितपदनिवेशापि ।
अभिसारिकेव रमयति सूक्तिः सोत्कर्षशृङ्गारा ॥ ४७ ॥

**अकलितेति**। न कलिता शब्दस्यालंकृतिर्यया । अनुप्रासादिशब्दालंकृतिशून्येत्यर्थः । एवं चार्थालंकारादिमत्त्वं व्यज्यते। पक्षेऽकलितः शब्दो ययैतादृश्यलंकृतिर्भूषणं यस्याः । सशब्दभूषणवत्त्वेऽन्यस्य ज्ञानं भविष्यतीति धियेति भावः । अनुकूला द्रुतं रसप्रत्यायिका । पक्षे नायकचित्तानुकूल्यवती । स्खलितः पददार्ढ्यशून्यः । कोमल इति यावत् । पदानां सुप्तिङ्वतां निवेशो ग्रथनं यस्याः सा । एवं च गौडीरीतियुक्तेति ध्वन्यते । पक्षे स्खलितं स्थानादन्यत्र पतनम् । एवं च संकेतगमनं सत्वरमावेद्यते । पदनिवेशश्चरणविन्यासः । यद्वानुकूलानि स्फुटमर्थप्रतीतिजनकान्यस्खलितानि व्याकरणनिष्पन्नानि । एवं च नेयार्थासाधुत्वशून्यत्वं द्योत्यते । यानि पदानि तत्संनिवेशवती । पक्षेऽनुकूलानि द्रुतं संकेतप्रापकाणि स्खलनहीनानि यानि पदानि तद्विन्यासवती । अपिरनास्थायाम् । एवं च गुणदोषाभावयोः संपादने नात्यन्तमाग्रह इति भावः । सोत्कर्षशृङ्गारोत्कर्षशालिशृङ्गाररसवती । पक्षेऽहमस्यायं ममेति रतिपरिपोषवती अभिसारिकेवाभिसरणाभिसारणान्यतरवतीव । उक्तं च—'या चार्ताभिसरेत्कान्तं सारयेद्वाभिसारिका' इति । एवं च प्रेमातिशयो व्यज्यते । सूक्तिः काव्यम् । पक्षे शोभनोक्तिमती । रमयति । एवं च काव्ये शब्दालंकृतिदोषाभावसत्त्वसंपादनमप्रयोजकम् । अपि तूत्कृष्टशृङ्गारसंपादनमेवोचितमिति व्यज्यते । यद्वा शब्दालंकृतिशून्या सदोषपदविन्यासापि सोत्कर्षशृङ्गारा सूक्ती रमयति । शब्दस्य प्राधान्यात्तदलंकारस्यावश्यकत्वेऽपि तदभावे दोषराहित्यस्यावश्यकत्वेऽपि केवलोत्कृष्टशृङ्गारवत्त्वेनैव चमत्कारातिशयजनकत्वं काव्यस्येति भावः । एवं च शृङ्गारादिरसवत्त्वं काव्येऽवश्यमपेक्षितमिति व्यज्यते । अत एव 'नीरसो हि निबन्धो यः सोऽपशब्दो महाकवेः । स तेनाकविरेव स्यादन्येनास्मृतलक्षणः ॥' इति ध्वनिकृता रसस्य प्राधान्यमभ्यधायि । एवं च सर्वरसप्रधानीभूतशृङ्गारवत्त्वमत्यन्तोत्कृष्टमिति तात्पर्यार्थः ॥

अध्वनि पदग्रहपरं मदयति हृदयं न वा न वा श्रवणम् ।
काव्यमभिज्ञसभायां मञ्जीरं केलिवेलायाम् ॥ ४८ ॥

**अध्वनीति**। अध्वनि व्यङ्ग्यार्थशून्यम्। यत्तु ध्वनिरुत्तमं काव्यं तद्भिन्नमित्यर्थ

इति तत्र । गुणीभूतव्यङ्ग्यादेरपि हृदयाह्लादजनकत्वात् । पक्षे शिञ्जितशून्यम् । पदग्रहपरमनुप्रासमात्रार्थं पदग्रहः परमुत्कृष्टो यत्र । पक्षेऽत्यन्तचरणसंलग्नम् । काव्यमभिज्ञसभायाम् । एवं चानभिज्ञसभायां हृदयाद्यानन्दजनकत्वेऽपि न किंचित्फलमिति भावः । हृदयं वा न मदयति, श्रवणं वा न मदयति । एवं च श्रोतुरुभयान्यतरदप्यानन्देन विषयान्तरस्फूर्तिशून्यं न करोतीति भावः । अत्र हृदयं श्रवणं वा न मदयतीत्येतावतैव सिद्धे द्वितीय 'न वा' इत्यस्य न तथा प्रयोजनमाभाति । श्रवणं श्रोतुर्हृदयं वक्तुर्न मदयति । 'आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्' इत्याद्युक्तेरिति व्याख्याने वाकारद्वयनञ्द्वययोरानर्थक्यमाभाति । मञ्जीरं क्रीडाकाले न मदनाविर्भाववन्तं करोतीत्यर्थः । काव्यं हृदयं न मदयति मञ्जीरं श्रवणं न मदयतीति व्याख्यायां वाकारद्वयमनर्थकमाभाति । अत्रेदमवधेयम्—व्यङ्ग्यार्थशून्यं काव्यमेव नास्ति । न च 'अव्यङ्ग्यं त्ववरं स्मृतम्' इत्युक्त्या व्यङ्ग्यात्यन्ताभाववत्यपि काव्यत्वमस्तीति वाच्यम् । तदुदाहरणे 'स्वच्छन्द–' इत्यादि पद्ये मन्दाकिनीविषयकरत्याख्यभावादिव्यङ्ग्यस्य सत्त्वात् । किं बहुना । 'स कोऽपि विषयो नास्ति यत्र व्यङ्ग्यं न भासते । समयादेर्विशेषस्य ह्यभावे हेतुता मता ॥' अत एव 'प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते: । उभे काव्ये तदन्यद्यत्तच्चित्रमभिधीयते ॥' इति ध्वनिकृता [ श्रीमदानन्दवर्धनाचार्येण ] अभ्यधायि । यद्वा काव्यं काव्यत्वाभिमतम् ॥

आस्वादितदयिताधरसुधारसस्यैव सूक्तयो मधुराः ।
अकलितरसालमुकुलो न कोकिलः कलमुदञ्चयति ॥ ४९ ॥

**आस्वादितेति** । आस्वादितः । न तु पीतः । एवं चाधरपानेऽत्यन्ताधरपाने वा कीदृङ्माधुर्यमुत्पत्स्यत इति न विद्म इति भावः । दयिताधररूपसुधारसो येन तस्यैव । एवं च नान्यस्येति भावः । यद्वा मधुरा एवेति योज्यम् । एवं चामधुराणां व्यवच्छेदः । यद्वास्वादितो दयिताधरसुधारसो येन तस्यैव । एवं च नृदेहेन दयिताधरपानं विधाय पश्चाद्देवरूपेणामृतं निपीयैतदुभयाधिकतररसवत्काव्येच्छया कविर्भवतीति भावः । एवं च दयिताधरास्वादादेर्हेतुत्वप्रतिपादनादवाप्तकार्यस्य कारणेऽनादरवत्काव्यास्वादवतः सकलविषयास्वादमौलिभूतदयिताधररसास्वादादावप्यनादर इति द्योत्यते । एवं च काव्यास्वादे ब्रह्मरसरूपता द्योत्यते । सूक्तयः काव्यानि । मधुराः । एवं च दयिताधरसुधारसयोरधिकतरत्वस्य काव्यसामान्येऽभि-

धानेन तद्विशेषोत्तमकाव्येऽत्यन्तविशेषस्ततो ध्वन्यते। अत्र दृष्टान्तमाह—अनास्वादितचूतमुकुलः। मुकुलपदेन रससंभृतत्वं व्यज्यते। कोकिलः कलं मधुरं न वदति। यद्वा सूक्तय उत्तमकाव्यानि॥

बालाकटाक्षसूत्रितमसतीनेत्रत्रिभागकृतभाष्यम्।
कविमाणवका दूतीव्याख्यातमधीयते भावम्॥ ५०॥

**बालेति।** लोकव्यवहारज्ञानस्य काव्यहेतुत्वमित्याह—बालायाः कटाक्षेण सूत्रितम्। सूचितमित्यर्थः। एवं च लज्जावत्त्वेन प्राकट्यसंपादनायोग्यत्वम्। अत्र बालापदेनाल्पवयस्काभिधीयते। न स्वीयामेदरूपा। असतीत्याद्यर्थविरोधात्। सख्या असतीत्वेऽपि नायिकायाः स्वीयत्वाक्षतिरित्यपि केचित्। असत्या नेत्रत्रिभागेण बहुलनेत्रव्यापारेण कृतभाष्यम्। कृतकिंचित्प्राकट्यम्। दूतीव्याख्यातम्। दूत्या वचनवृत्त्याभिहितम्। भावमभिप्रायम्। कविमाणवकाः कवयो माणवका इव। एवं चाज्ञत्वं द्योत्यते। अधीयते। एवं चातितीक्ष्णमतिभिः सूत्रेण ततोऽल्पमतिभिर्व्याख्यानेन यथावबुध्यते ग्रन्थादि तथा तीक्ष्णमतिभिः कैश्चित्कविभिः स्वल्पव्यवहारज्ञानेन ततोऽल्पमतिभिरधिकतरज्ञानेन काव्यं क्रियत इति व्यवहारज्ञानं न कुत्रापि व्यभिचरतीति ध्वन्यते। यद्वान्यप्रमेयहरणशीलान्कवीन्निन्दति। दूतीव्याख्यातमित्यनेनैतस्मात्पदादयमर्थो बोध्य इति नियमसहायशक्तिविषयमिति व्यज्यते। शक्तेरतिस्थूलमतिविषयत्वात्। असतीनेत्रत्रिभागकृतभाष्यमित्यनेन जघन्यलक्षणावृत्तिविषयमिति द्योत्यते। लक्षणावृत्तेः किंचित्स्थूलमतिविषयत्वात्। बालाकटाक्षसूत्रितमित्यनेन व्यञ्जनावृत्तिविषयमिति व्यज्यते। व्यञ्जनावृत्तेरतिसूक्ष्ममतिविषयत्वात्। भावमर्थम्। अर्थादन्यकविनिबद्धम्। येऽधीयते स्वकाव्यविषयीकुर्वन्ति न ते कवयः। किं तु तेषु ते बालाः। मूर्खा इत्यर्थः। एवं च परकाव्यस्पृष्टवाच्यलक्ष्यव्यङ्ग्यार्थास्पर्शित्वं स्वकाव्यस्य ध्वन्यते। यद्वा बालाकटाक्षसूचनादिव्यापारप्रकटनार्थस्य कविमाणवककाव्यविषयत्वं कवीनां त्वत्यन्तनिगूढार्थोऽपि काव्यविषय इति स्वग्रन्थेऽपि निगूढार्थविषयत्वं ध्वन्यते। अथवा कवयः सर्वे बालका इव। एवं च बालाकटाक्षसूत्रितमित्यादिना नायिकया स्वेच्छया प्रकटीकृतभावस्याभिज्ञत्वं कवीनाम्। न तु तदन्तर्गताभिप्रायज्ञानवत्त्वमिति नायिकाधिक्यवर्णनेन तद्विषयशृङ्गारवर्णनं सर्वरसवर्णनापेक्षया कठिनतरमिति व्यज्यते। तद्वत्त्वेन स्वग्रन्थाधिक्यं च। अत एव 'शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धनस्पर्धी कोऽपि न विश्रुतः' इत्यभाणि जयदेवेन॥

स्वकीर्त्यनुवृत्तये स्वनाम दर्शयन्नेवेतरार्यावैलक्षण्यं स्वार्यास्वाह—

मसृणपदरीतिगतयः सज्जनहृदयाभिसारिकाः सुरसाः।
मदनाद्वयोपनिषदो विशदा गोवर्धनस्यार्याः॥ ५१॥

**मसृणेति**। मसृणानां स्निग्धानाम्। कोमलानामिति यावत्। पदानां विभक्त्यन्तानां रीतिर्वैदर्भ्यादिस्तस्या गतिः प्राप्तिर्यासु ताः। तद्वत्य इत्यर्थः। पक्षे कोमलचरणविन्यासशालिगतयः। मन्थरगतय इत्यर्थः। सज्जनहृदयमनुसरन्ति। एवं च सहृदयहृदयसमधिगम्यार्था इति भावः। एवं च दुर्हृदयानामत्र नाधिकार इति ध्वन्यते। पक्षे सज्जनस्य हृदयमभिसारयन्ति। स्वाधीनताभाजनं कुर्वन्ति ताः। सुष्ठु रसः शृङ्गारादिर्यासु ताः। पक्षे आसक्तिविशेषवत्यः। मदनाद्वैतोपनिषदः। उपनिषद इत्यनेन मदनोद्दीपकतातिशयशालित्वमावेद्यते। पक्षे संनिधिमदनसत्त्वोक्त्या तस्मिन्नाज्ञाकारित्वं ध्वन्यते। विशदाः प्रसादरूपगुणवत्यः। पक्ष उज्ज्वलवेषाः। आर्याः। आर्या इति च्छन्दोनाम। पक्षे श्रेष्ठाः। गोवर्धनस्य। गोवर्धन इति कविनाम॥

वाणी प्राकृतसमुचितरसा बलेनैव संस्कृतं नीता।
निम्नानुरूपनीरा कलिन्दकन्येव गगनतलम्॥ ५२॥

**वाणीति**। वाणी। प्राकृतकाव्ये सम्यगुचितो रसो यस्याः। एतादृश्येव बलेन बलात्कारेण। पक्षे बलरामेण। एवकारोऽत्रैवान्वेति। संस्कृतं नीता। निम्नानुगामिस्वभावजला कालिन्दी गगनतलमिव। एवं च प्राकृतकाव्ये सुरसतासंपादनं सुगमतरम्, संस्कृतकाव्ये तत्कठिनतरमिति द्योत्यते। तेन स्वयं तत्संपादनेन स्वस्मिन्नाधिक्यमावेद्यते। यद्वा वाण्याः स्वभाव एवायं यत्प्राकृतकाव्ये सरसतामाप्नोतीति प्राकृतकाव्यकरणादर एव समुचितः, तथापि संस्कृतकाव्य एवादरो मया विहितस्तत्र कदाचिद्यदि तथाविधसुरसताभावो भविष्यति स च तत्रभवद्भिः क्षन्तव्य इति ध्वन्यते। अथवा प्राकृतकाव्यसमुचितरसा वाणी प्राकृतसमुचितरसैव। प्राकृतानां साधारणजनानां समुचितः। सुखावह इत्यर्थः। रसो यस्याः। अतो बलेन प्राकृतसप्तशत्यादितिरस्कारेण संस्कृतं नीता। यद्वा प्राकृते साधारणजने सम्यगुचितः। अत्यन्त इत्यर्थः। रसः प्रीतिर्यस्याः एतादृश्यपि बलात्कारेण

१. हालापरनाम्ना सातवाहनकविना प्रणीतां प्राकृतगाथासप्तशतीमालोक्येयं सप्तशती श्रीगोवर्धनाचार्येण प्रणीतेति वाणीत्यार्ययां सूचितम्.

संस्कृतं साधुरूपं प्रापिता । एवं च नीचाभिलाषिण्याः सद्वृत्ततासंपादनं पुरुपार्थं इति भावः । निम्नानुरूपनीरा कलिन्दकन्येव । एवं च विवेकशून्यत्वं ध्वन्यते । तेन नीचानुगामि रसशालितायोग्यत्वम् । गगनतलमत्युच्चदेशं नीता । एवं च प्राकृतसंस्कृतयोर्भूतलगगनतलतुल्यताप्रतिपादनेन प्राकृतात्संकृतेऽत्यन्ताधिक्यमावेद्यते ॥

आर्यासप्तशतीयं प्रगल्भमनसामनादृता येषाम् ।
दूतीरहिता इव ते न कामिनीमनसि निविशन्ते ॥ ५३ ॥

**आर्येति** । इयमार्याणां सप्तशती येषां प्रगल्भमनसाम् । यैः प्रगल्भमनोभिरित्यर्थः । एवं चाप्रगल्भमनोभिरादरेऽनादरे वा कृते न किंचित्फलमिति भावः । दूतीरहिता इव ते न कामिनीमनसि निविशन्ते । एवं चेतोऽन्यत्र किंचिच्चातुर्यजनकमिति व्यज्यते ॥

रतरीतिवीतवसना प्रियेव शुद्धापि वाङ्मुदे सरसा ।
अरसा सालंकृतिरपि न रोचते शालभञ्जीव ॥ ५४ ॥

**रतरीतीति** । रतरीतौ वीतं वसनं यस्याः सा । रसाविर्भावादिति भावः । एवं चालंकारभ्रंशादेः का वार्तेति भावः । प्रियेव शुद्धापि । अनुप्रासोपमाद्यलंकाररहितापि । वाणी संतोषाय । अत्र हेतुमाह—सरसा शृङ्गारादिमती । पक्षे शृङ्गाररसवती । रसशून्यालंकृतियुतापि । पक्षे कटककुण्डलयुतापि । शालभञ्जीव प्रतिमेव । न रोचते । एवं च रसस्य प्राणरूपत्वं ध्वन्यते । एवं च निरलंकारस्यापि काव्यत्वमिति मिश्ररुचिनाथमतेन । अत एव ताभ्यां 'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः । येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥' इति निरलंकारोदाहरणमभ्यधायि । वस्तुतस्त्वेतदुभयोदाहृतपद्येऽपि सर्वालंकारमौलिमणिरूपातिशयोक्तेर्विद्यमानत्वात् । उक्तिवैचित्र्यरूपालंकारविरहे काव्यत्वस्यासंभवात् । 'काव्यं ग्राह्यमलंकारात्' इत्यलंकारस्य काव्यव्यवहारप्रयोजकत्वाभिधानाच्च । रसवति काव्ये स्फुटालंकारराहित्येऽपि न चमत्कारहानिरिति रसवत्त्वस्याधिक्यप्रतिपादनमात्रे तात्पर्यम् । 'अकलित–' इत्यादि पद्ये शृङ्गारोत्कर्षमात्रस्य प्राधान्यमित्यर्थः । अत्र तु रसमात्रस्य तदिति भावः ॥

इति श्रीमद्गोदावरीपरिसरालंकृतपुण्यस्तम्भस्थितिविराजमाननीलकण्ठपण्डिततनूजबालोपण्डितात्मजतिमाजीपण्डिताङ्गजानन्तपण्डितविरचितगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपने ग्रन्थारम्भोचितव्रज्याव्याख्या समाप्ता ।

---

अकारव्रज्या ।

कश्चिद्यौवनभराक्रान्तां प्रपापालिकामालोक्य तां प्रत्याह—

अवधिदिनावधिजीवाः प्रसीद जीवन्तु पथिकजनजायाः ।
दुर्लङ्घ्यवर्त्मशैलौ स्तनौ पिधेहि प्रपापालि ॥ १ ॥

**अवधीति** । प्रपा जलदानस्थानं तद्रक्षणकर्त्रि । एवं च धार्मिकत्वं व्यज्यते । तेन च पथिकजनजाया न हन्तव्येत्युपदेशदानयोग्यत्वम् । जीवनरक्षणकर्त्र्या जीवनविनाशकर्तृत्वमनुचितमिति वा व्यज्यते । प्रसीद । एवं च बलात्कारानर्हत्वं ध्वन्यते । किं प्रसन्नतायाः फलमित्यत आह—स्तनौ पिधेहि । मार्गान्तरेणानेनैव वा मार्गेण झटिति कुतो न गम्यत इत्यत्र हेतुगर्भं विशेषणमाह—दुर्लङ्घ्यौ च तौ वर्त्मशैलौ च । एवं च मार्गान्तराभावादुल्लङ्घयितुमशक्यत्वाच्चैतत्पिधानमावश्यकमिति द्योत्यते । किं पिधानफलमत आह—अवधिदिनावधि जीवो जीवनं यासां ताः पथिकजनजाया जीवन्तु । एवं च त्वत्कुचकनकमहीधरदर्शनलुब्धैः पथिकैरत्रैव कालातिवाहने कृतेऽवधिदिनातिक्रमे तत्कामिनीजनस्य मरणमेव भविष्यतीति भावः ॥

कृतपरिणयान्तरं नायकमसूयमानां नायिकां काचिदुपदिशति—

अतिवत्सला सुशीला सेवाचतुरा मनोऽनुकूला च ।
अजनि विनीता गृहिणी सपदि सपत्नीस्तनोद्भेदे ॥ २ ॥

**अतीति** । गृहिणी प्रथमस्त्री । सपत्नीस्तनप्रादुर्भावे सपदि । एवं च किंचिद्विलम्बे को वेद किं भविष्यतीति भीतिशालित्वं ध्वन्यते । अतिस्नेहवती । समीचीनस्वभावा । सेवानिपुणा । नायकमनोगतकारिणी नम्रा च । जाता । एवं च पूर्वं सपत्नीसंपादनदुःखवत्तया न्यूनस्नेहम्, सपत्नीतर्जनादिना दुःशीलताम्, इयमेव सेवां करिष्यतीति सेवामौढ्यम्, अत एव मनःप्रातिकूल्यम्, किं करिष्यत्ययमतः परं ममेत्यविनीततामकरोत् । सपत्नीतारुण्योद्गमसमय एवायमस्यामत्यन्तासक्तः स्यादिति भियातिवात्सल्यादीति भावः । एवं च त्वयाप्येवं विधेयमतोऽधुनासूयादिकरणमनर्थकमिति द्योत्यते । यद्वा नायिकाक्लेशशालिनं कंचन कश्चिद्विवाहान्तरकरणमुपदिशति । एवं च सपत्न्यां जातायामियमवश्यमत्यन्तानुकूल्यमाचरिष्यतीति ध्वन्यते । काचित्कस्याश्चिद्वृत्तं वक्तीति ऋजवः ॥

कश्चिद्वयोन्मादवर्ती निजकुलद्वेषिणीमन्योक्त्या वक्ति—

अयि कूलनिचुलमूलोच्छेदनदुःशीलवीचिवाचाले ।
बकविघसपङ्कसारा न चिरात्कावेरि भवितासि ॥ ३ ॥

**अयीति**। अयि । कूलनिचुलस्तीरवृक्षः । यद्वा 'निचुलो हिज्जलोऽम्बुजः' इत्यमराद्वृक्षविशेषः । एवं च तत्प्रतिपालनमुचितमित्यावेद्यते । तस्य यन्मूलोच्छेदनम् । एवं चासह्यत्वं ध्वन्यते। तत्र दुःशीलास्तत्कारिण्यो लहर्यस्ताभिः कुत्सितबहुभाषिणि। कावेरि । बकस्य । न तु हंसादेः । विघसो भोजनशेषो यः पङ्कः । क्षुद्रमत्स्यादेर्बकभुक्तत्वादिति भावः । स एव सारो यस्याः । न चिरात् शीघ्रमेव । भवितासि । एवं च परोपकारकारकस्य स्वकुलप्रभवस्योन्मादवशान्मम दुःखं ददासि तत्ते दुष्टभोजनावशेषद्रव्यं शीघ्रमेव गमिष्यतीति ध्वन्यते ॥

काचिन्नायिका परपुरुषसंगमाय प्रलोभकारिणीं दूतीं प्रत्याह—

अयि विविधवचनरचने ददासि चन्द्रं करे समानीय ।
व्यसनदिवसेषु दूति क पुनस्त्वं दर्शनीयासि ॥ ४ ॥

**अयीति** । हे दूति । एवं च स्वकार्यमात्रसंपादकत्वम्, न त्वन्यदीयाग्रिमाकार्यविचारकारित्वमिति द्योत्यते । नानाप्रकारशालिवचनरचने । एवं च प्रलोभनकारित्वम्, वञ्चनानिपुणत्वम्, विश्वासानर्हत्वम्, उत्तरप्रत्युत्तरकरणानर्हत्वं च ध्वन्यते । चन्द्रं समानीय करे ददासि करगोचरं करोषि । असंभाविनमप्यर्थं जातप्रायं कृत्वा प्रदर्शयसीति भावः । व्यसनमपकीर्त्यादि । तत्काले त्वं कुत्र दर्शनीयासि । एवं च त्वया घटनामात्रं कर्तुं शक्यम्, न त्वपकीर्त्यादिनिवारणमिति भावः । यद्वा भाविवियोगभीता नायिका संघटनमात्रकारिणीं दूतीं प्रत्याह । विविधवचनरचने इत्यनेन दुष्प्रापोऽपि नायकस्त्वया समानेतुं शक्य इति द्योत्यते । चन्द्रमित्यनेनाह्लादजनकतयावश्यस्पृहणीयत्वमावेद्यते । व्यसनम् । वियोगदुःखदत्वादिति भावः । त्वं कुत्र दर्शनीयासि । एवं चाग्रे यथा वियोगो न भविष्यति तथा यदि त्वया कर्तुं शक्यं तर्हि त्वदुदीरितं संपादयामीति द्योत्यते ॥

अपकीर्त्यादिना स्वपरित्यागं संभावयन्तीं नायिकां दूती समाधत्ते—

अस्तु म्लानिर्लोको लाञ्छनमपदिशतु हीयतामोजः ।
तदपि न मुञ्चति स त्वां वसुधाछायामिव सुधांशुः ॥ ५ ॥

**अस्त्विति** । म्लानिर्निस्तेजस्कत्वमस्तु । जनो लाञ्छनमपवादम् । पक्षे

कलङ्कं वदतु । ओजः । यद्वशात्सर्वेऽपि बिभ्यति । पक्षे प्रसादविशेषः । हीयताम् । तदपि स नायकः । सुधांशुर्भूछायामिव । एवं च त्यागानर्हत्वं ध्वन्यते। पक्षे सुधांशुतुल्यः । एवं च स्पृहणीयत्वमावेद्यते । त्वां न मुञ्चति त्यक्ष्यति । यद्वा पूर्वोत्तरमेतत् ॥

मामियं दुर्वचनैर्दुःखयतीति वादिनं नायकं प्रति नायिकासखी तवैवायमपराधो न त्वस्या इति वक्ति—

अतिचापलं वितन्वन्नन्तर्निविशन्निकामकाठिन्यः।
मुखरयसि स्वयमेतां सद्वृत्तां शङ्कुरिव घण्टाम् ॥ ६ ॥

**अतीति** । अन्तर्निविशन्हृदयमध्ये प्रविशन् । तया स्वान्ते धृतोऽपीत्यर्थः । यद्वा प्रथमतः साधुत्वं प्रदर्श्य हृदयं प्रविश्यैतादृशाचरणं करोषीत्यत्यन्तानुचितकारित्वं तवेत्यर्थः । पक्षेऽन्तर्मध्ये । अतिचापलमन्यनायिकासंभोगादिरूपम् । पक्षे निरन्तरसंयोगविभागरूपं विस्तारयन् । एवं चाज्ञानक्षमानर्हत्वं द्योत्यते । निकाममत्यन्तं काठिन्यं कठिनत्वं यस्य सः । एवं च चापल्यसंपादनेऽपि नम्रत्वं न करोपीति दुःखदस्त्वमसीति द्योत्यते । पक्षे काठिन्यमवयवसंनिवेशविशेषः । यद्वान्तः सदनमध्ये । एवं बहिःस्थितौ चापल्यं करोषि, सदनमध्ये तु कार्कश्यमित्युभयतोऽपि दुःखदस्त्वमिति द्योत्यते । स्वयं त्वमेव । सद्वृत्तां सच्चरिताम् । एवं च तवासच्चरितं विलोक्यावश्यमेतस्या दुःखं भवतीति भावः । पक्षे समीचीनवर्तुलां लोहकीलो घण्टामिवैनां मुखरयसि । एवं च तवैवायमपराधो न तस्या इति भावः ॥

क्वचिद्यूनोः संकेतनिकेतनाभावादेव न संगम इति कश्चित्कंचिद्वक्ति—

अङ्गेषु जीर्यति परं खञ्जनयूनोर्मनोभवप्रसरः।
न पुनरनन्तर्गर्भितनिधिनि धरामण्डले केलिः ॥ ७ ॥

**अङ्गेष्विति** । खञ्जनयूनोः परमुत्कृष्टं मनोभवस्य । एवं च सर्वत्र बाधाकारित्वं ध्वन्यते । प्रसर आधिक्यमङ्गेषु जीर्यति समाप्तं भवति । यद्वा परं केवलं जीर्यतीति योजना । परं तु नान्तर्गर्भितो निधिर्यत्रैतादृशे धरामण्डले केलिर्न । निधिमत्प्रदेश एव खञ्जनयोः संभोग इति प्रसिद्धिः[१] । यद्वा सख्यत्यन्तगुप्तसंकेतं विना नैव कार्यं कार्यमिति नायिकामुपदिशति । खञ्जनयूनोरित्यादिना तिर्यग्जातिमत्तया

१. 'तस्मिन्निधिर्भवति मैथुनमेति यस्मिन्' इति बृहत्संहिता ( ४५।१२ ). 'यत्रावनौ खञ्जनको विधत्ते रतं भवेत्तत्र महानिधानम्' इति वसन्तराजः ( १०।२५ ).

विवेकशून्यत्वेऽपि प्रचुरतरमन्मथविकारवत्त्वेऽप्यत्यन्तगुप्तस्थलप्राप्तिं विना खञ्जनयोरपि न रतिस्तत्र किमु वाच्यं भवादृश्याः। समीचीनपरीक्षितसंकेतस्थलं विना रतिर्नोचितेति ध्वन्यते। यद्वा मन्मथविकलतया सद्यः संभोगमपेक्षमाणं नायकं नायिका वक्तीत्यपि प्रतिभाति॥

कश्चित्कंचिदुपदिशति—

अन्धत्वमन्धसमये बधिरत्वं बधिरकाल आलम्ब्य।
श्रीकेशवयोः प्रणयी प्रजापतिर्नाभिवास्तव्यः॥ ८॥

**अन्धत्वमिति**। अन्धसमये क्रीडाकाले। अवलोकनानर्हत्वादिति भावः। अन्धभावम्। बधिरकाले क्रीडाकालीनव्रीडाकरवाक्यकाले। 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इत्यादिना रतारम्भकालेऽश्लीलपदाभिधानस्य कामशास्त्रेऽभिधानात्। बधिरभावमालम्ब्य। प्रजानां पतिः। एवं च महद्भिरप्येतादृशरीत्या स्थीयते तत्र का वार्तान्यस्येति भावः। श्रीकेशवयोः। एवं चैतादृशसंनिधिः स्नेहश्च दुष्प्राप इति ध्वन्यते। प्रणयी प्रीतिमान्। नाभिर्मध्यस्तत्र वसतिमान्। केशवनाभिवसतिमत्त्वाच्छ्रीकेशवयोः सुरतसमयेऽपि ब्रह्मणो मध्यवर्तित्वमिति भावः। यद्वा नाभौ सविधे वास्तव्यं यस्य। एवं चातिनैकट्यं ध्वन्यते। अथवा नाभिवसतिमान्। उभयोः प्रणयी जात इत्यर्थः। यद्वोभयोर्नित्यसांनिध्यात्प्रजापतावुभयसांनिध्यम्। एतेन नाभिरवयवविशेष इत्यर्थे केशवसंबन्धवत्त्वेऽपि श्रीसंबन्धाभाव इत्यपास्तम्। एवं च निकटवसतिमात्रं न पुरुषार्थः, किं तु प्रीतिविशिष्टनिकटवसतिरिति भावः। एवं च प्रभ्वादिसविधे प्रभ्वादिप्रीतिविशिष्टनिकटवसतिकामस्त्वमसि, तर्ह्यनयैव रीत्या तिष्ठेति ध्वन्यते॥

मूर्खसविधकृतपाण्डित्यमनवाप्ततत्फलतया खिन्नं कश्चिदन्योक्त्या समाधत्ते—

अयि कोषकार कुरुषे वनेचराणां पुरो गुणोद्गारम्।
यन्न विदार्य विचारितजठरस्त्वं स खलु ते लाभः॥ ९॥

**अयीति**। कोषकारः कीटविशेषः। वनेचराणाम्। एवं च कार्याकार्यविवेकविधुरत्वं ध्वन्यते। पुरः। गुणानां तन्तूनामुद्गिरणं कुरुषे। यद्विदार्य। एवं च पश्चात्प्रतीकारानर्हत्वं व्यज्यते। विचारितमुदरं यस्य सः। कुत एते गुणा निःसरन्तीति विचारणायेति भावः। त्वं नासि खलु स ते लाभः। एवं च मूर्खाणामग्रे गुणप्रकटनं न केवलमप्राप्तिकरम्, अपि त्वनर्थकरमिति ध्वन्यते॥

दूती नायिकाप्रेमातिशयं नायके वक्ति—

अगणितमहिमा लङ्घितगुरुरधनेहः स्तनंधयविरोधी ।
इष्टाकीर्तिस्तस्यास्त्वयि रागः प्राणनिरपेक्षः ॥ १० ॥

**अगणितेति** । अगणितो महिमा कुलप्रतिष्ठा येन । महिमपदेनावश्यस्पृहणीयत्वं व्यज्यते । लङ्घितो गुरुः श्वशुरादिर्येन । तन्निषेधतिरस्कारादिति भावः । न विद्यते धनेच्छा यस्य । स्तनंधयोऽत्यन्तबालः । एवं चातिस्नेहार्द्रत्वं ध्वन्यते । तद्विरोधी । प्रसवोत्तरमचिरात्संभोगे स्तन्यहानिर्भवतीति लौकिकम् । इष्टेच्छाविषयीभूताकीर्तिर्यस्य । एवं चाकीर्तिभीतिशून्यत्वं ध्वन्यते । एतादृक्तस्यास्त्वयि रागः । प्राणनिरपेक्षः प्राणापेक्षाशून्यः । एवं चातिशयशालित्वं व्यज्यते ॥

कृतापराधं समाधानायारब्धकपटं नायकं नायिका वक्ति—

अपराधादधिकं मां व्यथयति तव कपटवचनरचनेयम् ।
शस्त्राघातो न तथा सूचीव्यधवेदना यादृक् ॥ ११ ॥

**अपराधादिति** । अपराधादन्याङ्गनासंगमरूपात् । त्वद्गवेषणार्थमेव तत्र गतमित्यादिकपटवचनरचना मामधिकं व्यथयति । एवं च सत्यभाषित्वेऽपराधोऽपि क्षन्तुमर्ह इत्यावेद्यते । महतोऽपराधस्य नात्यन्तदुःखदत्वम्, अल्पायाः कपटवचनरचनायाः कथमत्यन्तदुःखदत्वमित्यत्र दृष्टान्तमाह—शस्त्राघातः । आघातपदेनासह्यत्वं व्यज्यते । न तथा व्यथयति यथा सूच्या व्यधः सीवनं तद्दुःखम् । एवं च सूचीकृतत्वेन नाल्पत्वमाशङ्क्यमिति भावः । यद्वा साधारण्येनोक्तिरियम् ॥

कयोश्चिद्गच्छतोरसतीकटाक्षितमेकं दृष्ट्वा परेण 'ज्ञातं सर्वमिदं मया' इत्युदीरिते 'न किंचित्त्वया ज्ञातुं शक्यम्' इत्यपरस्तं प्रत्याह—

असतीलोचनमुकुरे किमपि प्रतिफलति यन्मनोवर्ति ।
सारस्वतमपि चक्षुः सतिमिरमिव तन्न लक्षयति ॥ १२ ॥

**असतीति** । असत्या लोचयति तल्लोचनम् । एवं चेतस्ततः प्रसरणशीलत्वं ध्वन्यते । तद्रूपमुकुरे । मुकुरपदेन मङ्गलत्वेनावश्यदर्शनीयत्वं व्यज्यते । किमप्यनिर्वचनीयम् । मनोवर्ति । असत्या एवेति भावः । यद्वा किमपि न लक्षयतीति योजना । मनोवर्तीत्यनेनातिसूक्ष्मत्वम् । तेन च बहिः स्फुटीभावानर्हत्वं द्योत्यते । यत्प्रतिफलति तत्सारस्वतमपि चक्षुः । सरस्वतीयत्वेनातीतागतवस्तुग्रहणयोग्यत्वं

ध्वन्यते । सतिमिरमिव तिमिराख्यदोषदूषितमिव । न लक्षयति । सप्रकारं न वेत्तीति किं वाच्यमिति भावः । एवं च सारस्वतचक्षुषोऽप्येतादृशी गतिः, तत्र का वार्ता तवेति भावः । एवं चासतीलोचनव्यक्तीकृतमपि न ज्ञातुं शक्यम्, तत्र का वार्ता तच्चित्तगतमिति ध्वन्यते । यद्वा केवलं पण्डितं कटाक्षयन्तीमसतीमालोक्य तं प्रति काचिदन्या वक्ति । सारस्वतं ज्ञानरूपं चक्षुस्तं न लक्षयत्यपि । एवं च याथातथ्येन स्वरूपपरिचितिर्दूरापास्तेति भावः । एवं च कटाक्षितमपि न त्वया ज्ञायते । इत्यन्तर्जडत्वेन सर्वमपि त्वदीयाध्ययनमसत्कल्पमिति ध्वन्यते ॥

नायकदुर्वादकुपितां नायिकां सखी समाधत्ते—

**अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः ।**
**इतरेन्धनजन्मा यो धूमः सोऽगुरुभवो धूपः ॥ १३ ॥**

**अन्येति** । अन्यस्याप्रियस्य मुखे यो दुर्वादो दुर्वचनम् । प्रियस्य दयितस्य मुखे स एव दुर्वाद एव । स एवेत्यनेनान्यूनानतिरिक्तत्वं ध्वन्यते । परिहासः सनिन्दरञ्जकं वाक्यम् । अत्र दृष्टान्तमाह—अगुरुभिन्नेन्धनजन्मा यो धूमः स रूपान्तरापन्नोऽगुरुसंभवो धूपः । एवं चायं न दौष्ठ्येन वदति, किं तु कुतुकेन । नातः कोपो विधेयस्त्वयेति ध्वन्यते । यद्वा साधारणोक्तिरियम् । अत्रैव विपरीतयोजनयाप्रियवदनविनिःसृतवचनं समीचीनमप्यसमीचीनमेवेति व्यज्यते । एवं च प्रेम्णो मुख्यत्वमावेद्यते । कथमेतदीयैतादृशवचनमाकर्ण्य तूष्णीं स्थीयते त्वयेति वादिनीं सखीं नायिका समाधत्त इति वार्थः ॥

दुष्टस्वभावं नायकं नायिकासखी वक्ति—

**अयि सुभग कुतुकतरला विचरन्ती सौरभानुसारेण ।**
**त्वयि मोहाय वराकी पतिता मधुपीव विषकुसुमे ॥ १४ ॥**

**अयीति** । सुष्ठु भाग्यं यस्य तत्संबुद्धिः । कथमन्यथैतादृशी नायिका त्वय्यासक्तेति भावः । कुतुकार्थम् । न तु लोभार्थमिति भावः । तरला । सुभगस्य कुतुकेन तरला । सौरभं समधिकगुणवानिति कीर्तिः । तदनुसारेण विचरन्ती । एवं च त्वत्स्वभावस्य न तात्त्विकं ज्ञानं तस्या इति भावः । यद्वा सौरभानुसारेण स्वकीर्तिसंरक्षणपुरःसरं विचरन्ती । पक्षे सुगन्ध्यानुसारेण । विषकुसुमे । कुसुमपदेनावश्यफलजनकतायोग्यत्वं ध्वन्यते । मधुपीव । एवं च ज्ञानशून्यत्वं व्यज्यते । त्वयि वराकी । एवं च सरलत्वं ध्वन्यते । मोहाय दुःखाय । एवं चान्यफलाभावो

द्योत्यते। पक्षे वैचित्त्याय। पतिता। एवं च दैववशादेतादृशं कार्यं तया कृतम्, त्वं चैतादृशाचरणशालीति दुःखातिशयो ध्वन्यते॥

कस्याश्चित्सविधे कस्यचित्तरुणमहाजनस्य गमनसंभावनयान्यतरुणविरतावप्यतिजरद्वयोभिः सा भुज्यत इति कश्चित्कंचित्प्रत्याह—

अयि मुग्धगन्धसिन्धुरशङ्कामात्रेण दन्तिनो दलिताः।
उपभुञ्जते करेणूः केवलमिह मत्कुणाः करिणः॥ १५॥

**अयीति**। अयि। मुग्धः सुन्दरो यो गन्धगजः। यद्गन्धमात्रादेव गजाः पलायन्ते स गन्धगजः तच्छङ्कामात्रेण। न तु दर्शनादिनेति भावः। दन्तयुक्ता गजा दलिता भग्नाः। पलायिता इत्यर्थः। मत्कुणा दन्तरहिताः करिणः केवलं करेणूर्हस्तिनीरुपभुञ्जते॥

वहिः कृत्रिमातिशयलज्जावत्त्वेऽप्यत्यन्तदुष्टेयमिति काचित्कांचित्प्रति वक्ति—

अतिविनयवामनतनुर्विलङ्घते गेहदेहलीं न वधूः।
अस्याः पुनरारभटीं कुसुम्भवाटी विजानाति॥ १६॥

**अतीति**। अत्यन्तविनयेन वामनवत्तनुर्यस्याः। एवं च त्रिविक्रमावतारकर्मकरणसामर्थ्यमभिव्यज्यते। वधूर्गेहदेहलीं न लङ्घते। एवं च लज्जातिशयः सूच्यते। अस्याः पुनरारभटीं प्रौढिविशेषं कुसुम्भवाटी विजानाति। तत्रैतस्या निर्लज्जत्वं द्रष्टव्यमिति भावः। एवं च सदन एवं विनयं प्रदर्श्य गुर्वादिवञ्चनेन कुसुम्भवाट्यां कं कं न परपुरुषमुपभुङ्क्ते इति ध्वन्यते। यद्वा न केवलमेतस्या लज्जावत्त्वदर्शनमात्रेण भवद्भिर्विश्वसितव्यमिति ध्वन्यते॥

पररञ्जकगुणानामेव गुणत्वम्, न त्वरञ्जकानामित्याह—

अन्तर्गतैर्गुणैः किं द्वित्रा अपि यत्र साक्षिणो विरलाः।
स गुणो गीतेर्यदसौ वनेचरं हरिणमपि हरति॥ १७॥

**अन्तरिति**। येषु द्वित्रा अपि साक्षिणो विरलाः। एवं च बहुसाक्षित्वेऽत्यन्तप्राशस्त्यमिति भावः। तैरन्तर्गतै रञ्जनासमर्थैर्गुणैः किम्। न किंचित्फलमिति भावः। गीतेः स गुणः। एवं च गुणे गुणानङ्गीकारेऽपि पररञ्जकतया गीतेरपि गुणवत्ताव्यवहार इति भावः। यदसौ वनेचरम्। एवं च ग्रामसंबन्धाभावेन मधुरशब्दरसानभिज्ञत्वं ध्वन्यते। हरिणमपि। एवं च मनुष्याणां का वार्तेति भावः। हरति स्वाधीनताभाजनं करोति। यद्वा वनेचरमपि। एवं च नागरिकस्य का

वार्तेति भावः। अथ च प्रकटीकृतगुणानामेव सार्थक्यम्, न त्वन्तर्गतानामिति भावः। यद्वा दूती नायकान्तरसंयोजनाय नायिकां वक्ति। अन्तर्गतानेककामकलाभिः। त्वदीयाभिरिति भावः। यत्र येषु गुणेषु द्वित्रा अपि। एवं च बहूनां का वार्तेति भावः। साक्षिणो विरलाः। गीतिरिव गीतिस्त्वत्प्रतिवेशिनी। तस्याः स गुणो यदसौ वनेचरं हरिणमपि हरति। एवं च तस्या एव कलाकलापः सार्थकः। याज्ञमपि रञ्जयति। एवं च त्वया स्वगुणाः परपुरुषसंगतिमन्तरानर्थका न विधेया इति ध्वन्यते॥

नायिकासखी सपत्नीसखीं प्रति वक्ति—

अलुलितसकलविभूषां प्रातर्बालां विलोक्य मुदितं प्राक्।
प्रियशिरसि वीक्ष्य यावकमथ निःश्वसितं सपत्नीभिः॥ १८॥

**अलुलितेति**। यथास्थितसकलभूषणम्। एवं च संभोगेऽवश्यं कस्यचिद्भूषणस्योपमर्दः संजात एव स्यात्, तस्मान्न सुरतं संजातमिति भावः। बालाम्। एवं च यौवनशालित्वेन द्वेषयोग्यत्वं प्रियस्य प्रीतियोग्यत्वं च ध्वन्यते। प्रातः। एवं च सुरताभावनिर्णययोग्यत्वं ध्वन्यते। विलोक्य। एवं च सम्यक्तया संभोगराहित्यनिर्णयवत्ता ध्वन्यते। सपत्नीभिः। एवं च द्वेषशालित्वं व्यज्यते। बहुवचनेन सर्वासामैकमत्ये नायिकायामुत्कर्षातिशयो ध्वन्यते। प्राङ् मुदितम्। संभोगविरहेण प्रियप्रेमराहित्यनिर्णयेनेति भावः। अथानन्तरं प्रियमस्तके यावकमलक्तकं वीक्ष्य निःश्वसितम्। प्रियप्रणामादिनापि नानया मानः परित्यक्त इति महत्सौभाग्यमस्या इत्यसूयया दुःखोद्रेकादिति भावः॥

रात्रौ रतिसदने गमनेऽतिलज्जां नाटयन्तीं नायिकां सखी प्रातर्वक्ति—

अयि लज्जावति निर्भरनिशीथरतनिःसहाङ्गि सुखसुप्ते।
लोचनकोकनदच्छदमुन्मीलय सुप्रभातं ते॥ १९॥

**अयीति**। अयि लज्जावति। विपरीतलक्षणया लज्जाशून्ये। अत एव निर्भरमतिशयशालि निशीथे मध्यरात्रे। एवं च प्रातर्निद्राजननयोग्यत्वं द्योत्यते। यद्रतं तेन सालसाङ्गि सुखसुप्ते। एवं च क्लेशेन निद्रितं मयेति प्रतारणं कर्तुमशक्यमिति ध्वन्यते। लोचनकोकनदच्छदम्। जागरशोणत्वात्कोकनदत्वेन निरूपणम्। अत्र च्छदपदमनुचितमित्याभाति, विकसनस्योत्पलधर्मत्वात्। वस्तुतस्तु गोलके कोकनदत्वारोपः। पक्ष्मयुक्तप्रदेशयोर्दलत्वारोपः। उन्मीलनं च विश्लेष इति न किंचिदू-

षणम् । 'रक्तोत्पलं कोकनदम्' इत्यमरः । उन्मील्य । ते सुप्रभातं भवतु । एवं च सुरात्रस्य जातत्वादेतावन्मात्रमाशास्यमिति भावः । एवं च यया रीत्या रात्रिरतिवाहिता तयैव रीत्या दिनमप्यतिवाहनीयमिति परिहासो व्यज्यते ॥

कश्चिदसमय एव रतमर्थयमानः कयाचिन्नायिकया रतचिह्नोत्पत्तिभिया तदीयप्रेमहठाभ्यां केवलमालिङ्गितस्तद्वृत्तान्तं स्ववयस्यं प्रत्याह—

अमिलितवदनमपीडितवक्षोरुहमतिविदूरजघनोरु ।
शपथशतेन भुजाभ्यां केवलमालिङ्गितोऽस्मि तया ॥ २० ॥

**अमिलितेति** । असंयुक्तवदनम् । ताम्बूलरागापगमभीत्येति भावः । अपीडितवक्षोरुहम् । चन्दनप्रच्यवभीत्येति भावः । अपीडितमित्यनेन किंचित्कुचसंबन्धो वृत्त इति व्यज्यते । तेन कुचयोरत्यन्तोन्नतत्वम् । अतिविदूरजघनोरु । काञ्च्यादिविन्यासान्यथाभावसंभावनयेति भावः । एतानि क्रियाविशेषणानि । तया केवलं शपथशतेन । एवं च केवलपदेनालिङ्गनेऽन्यप्रबलहेत्वभावो द्योत्यते । शपथपदेनापरिहार्यत्वम् । शतपदेन स्वाग्रहबाहुल्यम् । यत्तु केवलमालिङ्गितोऽस्मीति व्याख्यानं तदमिलितवदनमित्यादिनैव चुम्बनाद्यभावप्रतीतौ केवलपदानतिप्रयोजनत्वसंपादकतया केवलमकिंचित्करमाभाति । अत एव केवलं भुजाभ्यामित्यपास्तम् । भुजाभ्यामालिङ्गितोऽस्मि । यद्वा कश्चित्किंचिद्भ्रममानवत्या वृत्तं वक्ति । यदि मयापराधः कृतः स्यात्तदायमयं शपथ इति शपथशतेन । अथवा विस्रब्धनवोढावृत्तं कश्चिद्वक्ति ॥

कश्चित्कांचिद्वक्ति—

अतिपूजिततारेयं दृष्टिः श्रुतिलङ्घनक्षमा सुतनु ।
जिनसिद्धान्तस्थितिरिव सवासना कं न मोहयति ॥ २१ ॥

**अतीति** । हे सुतनु । अतिपूजिता । श्रेष्ठेति यावत् । तारा नेत्रकनीनिका । पक्षेऽत्यन्तपूजिता ताराख्या देवता यत्र । श्रुतेः कर्णस्योल्लङ्घनसमर्था । अत्यन्तविशालत्वादिति भावः । पक्षे वेदोदीरितार्थाननुष्ठानकारिणीत्यर्थः । सवासनाभिप्रायविशेषशालिनी । कज्जलादिसंस्कारवतीति केचित् । पक्षे तन्मतसिद्धक्षणिकपदार्थैकरूपकुबुद्ध्युत्पादकहेतुमती । जिनसिद्धान्तस्थितिरिव कं न मोहयति । अपि तु सर्वमपीति भावः । यद्वा सखीवचनमेतत् ॥

कृतरतिलज्जासाध्वसां नवोढां नायिकां प्रलोभयितुं कस्याश्चिद्वार्तां सखी वक्ति—

अलमविषयभयलज्जावञ्चितमात्मानमियमियत्समयम् ।
नवपरिचितदयितगुणा शोचति नालपति शयनसखीः ॥ २२ ॥

**अलमिति** । नवपरिचितदयितगुणा । नूतनविज्ञातदयितरतिसुखेत्यर्थः । इयं त्वत्प्रतिवेशिन्येतावत्कालमस्थानलज्जाभयाभ्यां वञ्चितम् । एवं चात्र न लज्जा न वा भीतिरिति भावः । आत्मानमलमत्यर्थं शोचति । यद्वालमिति वञ्चितमित्यत्रान्वेति । एतावत्कालं वृथा स्थितमिति धियेति भावः । शयनसखीर्नालपति । अतिनिकटवर्तिनीभिरेताभिः कथं नाहमीदृशं सुखमस्त्यत्रेति बलादवबोधितेति क्रोधादिति भावः । यद्वाग्रेऽपि कदाचिदेताभिर्यानविधानं शिक्षणीयमिति भावः । एवं च तवाप्यग्र एवमेव भविष्यतीत्यतोऽधुनास्मद्वचनेन लज्जाभयादि परित्यज्य प्रियसंनिधौ गच्छेति ध्वन्यते ॥

नायकं प्रति नायिकाविरहं सखी वक्ति—

अनुरागवर्तिना तव विरहेणोग्रेण सा गृहीताङ्गी ।
त्रिपुररिपुणेव गौरी वरतनुरर्धावशिष्टैव ॥ २३ ॥

**अनुरागेति** । अनुरागाधीनेन । एवं चानुरागाधिक्ये विरहाधिक्यमिति ध्वन्यते । पक्षेऽनुरागेण प्रीत्या वर्तते । एवं च सर्वदा प्रीतिजनककार्यकारित्वं ध्वन्यते । उग्रेण । एवं चासह्यत्वं ध्वन्यते। पक्ष उग्रनाम्ना । तव विरहेण गृहीताङ्गी व्याप्ताङ्गी। पक्षे स्वस्वरूपकृताङ्गी । त्रिपुररिपुणा महादेवेन । पक्षे स्वर्गमृत्युपातालवैरिणा । एवं च तव विरहे क्वापि न तस्याः सुखमिति व्यज्यते । गौरी पार्वतीव । पक्षे विरहपाण्डुरवर्णवती । वरतनुर्नायिका । एवं चावश्यप्राप्यदर्शनयोग्यत्वं व्यज्यते । अर्धावशिष्टैव । विरहक्षीणत्वादिति भावः । पक्षेऽर्धनारीश्वरत्वादिति भावः । एवं च त्वत्संगमविलम्बे तस्याः प्राणविश्लेष एव भविष्यतीति द्योत्यते ॥

काचिन्नायिका स्वात्यन्तासक्तनायकेच्छावदन्यनायिका उपहसति—

अन्यप्रवणे प्रेयसि विपरीते स्रोतसीव विहितास्थाः ।
तद्गतिमिच्छन्त्यः सखि भवन्ति विफलश्रमा हास्याः ॥ २४ ॥

**अन्येति** । विपरीते निम्नानुगामिनि । स्रोतसीव प्रवाह इव । अन्यप्रवणेऽन्यासक्ते नायके विहितास्थाः कृतासक्तयः तद्गतिं तदासक्तिम् । स्वस्मिन्निति भावः ।

पक्षे सा विपरीता या गतिर्गमनं तामिच्छन्त्यः । विफलश्रमाः । स्वनिष्ठतदासक्ते-र्दूरीकर्तुमशक्यत्वादिति भावः । पक्षे प्रतिलोमजलागमनाभावादिति भावः । हास्या निन्दायोग्याः । पक्ष उपहासयोग्याः । न केवलं निरर्थकम् । अपि तु दुरर्थकत्व-मिति भावः । एवं च निम्नानुरूपगतिस्वभावस्य प्रवाहस्य विपरीतगतिरिवान्यनायि-कासक्तनायकस्यान्यत्रासक्तिरसंभाविनीति द्योत्यते । नायिका चेयं गर्विता । यद्वा स्वीया परकीयां निन्दति । एवं च स्वकान्तासक्तिः स्वाभाविकीति भावः । अथवा-न्यनायिकासक्तं स्वनायकं कथं न स्वाधीनताभाजनं करोषीति वादिनीं सखीं काचिद्वक्ति । एवं च यथा नीचानुगामिनः प्रवाहस्य परावृत्तिरशक्या तद्वत्पराङ्गना-लम्पटनायकस्येति ध्वन्यते ॥

नायिकाविरहातिशयं सखी नायकं वक्ति—

अधिकः सर्वेभ्यो यः प्रियः प्रियेभ्यो हृदि स्थितः सततम् ।
स लुठति विरहे जीवः कण्ठेऽस्यास्त्वमिव संभोगे ॥ २५ ॥

**अधिक इति** । सर्वेभ्य एकादशेन्द्रियेभ्यः पञ्चप्राणेभ्यः पञ्चभूतेभ्यश्च योऽधिकः । संघातरूपत्वेनेति भावः । वस्तुतस्त्वेतदतिरिक्त इत्यर्थः । प्रियेभ्यो रूपादिविषयेभ्यः प्रियः । निरुपाधिकप्रेमास्पदत्वादिति भावः । पक्षे सर्वेभ्यः सुहृ-द्भ्योऽधिकः । यद्वा सर्वेभ्यः प्रियेभ्योऽधिकः प्रिय इति योजना । सततं हृदि स्थितः । हृदयस्थानत्वाज्जीवस्येति भावः । पक्षे सर्वदा चिन्तनीयत्वेनेति भावः । संभोगे त्वमिव त्वद्विरहे स जीवः । अस्या इति प्रत्यक्षवन्निर्देशः स्वसंनिधिवर्तित्वेन स्वाधीनत्वं व्यनक्ति । कण्ठे लुठति । एवं च त्वद्दर्शनविरहेऽस्याः प्राणप्रयाणमचि-रादेव भविष्यतीति द्योत्यते । यद्वा पुनर्दर्शने मा विलम्बं कृथा इति नायिकासखी नायकं वक्ति । यथैतत्कालीनसंभोगे त्वमेतस्याः कण्ठे लुठसि तथा त्वद्विरहे जाते सति जीवो लुठति । लुठिष्यतीति भावः । एवं च यथा न त्वद्विरहोऽस्या भविता तथा विधेयमिति प्रार्थना ध्वन्यते ॥

सर्वदा पराङ्गनासक्तमप्येनं मावमानय, यत इतोऽयं गमिष्यतीति वादिनीं सखीं काचिन्नायिका वक्ति—

अनयनपथे प्रिये न व्यथा यथा दृश्य एव दुष्प्रापे ।
म्लानैव केवलं निशि तपनशिला वासरे ज्वलति ॥ २६ ॥

**अनयनेति** । प्रिये कान्तेऽनयनपथे । विदेशस्थ इत्यर्थः । तथा न व्यथा यथा

दृश्य एव दुष्प्रापे । एवं चैतद्विदेशगमने न तथा दुःखं यथैतदत्रत्यान्यादृशाचरणेनेति भावः । यद्वा काचित्कथमियन्ति विरहदिनान्यतिवाहितानि, अधुनैवागतमेनमवलोक्य विकलैव जातासीति वादिनीं सखीं वक्ति । प्रिये, न तु पतिमात्रे । न तथा व्यथा । एवं चानयनपथेऽपि दुःखमस्तीति भावः । एवं च निकटवर्तिनायकाप्राप्तौ नायकीयविदेशगमनादपि दुःखातिशयो ध्वन्यते । अत्र दृष्टान्तमाह—निशि तपनशिला केवलं म्लानैव वासरे ज्वलति ॥

सखी नायिकां शिक्षयति—

अविभाव्यो मित्रेऽपि स्थितिमात्रेणैव नन्दयन्दयितः ।
रहसि व्यपदेशादयमर्थ इवाराजके भोग्यः ॥ २७ ॥

**अविभाव्य इति** । मित्रेऽपि । किमु वाच्यं शत्राविति भावः । यद्वा सूर्ये । विभावनार्होऽपि न । एवं च रात्रावेव द्रष्टव्य इति भावः । स्थितिमात्रेणैव नन्दयन् । एवं चोपभोगाद्यभावो व्यज्यते । दयितो नायकः । पक्षे प्रीतिविषयः । रहसि । एवं च जनसंचारायोग्यत्वेनात्यन्तनिगूहनीयत्वं द्योत्यते । व्यपदेशाद्व्याजात् । अर्थ इव द्रव्यमिव । अराजके । एवं च नायकस्य धनाढ्यत्वं ध्वन्यते । पक्षे लुण्ठनभीतिरावेद्यते । भोग्यः । नायिका चेयं परकीया ॥

बह्वपराद्धं त्वयेति नायिका वक्तीति सखीवचनमाकर्ण्य स्वयमेव कश्चिन्नायिकां वक्ति—

अश्रौषीरपराधान्मम तथ्यं कथय मन्मुखं वीक्ष्य ।
अभिधीयते न किं यदि न मानचौराननः कितवः ॥ २८ ॥

**अश्रौषीरिति** । ममापराधानश्रौषीः । एवं चापराधेषु चाक्षुषविषयत्वाभावो व्यज्यते । तेन नियतमपराद्धमनेनेति निश्चयकरणमनुचितमिति । इदं तथ्यमिति सोल्लुण्ठवचनम् । मन्मुखं वीक्ष्य कथय । एवं च मुखदर्शनोत्तरमनया न किंचिद्वक्तुं शक्यमिति भावः । यद्वा सत्यं कथयेति योजना । एवं च बहवोऽपराधास्त्वया श्रुतास्तन्मध्ये यः सत्यत्वेन निर्णीतस्तमेव मत्समक्षं वदेत्यर्थः । मदीयापराधास्त्वया श्रुताः, इदं मत्समक्षं तथ्यं वदेति वार्थः । नायिका वक्ति । यदि कितवो धूर्तस्त्वम् । एवं च चौरसाहचर्यं नियतमिति द्योत्यते । मानस्य चौररूपमाननं यस्य स न स्यात्तदा किं नाभिधीयते । एवं च त्वद्दर्शने न मया किमपि वक्तुं शक्यमिति ध्वन्यते । यद्वाभिधीयते न किमित्यादि सखीवचनम् ॥

कयोश्चिदनुरागं कश्चिद्वक्ति—

अन्योन्यमनु स्रोतसमन्यदथान्यत्तटात्तटं भजतोः ।
उदितेऽर्केऽपि न माघस्नानं प्रसमाप्यते यूनोः ॥ २९ ॥

**अन्योन्यमिति** । प्रशस्तं स्रोतोऽम्बुसरणं यस्मिंस्तत्स्रोतसम् । अर्शआदित्वात्प्रशंसायामच् । एतादृशं तटादन्यत्तटम्, अथान्यत्तटमनुलक्ष्यीकृत्य परस्परं भजतोः । एवं चैतत्तटापेक्षयान्यत्तटं प्रशस्तप्रवाहवदिति व्याजेन परस्परनिभृतसंभाषणादीच्छावतोरिति भावः । एवं च जनदर्शनशङ्कया नैकत्रावस्थितिरिति ध्वन्यते । यूनोः । एवं चैतादृशावस्थायोग्यत्वं द्योत्यते । अर्के सूर्ये उदितेऽपि माघस्नानं न प्रसमाप्यते । एवं च माघस्नानस्य सूर्योदयकालीनत्वेन तदननुसंधानत्वेनात्यन्तासक्तिरावेद्यते ॥

कश्चिद्यौवनशालिनीं नायिकामन्योक्त्या दुर्जनसंगतिशालिनी त्वमस्माकमनुपयुक्तेति वक्ति—

अयि चूतवल्लि फलभरनताङ्गि विष्वग्विकासिसौरभ्ये ।
श्वपचघटकर्पराङ्का त्वं किल फलितापि विफलैव ॥ ३० ॥

**अयीति** । अयि चूतवल्लि फलभरैर्नमिताङ्गि । पक्षे स्तनभरनताङ्गि । विष्वक्सर्वतो विसारि सौरभं सौगन्ध्यं यस्याः । पक्षे सौरभ्यं कीर्तिः । एवं च नाहमीदृशीति न वक्तव्यमिति भावः । श्वपचाश्चाण्डालास्तेषां घटसंबन्धिकर्पराणामङ्कश्चिह्नं यस्याः । सूक्ष्मस्यापि रसालस्यैतद्दोहदेनाचिरादेव फलोत्पत्तिर्भवतीति दोहदवित्प्रसिद्धिः । एवं च चाण्डालसंबन्धादनुपयुक्तत्वमावेद्यते । पक्षे दुर्जनसङ्गशालित्वम् । फलितापि निश्चितं विफलैव । समीचीनजनोपभोगानर्हत्वादिति भावः ॥

प्रतिष्ठापुरःसरं स्वल्पमपि जीवनं समीचीनमिति कश्चिद्वक्ति—

अञ्जलिरकारि लोकैर्म्लानिमनास्वैव रञ्जिता जगती ।
संध्याया इव वसतिः स्वल्पापि सखे सुखायैव ॥ ३१ ॥

**अञ्जलिरिति** । लोकैरञ्जलिरकारि । अर्घदानार्थमिति भावः । पक्षेऽञ्जलिकरणेन लोक आज्ञाकारित्वं ध्वन्यते । म्लानिर्निस्तेजस्कत्वम् । पक्षेऽसामर्थ्यम् । जगती रञ्जितारक्ततां नीता । पक्षेऽनुरागवती कृता । एवं च लोकस्यानुद्वेगदायित्वं ध्वन्यते । संध्याया इव स्वल्पापि वसतिरवस्थितिः सुखायैव । न दुःखायेत्यर्थः । संध्यासमयस्थितेरचिरावस्थायित्वादिति भावः । एवं चैतद्विलक्षणजीवनान्मरणमेव वरमिति द्योत्यते ॥

नायिका नायकं वक्ति—

अगृहीतानुनयां मामुपेक्ष्य सख्यो गता बतैकाहम् ।
प्रसभं करोषि मयि चेत्त्वदुपरि वपुरद्य मोक्ष्यामि ॥ ३२ ॥

**अगृहीतेति** । अनङ्गीकृतानुनयां मामुपेक्ष्य । मानस्यासाध्यत्वबुद्ध्येति भावः । एवं च तासामेतादृक्करणमनुचितमिति व्यज्यते । सख्यः । सुखदुःखनिरूपणार्हा इति भावाः । गतः । एवं च परावृत्त्यनर्हत्वं व्यज्यते । बत खेदे हर्षे च । अहमेकाकिनी । चेद्यदि मयि प्रसभं बलात्कारं करोषि तर्ह्यद्याधुनैव । एवं चोत्कण्ठितत्वं ध्वन्यते । त्वदुपरि शरीरं पातयिष्ये । एवं च सखीकृतानुनयस्य मयोपेक्षितत्वात्त्वयावश्यं बलात्कारः प्रदर्शनीयः । ततश्च यथेच्छं मयापि विपरीतरतादिना क्रीडितव्यमिति व्यज्यते । अथ च मत्सख्योऽत्र न सन्तीति मत्वा यदि बलात्कारं करोषि तर्ह्यहं प्राणान्परित्यज इति व्यज्यते ॥

सखी कंचन नायकं स्वनायिकाधीनं कर्तुं तस्या गुणशालित्वं भङ्गयन्तरेण वक्ति—

अस्थिररागः कितवो मानी चपलो विदूषकस्त्वमसि ।
मम सख्याः पतसि करे पश्यामि यथा ऋजुर्भवसि ॥ ३३ ॥

**अस्थिरेति** । यद्वान्यनायिकासु स्वनायिकायाश्चातुरीं प्रकटयन्ती सखी वक्ति । चञ्चलानुरागः । धूर्तः । अभिमानी । चाञ्चल्यशाली । विदूषकः । 'विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः' । त्वमसि । अस्थिरराग इत्यनेन मैत्र्यनर्हत्वम्, कितव इत्यनेन प्रतारणानिपुणत्वम्, मानीत्यनेन गर्वशालित्वेन प्रतिक्षणसमाधेयत्वम्, विदूषक इत्यनेनानेकचेष्टाशालित्वं ध्वन्यते । मम सख्याः करे पतसि यथर्जुर्भवसि तथा पश्यामि । एवं च मत्सखीगुणासक्तेन त्वया सर्वमपीदं परित्याज्यमिति भावः । यद्वैतादृशी मत्सखी यदेतादृशं नायकं स्वाधीनताभाजनं कर्तुं विजानातीति भवतीभ्यो मत्सखी समधिकतरेति भावः ॥

नायिकासखी कञ्चिद्गच्छन्तं नायकं प्रति नायिकासक्तिं वक्ति—

अकरुण कातरमनसो दर्शितनीरा निरन्तरालेयम् ।
त्वामनु धावति विमुखं गङ्गेव भगीरथं दृष्टिः ॥ ३४ ॥

**अकरुणेति** । यद्वा क्रुधा गच्छन्तं नायकं नायिकासखी वक्ति । अकरुण करुणाशून्य । यत ईदृशीमप्येनां परित्यज्य गच्छसीति भावः । कातरं मनो यस्याः । कातरपदेन कदायमागमिष्यतीति चिन्तातिशयो द्योत्यते । दर्शितं नीरमश्रु यया ।

दर्शितमित्यनेन विघ्नसूचनमिति कश्चित् । प्रकटमित्यर्थो ज्यायान् । पक्षे प्रकटितजला । निरन्तराला निर्गतावकाशा । सर्वत्र विद्यमानेत्यर्थः । एवं च विशालत्वं द्योत्यते । तेन च शोभातिशयो द्योत्यते । यद्वा कश्चिद्द्रक्ष्यतीति भियेतस्ततोऽवलोकनशालित्वम् । यद्वा निर्गतावकाशा । अविच्छिन्नेत्यर्थः । एवं च लोकभीतिशून्यत्वेनात्यन्तासक्तिराविद्यते । पक्षे निर्गताकाशा । आकाशाद्भुवि गङ्गागमनादिति भावः । इयं दृष्टिर्भगीरथं गङ्गेव विमुखं पश्चादनवलोकनकारिणम् । अज्ञानात्क्रोधाद्वेति भावः । पक्षेऽग्रगमनकारित्वादिति भावः । एवं च तापापनोदिकायास्तापकरणमनुचितं तवेति ध्वन्यते । यद्वा नायकविदेशागमनकालीननायिकासखीवाक्यमेतत् । नायिकेयं परकीया ॥

अप्रकटितमानां नायिकां नायको वक्ति—

अन्तःकलुषस्तम्भितरसया भृङ्गारनालयेव मम ।
अप्युन्मुखस्य विहिता वरवर्णिनि न त्वया तृप्तिः ॥ ३५ ॥

**अन्तरिति** । अन्तःकलुषेणान्तरक्रोधादिना स्तम्भितोऽप्रकटितो रसः शृङ्गारादिर्यया । एवं च बाह्यक्रोधापेक्षयान्तरक्रोधस्यातिदुष्टत्वं द्योत्यते । पक्ष आभ्यन्तरपङ्कादिना स्तम्भितो निर्गमनायोग्यो रसो जलं यस्याः । भृङ्गारनालयेव । 'भृङ्गारः कनकालुका' । त्वया वरवर्णिनि । एवं चैतादृक्कार्यकरणमनुचितं तवेति ध्वन्यते । पक्षे शोभनवर्णा । उन्मुखस्यापि । पक्ष ऊर्ध्वमुखस्यापि मम तृप्तिर्न विहिता । एवं च त्वं मम जीवनदाननिदानरूपेति ध्वन्यते ॥

कथमनेन नायकेन ममास्ति संगतिरिति लोके प्रसिद्धिरिति वादिनीं नायिकामन्योक्त्या सखी वक्ति—

अयि सरले सरलतरोर्मदमुदितद्विपकपोलपालेश्च ।
अन्योन्यमुग्धगन्धव्यतिहारः कषणमाचष्टे ॥ ३६ ॥

**अयीति** । अयि सरले । एवं चैतादृशसंदेहवत्ता तव युक्तैवेति ध्वन्यते । सरलतरोः । सरलपदेन कषणयोग्यत्वं धूर्तताशून्यत्वं च द्योत्यते । मदेन दानेन मन्मथेन च मुदितो यो द्वाभ्यां पिबतीति द्विपो गजस्तस्य कपोलपालेश्च । मदमुदित इत्यनेन जनभीतिशून्यत्वं ध्वन्यते । अन्योन्यं मुग्धस्य सुन्दरस्य गन्धस्य । पक्षे वासनायाः अनुरागस्येत्यर्थः । व्यतिहारो विनिमयः । कषणम् । पक्षे योगम् । आचष्टे । एवं च परस्परानुराग एव परस्परसंबन्धं वक्तीति भावः ॥

कयाचन विलोकितः कश्चित्तस्या विलोकनसुखं स्वस्य सखायं वक्ति—

अस्याः कररुहखण्डितकाण्डपटप्रकटनिर्गता दृष्टिः ।
पटविगलितनिष्कलुषा स्वदते पीयूषधारेव ॥ ३७ ॥

**अस्या इति** । अस्या नखसच्छिद्रीकृतकाण्डपटस्पष्टनिर्गता दृष्टिः । वसनविगलितात एव कालुष्यरहिता पीयूषधारेव स्वदते । एवं च दृशि न केवलं संतापापनोदकत्वम्, अपि तु प्राणप्रदत्वमिति ध्वन्यते ॥

पतिगृहगमनार्हां कांचित्काचित्कस्याश्चिद्वार्तापुरःसरं वक्ति—

अस्याः पतिगृहगमने करोति माताश्रुपिच्छिलां पदवीम् ।
गुणगर्विता पुनरसौ हसति शनैः शुष्करुदितमुखी ॥ ३८ ॥

**अस्या इति** । अस्याः पतिगृहगमने । गमनं प्राथमिकम् । माता । एवं च वात्सल्यं व्यज्यते । अश्रुभिः पिच्छिलां पदवीं करोति । पिच्छिलामित्यनेनाश्रुबाहुल्यं द्योत्यते । गुणगर्विता पुनरसौ शुष्करुदितमुखी । अश्रूणामभावादिति भावः । शनैर्हसति । एवं च यथेयं गच्छति तथैव त्वया गन्तव्यमिति द्योत्यते । कस्याश्चिद्वार्तां काचिद्वक्तीति वा ॥

अङ्के निवेश्य कूणितदृशः शनैरकरुणेति शंसन्त्याः ।
मोक्ष्यामि वेणिबन्धं कदा नखैर्गन्धतैलाक्तैः ॥ ३९ ॥

**अङ्क इति** । अङ्के निवेश्य कूणिता संकोचिता दृग्यया । चिरबद्धवेणीबन्धविस्रंसनजन्यदुःखवशात्कूणितत्वम् । अत एव अकरुण, शनैरिति शंसन्त्याः । यद्वा चिरप्रवासित्वेन अकरुणेति संबुद्धिः । अकरुण इति शनैः शंसन्त्या इति वा । नायके प्रवासिनि न केशसंस्कार इति सतीसंप्रदायः । गन्धतैलाक्तैर्नखैः कदा वेणीबन्धं मोक्ष्यामि । पथिकाशंसनमेतत् ॥

कथमकृतभूषणाहमागमिष्यामीति वादिनीं दूती वक्ति—

अलमनलंकृतिसुभगे भूषणमुपहासविषयमितरासाम् ।
कुरुषे वनस्पतिलता प्रसूनमिव वन्ध्यवल्लीनाम् ॥ ४० ॥

**अलमिति** । यद्वा सर्वासामन्यासां भूषणम्, न मह्यमिति खिन्नां सखी

१. तिरस्करिणी. 'कनात' इति भाषा.

समाधत्ते । अत्यर्थमलंकाराभावेन सौभाग्यशालिनि । इतरासां भूषणम् । वन्ध्यवल्लीनां पुष्पवत्त्वेऽपि फलाजनकानां प्रसूनमिव वनस्पतिलता पुष्पं विना फलजनिका । 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः' । त्वं निन्दाविषयं कुरुषे । एवं च नालंकरणमात्रं सौभाग्यसंपादकम्, अपि तु दयितवश्यतासंपादनसामर्थ्यम् । तच्च तवैवास्तीति विभूषणकरणाय विलम्बो न विधेयः । खेदो वा न मह्यमस्ति विभूषणमिति ध्वन्यते ॥

कश्चित्कांश्चिन्निन्दति—

अबुधा अजङ्गमा अपि कयापि गत्या परं पदमवाप्ताः ।
मन्त्रिण इति कीर्त्यन्ते नयबलगुटिका इव जनेन ॥ ४१ ॥

**अबुधा इति ।** अबुधा ज्ञानशून्याः पण्डितभिन्ना वा । अचेतनत्वादिति भावः । अजङ्गमा गतिशून्याः । पक्ष इतस्ततः प्रेषणानर्हाः । कयापि गत्या चालनविशेषेण । पक्षे दैववशादित्यर्थः । परं पदमाद्यपङ्क्तिगृहम् । पक्ष उत्कृष्टस्थानम् । अवाप्ताः । नयबलस्य बुद्धिबलस्य गुटिका इव जनेन । एवं च वास्तवज्ञानशून्यत्वं ध्वन्यते । मन्त्रिण इति कीर्त्यन्ते । एवं च यथा पदातिसंज्ञकगुटिका राजपङ्क्तिसदनमासाद्यामात्यव्यवहारभागिनी भवति, तद्वदेतेऽकिंचित्करा अपि पदविशेषावाप्त्यामात्यपदवीभागिन इति व्यज्यते ॥

अत्यन्ताभिमानशालिनी मत्सखीति वादिनीं सपत्नीसखीं नायिकासखी वक्ति—

अतिशीलशीतलतया लोकेषु सखी मृदुप्रतापा नः ।
क्षणवाम्यदह्यमानः प्रतापमस्याः प्रियो वेद ॥ ४२ ॥

**अतीति ।** लोकेऽत्यन्तशीलस्य स्वभावस्य शीतलतया । सौम्यतयेत्यर्थः । नः सखी मृदुप्रतापा । एवं च लोके प्रतापदर्शनमनर्थकमिति भावः । यद्वा मृदुप्रतापेति स्वरविशेषरूपकाका न मृदुप्रतापेत्यर्थः । एतदेवाह—अस्या मत्सख्याः क्षणवाम्येन क्षणिककौटिल्येन । एवं च चिरकालीनवाम्यमसंभवतीति ध्वन्यते । यद्वा क्षण उत्सवे यद्वाम्यम् । प्रणयकोप इति यावत् । तेन । एवं च वास्तवमहाकोपे को वेद किं भावीति व्यज्यते । दह्यमानः प्रियः प्रतापं तेजोविशेषम्, अथ च प्रकृष्टसंतापं जानाति । एवं च यत्र यद्विधानमुपयुक्तं तत्र तदेवेयं विदधातीति द्योत्यते । यद्वा त्वत्सखी मृदुप्रतापेति वादिनीं काचिद्वक्ति । एवं च नः सखी लोके मृदुप्रतापा नायकं प्रत्यभिमानशालिनी, त्वत्सखी तु नायकं प्रत्यकिंचित्करा लोके तु कोपनेति द्योत्यते । तेन स्वसख्यामाधिक्यम् । यद्वा पूर्वोत्तरार्धाभ्यामुभयोक्ती ॥

यदीयमुत्कृष्टगुणा तर्ह्येतदीयनायकः कथमन्यानुरक्त इति वादिनीं कांचिन्नायिकासखी वक्ति—

**अन्यास्वपि गृहिणीति ध्यायन्नभिलषितमाप्नोति ।**
**पश्यन्पाषाणमयीः प्रतिमा इव देवतात्वेन ॥ ४३ ॥**

**अन्यास्विति** । अन्यास्वप्यन्याङ्गनास्वपि स्वगृहिणीति ध्यायन्नेव । स्वनायिकाभावनां कुर्वन्नेवेत्यर्थः । एवं च स्वीयाङ्गनाभावनानर्हास्वप्यन्याङ्गनासु तद्भावनासंपादनप्रतिपादनान्नायिकायां रूपादिगुणशालित्वमावेद्यते । अभिलषितमानन्दम् । पक्ष इच्छाविषयीभूतमर्थम् । आप्नोति । पाषाणमयीः प्रस्तरविकाररूपाः प्रतिमा देवतात्वेन पश्यन्निव । एवं च यथा पाषाणप्रतिमासु देवताभावनया जनस्याभिलषितावाप्तिस्तथैवान्यासु नायिकासु स्वनायिकाभावनयैवाभिलषितावाप्तिरिति भावः । एवं च पराङ्गनासु जडत्वं ध्वन्यते । यद्वा देवतायां देवताध्यानाकरणं जडप्रतिमासु च देवताध्यानकरणमिति यथा जनस्य स्वभावस्तथा नायकस्याप्यन्याङ्गनास्वासक्तिसंपादनमिति स्वभाव इति ध्वन्यते । तेन च नैतस्यां गुणराहित्यमाशङ्कनीयमिति । 'आप्नोमि' इति पाठेऽन्याङ्गनासक्तिस्तवानुचितेति वादिनीं नायिकासखीं नायको वक्ति ॥

गर्वशालिनं नायकं नायिकासख्युपदिशति—

**अनुपेत्य नीचभावं बालक परितो गभीरमधुरस्य ।**
**अस्याः प्रेम्णः पात्रं न भवसि सरितो रसस्येव ॥ ४४ ॥**

**अन्विति** । बालक अपरिपक्वबुद्धे । नीचभावं गर्वशून्यत्वमनुपेत्याकृत्वा समन्ताद्गभीरं बहुपरिमाणं मधुरं सुखदम् । पक्षेऽगाधं मधुररसवत् । परित इत्यनेन सर्वत्र गाम्भीर्यमाधुर्यशालित्वं तेन चैतादृशस्य प्रेम्णो दुर्लभत्वं द्योत्यते । अस्याः प्रेम्णः पात्रममत्रम् । पक्षे तीरयोरन्तरम् । सरितो रसस्येव जलस्येव न भवसि । एवं च गर्वं विहायैवास्याः प्रेम्णो भाजनं भवान्भवत्विति व्यज्यते । रसस्येवेत्यनेन प्रेम्णि रससंभृतत्वमावेद्यते ॥

सखी नायिकामन्योक्त्या स्तौति—

**अधिवासनमाधेयं गुणमार्गमपेक्षते न च ग्रथनाम् ।**
**कलयति युवजनमौलिं केतककलिका स्वरूपेण ॥ ४५ ॥**

**अधीति** । अधिवासनं संस्कारम् । यथा पुष्पादिभिस्तैलादेः । आधेयमौपा-

धिकं गुणमार्गम् । यथा मुक्ताफलादे रन्ध्रादि । ग्रथनाम् । यथा मालादेः । न चापेक्षते । पक्षे स्वतः पद्मिनीत्वेन न सौगन्ध्यादिसंस्कारापेक्षा । स्वाभाविकगुणवत्त्वान्नौपाधिकगुणगवेषणापेक्षा । मार्गणं मार्गं इति व्युत्पत्तेः । स्वतो नायकवशीकरणसामर्थ्यान्न दूत्यादिघटनापेक्षा । केतककलिका स्वरूपमात्रेण युवजनमौलिं कलयति । मौलिभूषणरूपा भवतीति भावः । पक्षे सर्वयुवभिः प्रणतिपुरःसरं प्रार्थ्यत इति भावः । एवं चात्र स्वकीयपरकीयादिनाधिकाधिक्यं नायिकायामावेद्यते ॥

नायिका स्वनायकसङ्गविद्वेषकारिणी वृत्तेति प्रतिपादनेन नायकात्यन्तासक्तिं तस्यामुत्पादयितुं नायिकासखी नायकं वक्ति—

अपनीतनिखिलतापां सुभग स्वकरेण विनिहितां भवता ।
पतिशयनवारपालिज्वरौषधं वहति सा मालाम् ॥ ४६ ॥

**अपनीतेति** । दूरीकृतसकलदुःखाम् । पक्षे तापो नानाविधज्वरः । सुभग भवता स्वकरेण, न तु दूत्यादिद्वारा । विनिहितां मालाम् । पतिः, न तु प्रियः । तच्छयनरूपो यो वारपालिज्वरश्चातुर्थिकादिस्तदौषधरूपां वहति । केवलं त्वद्दत्तमालयैव तद्दिवसीयत्वद्विरहदुःखनिरासस्तस्या इति भावः । एवं चैतादृशनायिकानुरागः सुदुर्लभोऽपि ते सुलभ इति धन्यस्त्वमसीति द्योत्यते ॥

नायिकासक्तिं नायके नायिकासखी वक्ति—

अगणितगुणेन सुन्दर कृत्वा चारित्रमप्युदासीनम् ।
भवतानन्यगतिः सा विहितावर्तेन तरणिरिव ॥ ४७ ॥

**अगणितेति** । हे सुन्दर, एवं च कामिनीस्पृहणीयत्वं ध्वन्यते । असंख्यातचातुर्यादिगुणेन । एवं च युक्तमेव ते नायिकावशीकरणसामर्थ्यमिति द्योत्यते । पक्षेऽनादृतो गुणो बन्धनरज्जुर्येन । भवता चरित्रमेव चारित्रं पातिव्रत्यं तदप्युदासीनं कृत्वा तिरस्कृत्य । अपिना तिरस्कारानर्हत्वं ध्वन्यते । पक्षे चकारबहिर्भावेनारित्रं केनिपातनम् । आवर्तेन तरणिरिव सानन्यगतिः । नास्त्यन्या, त्वदतिरिक्तेत्यर्थः, गतिर्यस्याः । पक्षेऽन्यत्र गमनाभाववती । विहिता । एवं चानुग्राह्या सेति व्यज्यते ॥

पराङ्गनास्थापितोत्तरीयतया वसनान्तरहीनतया सलज्जं कंचन कश्चिद्वक्ति—

अनुरक्तरामया पुनरागतये स्थापितोत्तरीयस्य ।
अप्येकवाससस्तव सर्वयुवभ्योऽधिका शोभा ॥ ४८ ॥

**अनुरक्तेति** । अनुरक्ताङ्गनया पुनरागमनाय स्थापितोत्तरीयवसनस्यैकवास-

सोऽपि । दारिद्र्यादिति भावः । तव सकलभाग्यशालितरुणेभ्यः शोभाधिका । एवं चैतादृशदयितानुरागे दारिद्र्यदुःखमकिंचित्करम् । तदननुरागे च यौवनसंपत्ती अकिंचित्करे इति व्यज्यते ॥

कश्चित्स्वस्य सखायं वक्ति—

अर्धः प्राणित्येको मृत इतरो मे विधुंतुदस्येव ।
सुधयेव प्रियया पथि संगत्यालिङ्गितार्धस्य ॥ ४९ ॥

**अर्ध इति ।** पथि मार्गे संगत्या प्राचीनसंबन्धेन। यद्वा मार्गविषयकसंबन्धेन। एवं च दैववशसंपन्नमेतदिति ध्वन्यते । प्रिययालिङ्गितार्धस्य । प्रियासंबन्धवदर्धस्येत्यर्थः । आलिङ्गनपदेनैकाङ्गसंपर्केऽपि सर्वाङ्गीणानन्दतुल्यानन्दः संवृत्त इति व्यज्यते । मे सुधया विधुंतुदस्येवैकोऽर्धो विषमांशः । 'पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः । एवं च राहोरसमांशमुण्डरूपस्योपमानता संगच्छते । प्राणिति । इतरो मृत एव । एवं च नान्यथा शङ्कनीयमिति भावः । एवं च प्राप्ताया अपि सुधाया दुर्दैवान्न संभोगो राहोस्तथा प्रियाया ममेति ध्वन्यते । तेन च नायिकाङ्गसंबन्धानुभववत एवाङ्गस्य सार्थक्यम्, नापराणामङ्गानामिति । तेन च नायिकाङ्गस्पर्शसुखानुभवस्तज्जीवनमत्यन्तानर्थकमिति ॥

कठिनहृदयापि कोमलहृदया मन्नायिकेति कश्चिद्वक्ति—

अवधीरितोऽपि निद्रामिषेण माहात्म्यमसृणया प्रियया ।
अवबोधितोऽस्मि चपलो बाष्पस्तिमितेन तल्पेन ॥ ५० ॥

**अवधीरितोऽपीति ।** निद्राव्याजेनावज्ञातोऽपि । मानवशादिति भावः । एवं च ममाप्यवबोधने भीतिरित्यावेद्यते । अत एव माहात्म्येन प्रशस्तान्तःकरणतया स्निग्धया प्रियया । चपलः । एवं च स्वस्मिन्सापराधत्वमावेद्यते । बाष्पैः स्तिमितेनार्द्रेण तल्पेनावबोधितोऽस्मि । मानं ज्ञापितोऽस्मि । एवं च भीत्या मम तूष्णींभावं विज्ञाय मानज्ञापनकरणेन कोमलहृदयत्वमावेद्यते ॥

कस्याश्चित्किंचित्संगतिशालिनं कंचन काचिदन्योक्त्या वक्ति—

अयि शब्दमात्रसाम्यादास्वादितशर्करस्य तव पथिक ।
स्वल्पो रसनाच्छेदः पुरतो जनहास्यता महती ॥ ५१ ॥

**अयीति ।** अयि पथिक, एवं चात्र चिरानवस्थित्या यथार्थज्ञानशून्यत्वं

ध्वन्यते । शब्दमात्रसाम्यात् । शर्करेति । पक्षे नायिकेति । शब्दमात्रेत्यनेनार्थदृष्टिविधुरत्वं व्यज्यते । आस्वादिता, न तूपभुक्ता शर्करा सिकता येन तस्य । एवं चाधुनापि विचार्य चरितव्यमिति ध्वन्यते । रसनाछेदः स्वल्पः पुरतोऽग्रे । 'इयं च तेऽन्या पुरतो विडम्बना' इति वदत्र समाधिः । महती । एवं चासह्यत्वं व्यज्यते । जनस्य । एवं च निवारणानर्हत्वम् । हास्यता भवित्री । एवं च तस्याः कठिनतया न संगतिश्चिरावस्थायिनीति नैतावन्मात्रम्, अपि तु कथमत्यन्तानभिज्ञ इति लोकोपहासो भावीति व्यज्यते । यद्वा स्वनामैक्यादन्याङ्गनागृहीतदर्शनं काचिद्वक्ति । शब्दमात्रसाम्यम् । न मञ्जिष्ठगुणादेरिति भावः । रसनाच्छेद आस्वादविच्छेदः । नीरसेति यावत् । भाविगुणशून्यत्वज्ञानेनेति भावः । एतावन्मात्रं न, किंतु जनहास्यता । एवं च तस्याः पुंश्चलीत्वेन प्रसिद्धिः, न ममेति व्यज्यते ॥

सपत्नीदुःखसंतप्तां काचित्समाधत्ते—

अभिनवयौवनदुर्जयविपक्षजनहन्यमानमानापि ।
सूनोः पितृप्रियत्वाद्बिभर्ति सुभगामदं गृहिणी ॥ ५२ ॥

**अभिनवेति** । अभिनवयौवनेन । अभिनवत्वमप्रसूतत्वादिति भावः । दुःखेन जेतुमशक्यः । यौवनसंपादनस्य दुष्करत्वादिति भावः । यो विपक्षजनः । विपक्षपदेन दुःखजननस्वभाववत्त्वं जनपदेन समुदायवत्तया प्रतीकारानर्हत्वं ध्वन्यते । तेन हन्यमानः । एवं च प्रात्यहिकेनासह्यत्वं द्योत्यते । मानो यस्याः सापि । एवं च यत्र प्रतिष्ठामात्रमपि गतं तत्र का वार्ता रतादीनामिति भावः । गृहिणी प्रथमस्त्री पुत्रस्य पितृप्रियत्वात्सौभाग्यशालिनी रां गर्वं बिभर्ति । एवं च सकलसदनाधिपतिप्रायपुत्रवत्तया त्वया न किंचिदपि सपत्न्यवमाननं गणनीयमिति व्यज्यते ॥

कश्चित्स्नानोद्यतकामिनीकुचकलशमवलोक्य व्यञ्जनया त्वत्संगमकामोऽहमिति वक्ति—

अपमानितमिव संप्रति गुरुणा ग्रीष्मेण दुर्बलं शैत्यम् ।
स्नानोत्सुकतरुणीस्तनकलशनिबद्धं पयो विशति ॥ ५३ ॥

**अपमानितमिति** । गुरुणा प्रबलेन ग्रीष्मेणापमानितं तिरस्कृतम् । एवं च जलप्रवेशकरणमुचितमिति व्यज्यते । दुर्बलम् । एवं च प्रतीकारासामर्थ्यं ध्वन्यते । स्नानोत्सुका या तरुणी तस्याः स्तनरूपकलशसंबन्धवत् । एवं च ग्रीष्मे तरुणीस्तनयोरतिशीतलत्वमावेद्यते । अत्र निबद्धमित्यनेन प्रबलग्रीष्मक्लेशितशैत्यस्य यथा

दुःखनिवारणसाहाय्यकारकं स्तनमण्डलं तथा मदनानलकदर्थितस्य ममापीदं भवत्विति ध्वन्यते । एवं च त्वदालिङ्गनोत्तरं मरणमपि सुखदं ममेति ध्वन्यते । तेन च राजादिभीतिशून्यत्वम् । अन्योऽपि केनचित्तिरस्कृतः प्रतीकारासमर्थः कलशादि वद्ध्वा जले देहं त्यजतीति लौकिकम् । यद्वा ग्रीष्मनिर्जितस्य शैलस्य यथा त्वत्कुचकलश एव शरणं तथा मन्मथनिर्जितस्य ममापीति भावः ॥

कथमतिचिरकालेऽपि संवृत्ते शयनागारान्न निर्गच्छसीति वादिनीं सखीं नायिका वक्ति—

अलसयति गात्रमखिलं क्लेशं मोचयति लोचनं हरति ।
स्वाप इव प्रेयान्मम मोक्तुं न ददाति शयनीयम् ॥ ५४ ॥

**अलसयतीति** । गात्रं शरीरमलसयत्युत्थानादिव्यापारासमर्थं करोति । नानाविधसुरतेनेति भावः । पक्षे जृम्भादिजननेन विषयव्यापारासमर्थं करोति । अखिलं दुःखम् । पक्षे गृहव्यापारजन्यं श्रमम् । मोचयति । लोचनं हरति स्वाधीनतां नयति । स्वदर्शनमात्रप्रवणं करोतीति भावः । एवं च नायके सौन्दर्योत्कर्षशालित्वं ध्वन्यते । पक्षे पदार्थज्ञानशून्यत्वं करोति । स्वाप इव प्रेयान् । एवं च निवारणानर्हत्वं व्यज्यते । पक्षे दुःखाभावसंपादकत्वेन प्रीतिविषयत्वम् । मम शयनीयं परित्यक्तुं न ददाति । एवं चैतावत्कालं नायकनैकव्यादेव विलम्बो वहिरागम इति न ममापराध इति भावः । प्रेयानिव स्वाप इति योजना वा । एवं च नायककार्यकारितया प्रेमविषयत्वं स्वापे द्योत्यते । तेन चालस्यादि स्वापकार्यमेवेति संगुप्तरतिकत्वम् ॥

कश्चित्कांचिद्वक्ति—

अंसावलम्बिकरधृतकचमभिषेकार्द्रधवलनखरेखम् ।
धौताधरनयनं वपुरस्त्रमनङ्गस्य तव निशितम् ॥ ५५ ॥

**अंसेति** । स्कन्धावलम्बितकरेण धृताः । जलविमोचनार्थमिति भावः । कचा यस्मिन् । स्नानेनार्द्राः । धवलाः । लौहित्यापगमादिति भावः । नखरेखा नखक्षतानि यस्मिन् । धौताधरनयनम् । ताम्बूलरागापगमादिति भावः । कामशास्त्रे नेत्रचुम्बनस्य विधानात् । पक्षे निराकृतमालिन्यावयवम् । तव वपुरनङ्गस्य तीक्ष्णं शस्त्रम् । एवं चैकोपभोगजन्यजाड्यनिरसनेनान्यसंभोगसामर्थ्यवत्ता जातेति ध्वन्यते । वपुषि निशितानङ्गास्त्रतुल्यताप्रतिपादनेन त्वत्सङ्गासंपादनेन मत्प्राणहरणजन्यपापभागित्वं भविष्यति तवेति ध्वन्यते ॥

वेश्यासक्तं कंचन काचिदुपदिशति—

अविनिहितं विनिहितमिव युवसु स्वच्छेषु वारवामदृशः।
उपदर्शयन्ति हृदयं दर्पणबिम्बेषु वदनमिव ॥ ५६ ॥

**अविहितमिति**। वारवामदृशो वेश्याः। एवं च नैकत्र स्थिरप्रेमशालित्वमित्यावेद्यते। स्वच्छेषु निर्मलान्तःकरणेषु। एवं च प्रतिबिम्बभवनार्हत्वं ध्वन्यते। युवस्वविनिहितं हृदयम्। प्रेमेत्यर्थः। विनिहितमिवोपदर्शयन्ति। दर्पणस्वरूपेषु वदनमिव। एवं चैतासां प्रेमभ्रमेण ये समासक्ता भवन्ति तेऽत्यन्तमूढा इति द्योत्यते। अत्र बिम्बपदं न तथा सप्रयोजनमित्याभाति ॥

अहमस्मिन्नासक्तेति कथं लोकप्रसिद्धिरिति वादिनीं नायिकां सखी वक्ति—

अतिलज्जया त्वयैव प्रकटः प्रेयानकारि निभृतोऽपि।
प्रासादमौलिरुपरि प्रसरन्त्या वैजयन्त्येव ॥ ५७ ॥

**अतीति**। अतिलज्जया द्रुततरगतेनेति भावः। यत्र यत्र तदीयकटाक्षस्ततोऽपसरणादिति भावः। त्वयैव। एवं च नान्यस्यापराध इति भावः। निभृतोऽपि केनचिदनधिगतोऽपि प्रेयान्प्रकटः ख्यातोऽयमस्यामासक्त इत्यकारि। यदियमेनं दृष्ट्वातिलज्जां नाटयति, तर्ह्ययमस्यामासक्त इति लोकैरधिगतम्, अतस्तवैवापराध इति भावः। उपरि प्रसरन्त्या। एवं च दर्शनयोग्यत्वं द्योत्यते। पताकयेव। प्रसादस्य देवताद्यायतनस्य मूर्धा। यद्वा तथाविधभोगाद्यभावेऽपि कथं लोकेऽस्मत्संगतिरभिव्यक्ता जातेति वादिनीं सखी वक्ति। त्वयातिलज्जयैव। न तथाविधात्यन्तसंघटनेनेति भावः। उपरि प्रसरन्त्येत्यनेनान्तःप्रविष्टत्वाभावप्रदर्शनेन रताद्यपरिचित्यानन्दराहित्यं नायिकायामावेद्यते। एवं च बहिस्तथा प्रदर्शनीयं यथा न केनापि नायकीयपरिचितिलेशोऽपि ज्ञातुं शक्य इति भावः ॥

मध्यस्थावलम्बनेन संघटितवाग्भिः खलजयोऽपि सुशक इति कश्चिद्वक्ति—

अन्योन्यग्रथनागुणयोगाद्गावः पदार्पणैर्बहुभिः।
खलमपि तुदन्ति मेढीभूतं मध्यस्थमालम्ब्य ॥ ५८ ॥

**अन्योन्येति**। अन्योन्यग्रथनागुणः परस्पराविरोधिघटनारूपो गुणः। पक्षे परस्परबन्धनरज्जुः। तद्योगात्। गावो वाचः। पक्षे वृषभाः। पदार्पणैर्व्यवहारपददर्शनैः। पक्षे चरणविन्यासैः। मेढीभूतमाधाररूपत्वान्मध्यस्थम्। पक्षपातविरहेण विवादनिर्णायकम्। पक्षे मध्यभूमिस्थितं मेढीभूतम्। 'पुंसि मेढिः खले दारु

न्यस्तं यत्पशुबन्धने' इत्यमरः । अर्थात्काष्ठमालम्ब्य दुर्जनमपि । अपिना दुर्जयत्वं व्यज्यते । पक्षे धान्यमर्दनस्थानम् । व्यथयन्ति ॥

दुर्जनवाक्यमतिदुःसहमिति कश्चिद्वक्ति—

अननुग्रहेण न तथा व्यथयति कटुकूजितैर्यथा पिशुनः ।
रुधिरादानादधिकं दुनोति कर्णे क्वणन्मशकः ॥ ५९ ॥

**अनन्विति** । अननुग्रहेण निरोधेन । एवं च द्रव्याद्यपहारादिद्वारा दुःखदत्वं ध्वन्यते । 'अर्थग्रहेण' इत्यपि पाठः । पिशुनः खलः । न तथा व्यथयति । तथाविधदुःखजनको नेत्यर्थः । यथा कटुकूजितैर्दुष्टवचनैः पीडयति । अत्र दृष्टान्तमाह—मशको रक्तग्रहणादधिकं कर्णे शब्दं कुर्वन्दुनोति । 'मणितं रतिकूजितम्' इत्युक्त्या कूजितशब्दः शब्दसामान्याभिधायकः ॥

प्रथमं संजातलाघवस्योत्तरकालीनगौरववत्त्वेऽपि न तदपगच्छतीति कश्चिद्वक्ति—

अग्रे लघिमा पश्चान्महतापि पिधीयते नहि महिम्ना ।
वामन इति त्रिविक्रममभिदधति दशावतारविदः ॥ ६० ॥

**अग्र इति** । अग्रे प्रथमतो लघिमा लाघवम् । पक्षे ह्रस्वत्वम् । पश्चादनन्तरं महतापि महिम्ना गौरवेण । पक्षे दैर्घ्येण । नाच्छाद्यते । एवं च नवीनातिशयितप्रतिष्ठयापि न प्राक्तनाप्रतिष्ठा निराकर्तुं शक्येति भावः । अत्र दृष्टान्तमाह—दशावतारविदः । एवं चोत्तरोत्तरप्रतिष्ठाज्ञानवत्त्वमावेद्यते । त्रिविक्रमत्वादतिदीर्घत्वमावेद्यते । वामन इति ह्रस्व इत्यभिदधति । एवं च परमेश्वरस्याप्येतादृशी गतिस्तत्र का वार्ता मनुजस्येति भावः । एवं च तथा कर्म कर्तव्यं यथारम्भ एव प्रतिष्ठा भवतीति ध्वन्यते ॥

काचिन्नवीनसपत्नीशङ्कितां समाधत्ते—

अङ्के स्तनंधयस्तव चरणे परिचारिकाप्रियः पृष्ठे ।
अस्ति किमु लभ्यमधिकं गृहिणि यदाशङ्कसे बालाम् ॥ ६१ ॥

**अङ्क इति** । अङ्के स्तनंधयो बालकः, चरणे परिचारिका दासी, पृष्ठे प्रियः । आज्ञाकारीत्यर्थः । पक्षपाती वा । अतोऽधिकं किमु लभ्यमस्ति । 'अलब्धम्' इत्यपि पाठः । यद्वाधिकं किमाशङ्कस इति योजना । गृहिणि । एवं च सर्वाधिका-

रवत्त्वं द्योत्यते। बालाम्। एवं च तथाविधज्ञानराहित्यं व्यज्यते। आशङ्कसे। एवं च सर्वसुखसत्त्वान्न बालाभीतिः कर्तव्येति ध्वन्यते॥

कयोश्चिदासक्तिं कश्चिद्वक्ति—

अधर उदस्तः कूजितमामीलितमक्षि लोलितो मौलिः।
आसादितमिव चुम्बनसुखमस्पर्शेऽपि तरुणाभ्याम्॥ ६२॥

**अधर इति।** अधर उदस्त उच्चतां नीतः। चुम्बनार्थमिति भावः। कूजितम्। पीडाव्यञ्जकः स्वरः कृत इत्यर्थः। अक्ष्यामीलितम्। सुखाविर्भावादिति भावः। लोलितो मौलिः। परित्यजेति ज्ञापनार्थमिति भावः। नायकव्यापारपूर्वकमेते पर्यायेण व्यापाराः। इति तरुणाभ्याम्। एवं च परस्परानुरागातिशयो व्यज्यते। अस्पर्शेऽपि स्पर्शाभावेऽपि। रजोदर्शनेऽपीति वा। चुम्बनसुखमासादितमिव। एवं चैतादृशरीत्या संतोषसंपादनेनासक्तिविशेषो ध्वन्यते। नायिका परकीया॥

कश्चित्कस्यचिदवस्थां कंचित्प्रति वक्ति—

अतिरभसेन भुजोऽयं वृतिविवरेण प्रवेशितः सदनम्।
दयितास्पर्शोल्लसितो नागच्छति वर्त्मना तेन॥ ६३॥

**अतीति।** अत्युत्कण्ठया। एवं च पुरोवर्तित्वेन दर्शनयोग्यत्वं ध्वन्यते। वृतिविवरेण भित्तिच्छिद्रेण। एवं च सूक्ष्मत्वं व्यज्यते। सदनम्। नायिकाधिष्ठितमिति भावः। प्रवेशितो भुजो दयितास्पर्शेनोल्लसितः पुष्टिमापन्नस्तेन मार्गेण नागच्छति। यद्वातिसरलतया गुप्तव्यवहारेण नायिकासदनं प्रापितः। एवं च स्वस्य श्रमबाहुल्यं व्यज्यते। तत्सुखोल्लसितः। एवं च तदासक्तिविशेषो ध्वन्यते। तेन मार्गेण नागच्छति। एवं च महता श्रमेण नायिकां प्रापितोऽयं तदासक्त्या माम· गणयित्वैव नायाति। परंतु नैतदुचितमिति व्यज्यते। इति दूती वक्ति। यद्वात्युत्कण्ठया। एवं चाग्रे किं भविष्यतीति विचारशून्यत्वं ध्वन्यते। वृतिविवरेण चौरादिमार्गेणापि सदनं प्रवेशितः। एवं च स्वतस्तथाविधधूर्तताविहीन इति व्यज्यते। दयितास्पर्शोल्लासित इत्यनेन तत्र चिरकालावस्थायित्वं द्योत्यते। अयं भुजो हस्तरूपः। एवं च परप्रेरणया कार्यकारित्वमावेद्यते। तेन मार्गेण नागमिष्यति। एवं चातिविलम्बकरणेन येन मार्गेणायमागतस्तेन मार्गेण गन्तुमधुना प्रतिबन्धकवशान्न पार्यते। अतस्त्वमेनं कयापि मत्या निःसारयेति नायिकासखीं नायकसखी वक्ति॥

नायको नायिकां प्रति वक्ति—

अम्बरमध्यनिविष्टं तवेदमतिचपलमलघु जघनतटम् ।
चातक इव नवमभ्रं निरीक्षमाणो न तृप्यामि ॥ ६४ ॥

**अम्बरेति** । अम्बरमाकाशं वसनं वा । 'अंशुके व्योम्नि चाम्बरम्' इत्यमरः । तन्मध्यवर्ति । अतिचपलं रतव्यापारविशेषत्वात् । पक्षे स्वभावात् । अलघु महत् । तवेदं जघनतटं नवमभ्रं मेघं चातक इव निरीक्षमाणो न तृप्यामि । एवं च चिरतरपिपासाव्याकुलस्य चातकस्य नूतनमेघदर्शनेन तृप्तिस्तथातिविरहखिन्नस्य मम तव जघनदर्शनेन तृप्तिरिति व्यज्यते । तेन चात्यन्तस्पृहावानहमस्मीति व्यज्यते ॥

अयमन्धकारसिन्धुरभाराक्रान्तावनीभराक्रान्तः ।
उन्नतपूर्वाद्रिमुखः कूर्मः संध्यासमुद्वमति ॥ ६५ ॥

**अयमिति** । अन्धकाररूपा ये सिन्धुरा गजास्तद्द्वारेणाक्रान्ता या मही तस्या भरेणाक्रान्तः । उन्नतं पूर्वाचलरूपं मुखं यस्य सः पृष्ठे भारातिशयेन मुखोन्नत्यमिति भावः । कूर्मः संध्यारूपं रुधिरमुद्वमति । अन्यस्याप्यत्यन्तभारवत्तया मुखाल्लोहितं निःसरतीति लौकिकम् । एवं च प्रातःकालो वृत्तः, उपपतिर्निःसार्यतामिति सखी नायिकां वक्ति । यद्वा कूर्मोऽयं संध्यारूपं रुधिरं वमतीत्युक्त्या संध्योदयापलापो द्योत्यते । नायिका चेयं रतिप्रीतिमती तस्या एवोक्तिर्नायकं प्रति । प्रातःकालीनरतावसरे नायिका नायकचित्तं व्याक्षिपतीति ऋजवः ॥

मूर्खेष्वेव मूर्खसमावेशः, न पण्डितेष्विति कश्चिद्वक्ति—

अन्तर्भूतो निवसति जडे जडः शिशिरमहसि हरिण इव ।
अजडे शशीव तपने स तु प्रविष्टोऽपि निःसरति ॥ ६६ ॥

**अन्तर्भूत इति** । जडे । मूर्खत्वात् । पक्षे जलरूपत्वात् । जडो मूर्खः । पक्षे पशुत्वात् । अन्तर्भूतः । परैर्विशिष्याज्ञायमान इत्यर्थः । निवसति । शिशिरमहसि चन्द्रे हरिण इव । अजडे पण्डिते । स तु मूर्खस्तु । पक्षेऽजडे तेजोरूपत्वादिति भावः । तपने शशीव प्रविष्टोऽपि कुहूदिने चन्द्रमण्डलस्य सूर्यान्तर्हितत्वमिति ज्योतिर्वित्प्रसिद्धिः । निःसरति दूरीभवति । शीघ्रमेवेति भावः ॥

दूती 'नायिका त्वय्यासक्ता' इति वैद्यं वक्ति—

अगणितजनापवादा त्वत्पाणिस्पर्शहर्षतरलेयम् ।
आयास्यतो वराकी ज्वरस्य तल्पं प्रकल्पयति ॥ ६७ ॥

**अगणितेति ।** न गणिता जननिन्दा यया । एवं च वैद्यस्य तथाविधत्वेन प्रसिद्धिरित्यावेद्यते । त्वत्पाणिना स्पर्शः । नाडीप्रदर्शनार्थमिति भावः । तेन यो हर्षस्तदर्थं चञ्चला । एवं च संभोगसुखार्थं किं करिष्यतीति न विद्म इति ध्वन्यते । आयास्यतो ज्वरस्यागामिज्वरस्य चातुर्थिकादेस्तल्पं वराकी । एवं च कृपार्हत्वं व्यज्यते । प्रकल्पयति । एवं चोत्साहविशेषवत्ता द्योत्यते । नाडीविलोकनार्थं त्वदागमननिर्णयेन ज्वरागमनदुःखमपि न तया गण्यत इत्यासक्तिविशेषो ध्वन्यते ॥

एकवंशजन्यत्वेऽपि धनवत्तयैव प्रभुतेति कश्चिद्वक्ति । यद्वैकवंशजन्यत्वेऽपि कस्यचित्समृद्धिः कस्यचिन्न कश्चित्प्रधानं कश्चिद्गुणीभूत इति विधातुः सृष्टिर्विचित्रेति नात्र क्लेशादि विधेयमिति कंचन कश्चित्समाधत्ते—

अप्येकवंशजनुषोः पश्यत पूर्णत्वतुच्छताभाजोः ।
ज्याकार्मुकयोः कश्चिद्गुणभूतः कश्चिदपि भर्ता ॥ ६८ ॥

**अप्येकेति ।** एकवंशजयोरपि । वंशो वेणुः । पक्षे कुलम् । 'कुलत्वक्सारौ वंशौ' इत्यभिधानात् । एकपदेन कारणैक्याद्वैलक्षण्यानर्हत्वं ध्वन्यते । स्थूलावयववत्त्वम् । पक्षे समृद्धत्वम् । तुच्छत्वं सूक्ष्मत्वम् । पक्षे निर्धनत्वम् । तद्वतोर्ज्याकार्मुकयोः । अत्र 'अल्पाच्तरम्' इत्यनेन ज्याशब्दस्य पूर्वनिपातः कश्चिज्ज्यारूपो गुणभूतः । कश्चित्कार्मुकरूपो भर्ता । 'ज्याप्रधानौ गुणौ', 'धातृपोष्टारौ भर्तारौ' इत्यभिधानात् । इदं पश्यत । एवं चैकवंशजत्वेऽपि यस्मिन्पूर्णत्वं स एव भर्ता, नान्य इति व्यज्यते । यद्वैकवंशजन्यत्वेऽपि दैवाधीनतया कस्यचित्समृद्धिप्रभुत्वे कस्यचिदसमृद्धत्वाप्रधानत्वे इति नात्र खेद उचित इति ध्वन्यते । अथवाचेतनेऽपि गुणप्राधान्येनैव लक्षाप्तिः । अतो भवद्भिरप्यनयैव रीत्या स्थेयम् । न तु सर्वप्राधान्येनेति परस्पराहंकारशालिनां समाधानमिदम् ॥

नायिकासहचरी नायकं वक्ति—

अभिनवकेलिक्लान्ता कलयति बाला क्रमेण घर्माम्भः ।
ज्यामर्पयितुं नमिता कुसुमास्त्रधनुर्लतेव मधु ॥ ६९ ॥

**अभिनवेति ।** अद्भुतसुरतश्रान्ता बाला । एवं च कोमलाङ्गीत्वमावेद्यते ।

क्रमेण । कपोलाद्यङ्गक्रमेणेत्यर्थः । घर्माम्भः कलयति । ज्यां मौर्वीमर्पयितुम् । सज्यां कर्तुमित्यर्थः । नमिता कुसुमास्त्रस्य मदनस्य धनुर्लता मकरन्दमिव । एवं च यथा यथा सुरतविशेषारम्भस्तथैतस्याः श्रमातिशयः । अतो मध्ये मध्ये विश्रान्तिर्देयेति ध्वन्यते । तेन च किंचित्कालं तूष्णीमवस्थित्या पुनः पूर्ववद्दार्ढ्यं ते भावीति द्योत्यते । यद्वा ज्यामर्पयितुमित्यादिदृष्टान्तव्याजेन सुखादिदानप्रवृत्तेन त्वया नैतस्याः श्रमो गणनीय इति व्यज्यते । अथवा मदनधनुर्लताया यथा नमनकाले मधुबिन्दूद्गिरणं स्वाभाविकं तथैतस्याः सुरतकालीनस्वेदाम्भः स्वाभाविकम् । अतो न मनसि त्वयैतस्याः श्रमवत्ता संभावनीयेति द्योत्यते ॥

कश्चन विरही वक्ति—

**असती कुलजा धीरा प्रौढा प्रतिवेशिनी यदासक्तिम् ।**
**कुरुते सरसा च तदा ब्रह्मानन्दं तृणं मन्ये ॥ ७० ॥**

**असतीति** । असती । इत्यनेन स्वनिष्ठप्रेमशालित्वमावेद्यते । कुलजा वंशजा । इत्यनेन स्थिरप्रेमवत्त्वमावेद्यते । धैर्यवती धीरा । इत्यनेन स्थिरस्वभाववत्त्वम् । तेनापि तदेव । प्रौढा । इत्यनेन स्वतन्त्रत्वं तेन च संकेतकरणसमर्थत्वम् । प्रतिवेशिनी । इत्यनेन तदेव । रसशालिन्यासक्तिं यदा कुरुते तदा ब्रह्मानन्दं तृणं मन्ये । एवं चैतादृशनायिका ब्रह्मानन्दवदप्राप्येत्यर्थः ॥

चिरविरहखिन्नां नायिकां नायको वक्ति—

**अविरलपतिताश्रु वपुः पाण्डु स्निग्धं तवोपनीतमिदम् ।**
**शतधौतमाज्यमिव मे स्मरशरदाहव्यथां हरति ॥ ७१ ॥**

**अविरलेति** । अविरलपतिताश्रु । चिरकालीनदर्शनादिति भावः । पक्षे जलसंबन्धादिति भावः । पाण्डु । विरहादिति भावः । पक्ष उज्ज्वलरूपम् । स्निग्धं स्नेहशालि । पक्षे स्वाभाव्यादिति भावः । उपनीतं समीपदेशे प्रापितं वपुः शतधौताज्यमिव मे स्मरशरदाहव्यथां हरति । एवं च यथा जीर्णज्वरादेर्नाशकं शतवारक्षालितं घृतं तथा त्वद्वपुर्मम चिरकालीनसंतापापनोदकम् । अतः समालिङ्गय मामिति ध्वन्यते ॥

एतस्याः संभोगस्थानं केदार एवेति कश्चिद्वक्ति—

**अन्तर्निपतितगुञ्जागुणरमणीयश्चकास्ति केदारः ।**
**निजगोपीविनयव्ययखेदेन विदीर्णहृदय इव ॥ ७२ ॥**

**अन्तरिति** । अन्तर्निपतिता गुञ्जाश्च गुणश्च तै रमणीयः सुन्दरः । यद्वा

गुञ्जारूपो यो गुणः। शोभोत्कर्षजनकत्वादिति भावः। संभोगादिना गुञ्जाहारत्रुटनादिति भावः। केदारश्चकास्ति। निजा या गोपनकर्त्री। एवं च खेदौचित्यं द्योत्यते। तस्या विनयविनाशेन यद्दुःखं तेन विदीर्णहृदय इव। निपतितगुञ्जानामारक्तत्वादिति भावः। यथा स्वपालकस्य मुख्यवस्तुविनाशे सेवकस्य दुःखं भवति, तथा विनयस्यातिमुख्यत्वेन तन्नाशे केदारस्यातिदुःखमिति भावः। यद्वा नायिकान्यादृशचरणविज्ञानेऽप्यखिन्नां सखीमपरसखी वक्ति। अन्तरिति। गोपीपदेन नीचत्वं तेन च विनयव्ययेऽपि न तथा खेदार्हत्वमित्यावेद्यते। केदार इत्यनेनाचेतनस्यापि स्वामिनीविनयव्ययेन दुःखवत्ता। तव तु सचेतनाया नेति महदनुचितमित्यावेद्यते। अत एव गुणपदम्। सहृदयमित्यर्थः॥

परपुरुषरतानामनिवार्यं दौष्ठ्यमित्याह कश्चित्—

**अमुना हतमिदमिदमिति रुदती प्रतिवेशिनेऽङ्गमङ्गमियम्।**
**रोषमिषदलितलज्जा गृहिणी दर्शयति पतिपुरतः॥ ७३॥**

**अमुनेति**। रुदती। अत एव कोपकपटेन। न वास्तवमित्यर्थः। दलिता विनाशिता लज्जा यया। अमुना नायकेनेदमिदमङ्गं हतमित्यङ्गमङ्गम्। वक्षःस्थलादिकमित्यर्थः। पतिसमक्षम्। पतिपदं रक्षणकर्तृत्वेनाप्रियत्वं ध्वनयति। प्रतिवेशिने जारभूताय। प्रतिवेशिपदं निकटवर्तितया स्वदुःखनिवेदनयोग्यत्वं ध्वनयति। गृहिणी। एवं च गृहकर्मव्यापृताया अप्येतादृशी गतिस्तत्रान्यवार्ता क्वेति भावः। दर्शयति। पतिपुरतोऽप्येतादृशकर्तव्यतानिपुणाः स्त्रियो भवन्तीति सर्वथा न विश्वासस्तासां विधेय इति ध्वन्यते॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेताकारव्रज्या।

---

आकारव्रज्या

क्वचिदन्यत्र विहितकेलिं 'कथं न मय्यनुरागं दर्शयसि' इति वादिनं नायकं नायिका वक्ति—

**आन्तरमपि बहिरिव हि व्यञ्जयितुं रसमशेषतः सततम्।**
**असती सत्कविसूक्तिः काचघटीति त्रयं वेद॥ ७४॥**

**आन्तरमिति**। आन्तरमपि। इत्यपिना बहिर्व्यञ्जनेऽतिकाठिन्यमावेद्यते। रसं रागम्, शृङ्गारादिकम्, द्रवद्रव्यं च। 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे

रसः' इत्यभिधानात् । हि इति निश्चयेन । अशेषतो बहिरिव । व्यञ्जयितुं प्रकटीकर्तुम् । असती पुंश्चली, सत्कवेः सूक्तिः, काचघटी, इति त्रयं सततं वेद । एवं च नास्माकं बहिरङ्गरागप्रकटनज्ञानमित्यावेद्यते । तेन च यत्रैव बहिरङ्गानुरागज्ञापनसामर्थ्यं तत्रैव गच्छेति । प्रसादरूपगुणवत्त्वादेव सत्काव्यमिति वक्तीति कश्चित् ॥

कश्चिन्नायिकां वक्ति—

**आलोक एव विमुखी क्वचिदपि दिवसे न दक्षिणा भवसि ।**
**छायेव तदपि तापं त्वमेव मे हरसि मानवति ॥ ७५ ॥**

**आलोक एवेति** । आलोक एव दर्शन एव । पक्षे प्रकाश एव विमुखी । एवं चालिङ्गनादौ किं करिष्यसीति न विद्म इति भावः । क्वचिदपि कस्मिंश्चिदपि दिवसे दक्षिणानुकूलगामिनी । मानवति मानिनि । पक्षे परिमाणवति । तदपि त्वमेव मे छायेव तापं संतापम् । पक्ष आतपम् हरसि । एवं च त्वदतिरिक्ता न मम गतिरित्यवगत्याहमनुग्राह्य इति व्यज्यते ॥

कंश्चित्कंचित्प्रति वक्ति—

**आज्ञा काकुर्याच्ञाक्षेपो हसितं च शुष्करुदितं च ।**
**इति निधुवनपाण्डित्यं ध्यायंस्तस्या न तृप्यामि ॥ ७६ ॥**

**आज्ञेति** । आज्ञैवं कुर्विति, काकुर्दीनवचनम् । येनोद्दीपनादि भवतीति भावः । याच्ञामुकं मह्यं देहीति, आक्षेपः कथमिदं कृतमिति, हसितम् । आनन्दाविर्भावादिति भावः । शुष्करुदितम् । स्वस्मिन्नसामर्थ्यव्यञ्जनायेति भावः । इति तस्या निधुवनं सुरतं तत्संबन्धि पाण्डित्यं ध्यायन्न तृप्यामि । एवं चैतादृशकेलिकलाप्रावीण्यमन्यत्र नास्तीति व्यज्यते । तेन चैतादृशनायिकासुरतध्यानं समुचितमिति ॥

कांचिन्मानिनीं सखी समाधत्ते—

**आज्ञापयिष्यसि पदं दास्यसि दयितस्य शिरसि किं त्वरसे ।**
**असमयमानिनि मुग्धे मा कुरु भग्नाङ्कुरं प्रेम ॥ ७७ ॥**

**आज्ञापयिष्यसीति** । आज्ञां करिष्यसि । एवं च नायके स्वाधीनता भवित्रीति ध्वन्यते । न केवलमाज्ञाकारित्वम्, अपि तु प्रणिपातप्रवणता तस्य भविष्यतीत्याह—दयितशिरसि पदं दास्यसि किं त्वरसे । एवं चैतत्क्रमेण विधेयमिति भावः । मुग्धे अत एवासमयमानिनि, प्रेम भग्नाङ्कुरं मा कुरु । एवं च दृढे प्रेम्णि सर्वमेता-

दविधानं युक्तमिति प्रीत्या स्वाधीनतां नीत्वा पश्चात्कोपकरणमुचितमिति व्यज्यते। अथादौ दासभावं विधाय पश्चाच्चरणताडनं विधेयमिति लौकिकोक्तिरपि ॥

नायकः स्वस्य सखायं वक्ति—

आसाद्य भङ्गमनया द्यूते विहिताभिरुचितकेलिपणे ।
निःसारयताक्षानिति कपटरुषोत्सारिताः सख्यः ॥ ७८ ॥

**आसाद्येति ।** विहिता अभिरुचिता स्वेच्छाविषयीभूता या केलिस्तद्रूपः पणो यस्मिन् । यस्य पराजयस्तेन जयशालिरुचिविषयीभूतसुरतं देयमेवंरूपपणवतीति भावः । द्यूते भङ्गं पराजयं प्राप्यानया नायिकयाक्षान्पाशान्निःसारयतेति कपटरुषा मिथ्याकोपेन सख्य उत्सारिता दूरीकृताः । एवं चेदृशक्रीडनं न कदाप्यस्तु । अपसारयन्तु पाशानिति मिषेण सख्याद्युत्सार्य प्रतिज्ञातकेलिं कुरुष्वेति मां प्रत्यभिव्यञ्जितमिति व्यज्यते । तेन चैतादृशी नान्या चतुरेति भावः ॥

सखी नायिकामुपदिशति—

आदरणीयगुणा सखि महता निहितासि तेन शिरसि त्वम् ।
तव लाघवदोषोऽयं सौधपताकेव यच्चलसि ॥ ७९ ॥

**आदरणीयेति ।** आदरणीया गुणाः सौन्दर्यादयो यस्याः । पक्षे गुणास्तन्तवः । महता मान्येन । पक्ष उन्नतेन । तेन नायकेन । पक्षे सौधेन । शिरसि । पक्षेऽग्रभागे । निहितासि । एवं च नायकस्तवाज्ञां सर्वदा करोतीति न तस्यापराध इति भावः । तवायं लाघवदोषः । दोषपदेन लाघवे परित्याज्यत्वं द्योत्यते । सौधपताकेव यच्चलस्यस्थिरचित्ता भवसि । पक्षे चलनं कम्पः । एवं चैतादृशनायकं प्रति क्रोधादिना चाञ्चल्यकरणमनुचितं तवेति ध्वन्यते ॥

'एतादृशत्वदीयदर्शनेन ममासक्तिस्त्वय्यत्यन्तं समुदेति' इति कश्चित्कांचिद्वक्ति । यद्वा 'त्वया तिरस्कृतस्त्वदर्थमेवाहं तपः करोमि' इति कांचित्कश्चिदाह—

आर्द्रमपि स्तनजघनान्निरस्य सुतनु त्वयैतदुन्मुक्तम् ।
स्वस्थमवाप्तुमिव त्वां तपनांशूनंशुकं पिबति ॥ ८० ॥

**आर्द्रमिति ।** आर्द्रमपि । सजलत्वादिति भावः । पक्षे प्रेमवत्त्वादिति भावः । एवं च त्यागानर्हत्वं ध्वन्यते । स्तनजघनान्निरस्य । पक्ष आलिङ्गनाद्यदत्त्वेत्यर्थः । सुतनु । एवं च स्पृहणीयत्वमावेद्यते । त्वयोन्मुक्तमेतदंशुकं वस्त्रम् । पक्षेऽशुक-

मिव । सूक्ष्मत्वादिति भावः । एवं च विरहातिशय आवेद्यते । खस्थमन्तरिक्षस्थम् । पक्षे निरवलम्बनम् । एवं च त्वमेव ममावलम्बनमिति व्यज्यते । त्वामवाप्तुमिव सूर्यकिरणान्पिबति । एवं चाचेतनस्याप्यंशुकस्यैतादृशीं त्वामवलोक्यैतादृशी स्पृहा । किमु वाच्यं मादृशस्येति भावः । अथवा अचेतनांशुकमपि त्वत्समागमाय तपस्तपति तत्र का वार्ता सचेतनस्य ममेति भावः । अन्योऽप्यन्तरालावस्थितस्तपनकरपानमात्रेणैव तपस्तपतीति लौकिकम् ॥

कश्चित्कस्याश्चिच्चेष्टां वक्ति—

आरोपिता शिलायामश्मेव त्वं स्थिरा भवेति मन्त्रेण ।
मग्नापि परिणयापदि जारमुखं वीक्ष्य हसितैव ॥ ८१ ॥

**आरोपितेति** । 'अश्मेव त्वं स्थिरा भव' इति मन्त्रेण शिलायामारोपिता स्थापितचरणा । परिणयो विवाहस्तद्रूपापत् । दुःखदत्वादिति भावः । आपत्पदं दुःसहत्वमावेदयति । तया मग्नापि जारमुखं वीक्ष्य हसितैव । एवं चैते मूर्खाः, यत्प्रथमतो मद्विवाहः कृतस्तत्रापि स्थिरत्वप्रार्थना क्रियते, नैतावता त्वया भेतव्यमिति ध्वन्यते । यद्वा परमविपत्तौ पतितापि बहुभिः 'स्थिरा भव' इति प्रार्थितापि जारमुखमवलोक्य हसनेन स्वस्य चिन्ताविहीनत्वं प्रदर्शयति । सा त्वं त्वद्याप्यपरिणीता किमर्थं बिभेषीति काचित्कांचिद्वक्ति ॥

अन्याङ्गनागमनखिन्नां नायिकां नायकः समाधत्ते—

आयाति याति खेदं करोति मधु हरति मधुकरीवान्या ।
अधिदेवता त्वमेव श्रीरिव कमलस्य मम मनसः ॥ ८२ ॥

**आयातीति** । मधुकरीवान्यायात्यागच्छति, याति गच्छति, खेदं करोति । चाञ्चल्यस्वभावादिति भावः । एवं च तदागमने न मम सुखमिति द्योत्यते । मधु मकरन्दं हरति । उन्मादकत्वसंबन्धेन मधुपदेन द्रव्यं लक्ष्यते । एवं च न वास्तवं प्रेम तस्यामिति ध्वन्यते । मम मनसोऽधिदेवता त्वमेव । कमलस्य श्रीरिव । एवं च मन्मनसि सर्वदा त्वमेव वससि । सा तु कादाचित्कागमनवतीति न त्वया मयि विधेयः खेद इति द्योत्यते ॥

सखी नायिकामुपदिशति—

आसाद्य दक्षिणां दिशमविलम्बं त्यजति चोत्तरां तरणिः ।
पुरुषं हरन्ति कान्ताः प्रायेण हि दक्षिणा एव ॥ ८३ ॥

**आसाद्येति** । दक्षिणां याम्यां दिशमासाद्याविलम्बं शीघ्रं तरणिरुत्तरां दिशं

त्यजति । प्रकृतं वक्ति । दक्षिणा एव चतुरा एव कान्ताः प्रायेण बाहुल्येन । एवं चैका चतुरापि न हरति । तथा परक्षान्तिरिति भावः । पुरुषं हरन्ति । एवं च त्वया स्वचातुर्येणैव नायकः स्वाधीनताभाजनं विधेय इति व्यज्यते । पक्षे । कर्कटादिषड्राशिसंचरणरूपदक्षिणायने तरणेः क्रमेण सप्तपञ्चाशदष्टपञ्चाशदेकोनषष्टिषष्ट्येकषष्टिचतुर्विंशतिविकलासहितैकषष्टिकला इत्येवं द्रुतगतिः । मकरादिषड्राशिसंचरणरूपोत्तरायणे क्रमेण चतुर्विंशतिविकलासहितैकषष्टिषष्ट्येकोनषष्ट्यष्टपञ्चाशत्सप्तपञ्चाशत्कला इत्येवं मन्दगतिरिति ज्योतिर्वित्प्रक्रिया ॥

कश्चिदन्योक्त्या नायिकां स्तौति—

आदानपानलेपैः काश्चिद्गरलोपतापहारिण्यः ।
सदसि स्थितैव सिद्धौषधिवल्ली कापि जीवयति ॥ ८४ ॥

**आदानेति** । काश्चिदौषध्य आदानं मन्त्रपूर्वकं ग्रहणम्, पानं गलाधःकरणम्, लेपः सर्वाङ्गसंयोगः, एतैर्गरलस्योपतापहरणसमर्थाः । काप्यनिर्वचनीया सिद्धौषधिवल्ली जीवयति । एवं च दूरतोऽपि त्वया दर्शनमवश्यं देयमिति ध्वन्यते। यद्वा• न्याङ्गनाश्चलाञ्चलाकर्षणाधरपानसर्वाङ्गीणालिङ्गनैः संतापापनोदनसमर्थाः । त्वं केवलमवलोकिता विरहविगतासोरसुप्रदा भवसीति ध्वन्यते । तेन चान्याङ्गनाभ्योऽधिका त्वमिति स्तुतिर्व्यज्यते । यद्वा तस्या दर्शनमात्रेणैवाहं जीवामीति नायिकासखीं प्रत्युक्तिर्नायकस्य ॥

नायिकासखी नायकं वक्ति—

आन्दोललोलकेशीं चलकाञ्चीकिङ्किणीगणक्वणिताम् ।
स्मरसि पुरुषायितां तां स्मरचामरचिह्नयष्टिमिव ॥ ८५ ॥

**आन्दोलेति** । आन्दोलनमान्दोलस्तेन चञ्चलालकाम्, चपलमेखलाक्षुद्रघण्टिकासमूहस्य क्वणितं शब्दो यस्यास्ताम्, एतादृशीं पुरुषायितां विपरीतरतकारिणीं तां प्रसिद्धगुणां स्मरसीति । काका न स्मरसीत्यर्थः । एवं चैतादृशगुणशालिन्यास्तस्या यदि तवानुसंधानं भवेत्तर्हि कथमन्यत्रासक्तिसंभावनेति भावः । स्मरस्य चामरचिह्नस्य यष्टिमिव । एवं च यथा चामरादिराजचिह्नैः सर्वैरयं राजेति ज्ञायते तथानया मदनोऽयमिति । मदनप्रसिद्धिसंपादकत्वेनातिसौन्दर्यादिगुणवत्ता नायिकाया आवेद्यते ॥

नायको नायिकां वक्ति—

आक्षिपसि कर्णमक्ष्णा वलिरपि बद्धस्त्वया त्रिधा मध्ये।
इति जितसकलवदान्ये तनुदाने लज्जसे सुतनु ॥ ८६ ॥

**आक्षिपसीति**। हे सुतनु, अक्ष्णा नेत्रेण कर्णं श्रवणम्, राधेयं च। आक्षिपसि स्पृशसि, तिरस्करोषि च। त्वया वलिरपि त्रिवली। बवयोरैक्यात् दैत्यश्च। मन्ये त्रिधा बद्धः। त्रिधेत्यनेनात्यन्तं निर्जितत्वं द्योत्यते। त्रिवलीवाचकस्य वलिशब्दस्य पुंस्त्वं श्लेषानुरोधान्निरङ्कुशत्वाद्वा। इत्यमुना प्रकारेण जिताः सकला वदान्याः प्रदातारो यया तत्संबुद्धिः। तनुदाने शरीरदाने, स्वल्पदाने च। लज्जसे। एवं चात्यन्तौदार्यशालितया तव तनुदानमपि तनुदानमेवेति ध्वन्यते। तेन चैतद्दाने विलम्बो न विधेय इति भावः॥

कस्यचिदत्यन्तनायिकासक्तिं कश्चिद्वक्ति—

आक्षेपचरणलङ्घनकेशग्रहकेलिकुतुकतरलेन।
स्त्रीणां पतिरपि गुरुरिति धर्मं न श्राविता सुतनुः॥ ८७ ॥

**आक्षेपेति**। आक्षेपस्तिरस्कारः, चरणलङ्घनं चरणाहतिः, केशग्रहः, एतेषां यत्केलिकुतुकं तत्र तरलेन समासक्तेन स्त्रीणां पतिर्गुरुरिति धर्मं श्राविताऽपि न। एवं च साहजिकधर्मचर्यायामपि नैतदुदीरितं तत्र नोपदिष्टमिति किमु वाच्यमिति भावः। एवं चैतच्छ्रवण आक्षेपादि न विधेयं त्वयेति भीतिर्ध्वन्यते। तेन चात्यन्तकेलिलम्पटत्वम्। श्वशुरादिसमुच्चायको यथास्थित एवापिशब्द इति ऋजवः॥

नायिका नायकाकस्मिकसङ्गं सखीं वक्ति—

आगच्छतानवेक्षितपृष्ठेनार्थी वराटकेनेव।
मुषितास्मि तेन जघनांशुकमपि वोढुं नशक्तेन॥ ८८ ॥

**आगच्छतेति**। हे सखि, अनवेक्षितं वीक्षणाभाववद्यत्पृष्ठं तेनागच्छतागमनवता। एवं च संमुखागमनाभावेन दर्शनाभावो व्यज्यते। पक्षेऽनवेक्षितं पृष्ठं यस्य। आगच्छतेति। हे सखि, अनवेक्षितं वीक्षणतामप्राप्तेन नायकेन जघनस्य यदंशुकं वासस्तदपि वोढुं मुषितास्म्यसमर्था जातास्मि। एवं चोत्तरीयवसनग्रहणं दूरापास्तमिति भावः। नन्वागमनसमय एव न कुतो गतं त्वयेत्यत आह—न विद्यते शक्तो यस्मात्तेन। समर्थेनेत्यर्थः। एवं च ततोऽपसरणमशक्यमिति भावः। यद्वा

काका न मुषितास्मि। अपि तु मुषितास्मि। पक्षेऽशुरेवांशुकस्तं किरणमपि वोढुं नशक्तेनासमर्थेन। दृष्टान्तमाह—वराटकेन कपर्दनार्थीव याचक इव। एवं च पश्चाद्भागीयकिरणशून्येन सच्छिद्रेण कपर्देन यथा याचको मुषितो भवति तथाकस्मिकपश्चादागमनशालिना स्नानावसानसमये जघनांशुकग्रहणेऽपि हृतचित्ता जातेति भावः। गौडदेशे पृष्ठभागच्छिद्रवता कपर्देन व्यवहरन्ति तदभिप्रायेणेदम्। यद्वानवेक्षितपृष्टेन स्वपश्चाद्भागानवलोकनेन। एवं च भीतिशून्यत्वेन विह्वलत्वं व्यज्यते। जघनांशुकमपि वोढुं नशक्तेन। एवं च विरहक्षीणतया वाससि रूपत्वं ध्वन्यते। एतादृशेन मुषितास्मि। एवं च तथाविधतदीयासक्तिमालोच्याहमपि तन्निमग्नमनस्का जातास्मीति नायिका वक्तीत्यर्थः। अन्योऽपि चोरः पृष्ठतः समागत्य लुण्ठनं करोति यथा जघनांशुकमपि न भवतीति लौकिकम्। नशक्तेनेति वचनात्तथा मुषितास्मि यथा जघनांशुकमपि वोढुमसमर्थैवेत्यवधारणार्थक इवशब्दः॥

प्रणयकोपमवलम्ब्य सुप्तां नायिकां प्रति सखी वक्ति—

आकुञ्चितैकजङ्घं दरावृतोर्ध्वोरु गोपितार्धोरु।
सुतनोः श्वसितक्रमनमदुदरस्फुटनाभि शयनमिदम्॥ ८९॥

**आकुञ्चितेति**। आकुञ्चितैका जङ्घा यस्मिन्, दरमीषदावृत ऊर्ध्वमूरुर्यत्र, गोपितोऽत्यन्तमाच्छादितोर्धोऽरुर्यत्र, श्वसितक्रमेण नमद्यदुदरं तेन स्फुटा नाभिर्यत्र। क्रियाविशेषणान्येतानि। सुतनोरिदं शयनम्। 'स्यान्निद्रा शयनम्' इत्यमरः। एवं च त्वमेवैनां प्रसादयेति व्यज्यते। यद्वा सुरतश्रान्तशयनजातिवर्णनमेतत्॥

सखी नायकं प्रति नायिकासक्तिविशेषमाह—

आदाय धनमनल्पं ददानया सुभग तावकं वासः।
मुग्धा रजकगृहिण्या कृता दिनैः कतिपयैर्निःस्वा॥ ९०॥

**आदायेति**। अनल्पं बहु द्रव्यमादाय गृहीत्वा तावकं वासो वस्त्रं ददानया रजकगृहिण्या। एवं च संसारनिर्वाहकत्वं तस्या इति भावः। मुग्धा सुन्दरी, मूढा च। कतिपयैर्दिनैर्निःस्वा विगतद्रव्या कृता। एवं च वसनदर्शनमात्रेण धनव्ययमपि न गणयति, तत्र का वार्ता त्वदङ्गसङ्ग इति व्यज्यते॥

कस्यचिद्दुष्टस्याधिकारदापनाय प्रयत्नशालिनं प्रति कश्चिदन्योक्त्या वक्ति—

आस्तां वरमवकेशी मा दोहदमस्य रचय पूगतरोः।
एतस्मात्फलितादपि केवलमुद्वेगमधिगच्छ॥ ९१॥

**आस्तामिति**। अस्य पूगतरोर्दोहदम्। फलजननार्थमिति भावः। मा रचय।

अवकेशी निष्फलः। 'वन्ध्योऽफलोऽवकेशी च' इत्यमरः। आस्तामिदं वरम्। अत्र हेतुमाह—एतस्मात्फलितात्केवलम्। एवं चान्यफलाभाव इति भावः। उद्वेगमधैर्यादि फलम्। क्रमुक इत्युपक्रम्य 'अस्य तु। फलमुद्वेगम्' इत्यमरः। अधिगच्छ जानीहि। एवं चैतस्याधिकारे संपादिते तवोद्वेग एव भविष्यतीति॥

दुष्टावलम्बनपुरःसरारब्धकार्यस्यावश्यमनर्थजनकत्वमिति कश्चिदन्योक्त्या वक्ति—

आरब्धमब्धिमथनं स्वहस्तयित्वा द्विजिह्वममरैर्यत्।
उचितस्तत्परिणामो विषमं विषमेव यज्जातम्॥ ९२॥

**आरब्धमिति**। अमरैर्देवैः। एवं चैतादृशोद्योगशालित्वं युक्तमित्यावेद्यते। यद्द्विजिह्वं सर्पम्। पक्षे तात्कालिकान्यथावादिनम्। स्वहस्तयित्वा स्वकरे विधाय। पक्षे स्वाधीनीकृत्य। अब्धिमथनमारब्धं तस्य परिणाम उचित एव यद्विषमम्। दाहकत्वादिति भावः। विषं जातमुत्पन्नम्। एवं च यथा द्विजिह्वावलम्बनेन समुद्रमथने विषमभवत्तथा दुष्टावलम्बनेनारब्धकार्यपरिणामेऽसम्यगेव फलं भावीति व्यज्यते। यथास्थितैवकारयोजनं त्वन्यफलोत्पत्तिश्रवणादसमञ्जसम्। यद्वामराणामप्येतादृशावलम्बनपुरःसरारब्धकार्य एतादृशमभवत्तत्र का वार्तान्यस्येति व्यज्यते॥

आवर्जितालकालि श्वासोत्कम्पस्तनार्पितैकभुजम्।
शयनं रतिविवशतनोः स्मरामि शिथिलांशुकं तस्याः॥ ९३॥

**आवर्जितेति**। आवर्जिता संयमिता केशपङ्क्तिर्यत्र, श्वासैरुत्कम्पौ यौ स्तनौ तयोरर्पित एको भुजो यत्र, शिथिलमंशुकं यत्र, रत्या विवशा स्वानधीना तनुर्यस्यास्तस्याः। एवं च निःसहाङ्गत्वं ध्वन्यते। शयनं स्मरामि। सुरतश्रान्तनायिकास्वापवर्णनमेतत्॥

नायको नायिकां वक्ति—

आम्राङ्कुरोऽयमरुणश्यामलरुचिरस्थिनिर्गतः सुतनु।
नवकमठकर्परपुटान्मूर्धेवोर्ध्वं गतः स्फुरति॥ ९४॥

**आम्रेति**। चूताङ्कुरोऽरुणश्यामला रुचिर्दीप्तिर्यस्य। अस्थि कर्कशोपरिभागः। ततो निःसृतः। हे सुतनु स्फुरति। नवो नूतनो यः कमठस्तस्य यत्कर्परपुटं पृष्ठास्थि तस्मादूर्ध्वं निःसृतो मूर्धेव। एवं चाम्राङ्कुरोत्पत्तिकथनेन, कमठार्भकस्मारणेन, प्रावृट्कालागमनोपन्यासेन, नेदानीं ते मानविधानमुचितमिति व्यज्यते। यद्वाम्राङ्कुरोऽयमित्यादिना प्रावृट्प्रादुर्भावशंसनेनावश्यं पतिस्ते समायास्यतीति सखी

चिरविरहखिन्नां नायिकां समाधत्त इत्यर्थः । केचितु व्रीडाकरसंस्थानसादृश्यावधारणेन सामान्यवनितामुपहसति कश्चिदित्याहुः । यत्तु नायिकाचित्तव्याक्षेपपरमिदमिति तत्केनापि नायिकाचित्तव्याक्षेपासंपादनाद्वात्स्यायनादिभिरकथनाच्चानुचितमित्याभाति । एवं 'दरफुडिअ' इत्यादिप्राकृतगाथापि योज्या ॥

कश्चित्कंचित्प्रति वक्ति—

**आभङ्गुराग्रबहुगुणदीर्घास्वादप्रदा प्रियादृष्टिः ।**
**कर्षति मनो मदीयं ह्रदमीनं बडिशरज्जुरिव ॥ ९५ ॥**

**आभङ्गुरेति** । आभङ्गुराग्रा कुटिलकटाक्षा, बहुगुणा वशीकरणतादिशालिनी । यद्वार्जुनकृष्णरक्तरूपशालिनी । दीर्घा कर्णान्ते प्रसरणशीला, आस्वादप्रदा सुखदा, प्रियादृष्टिः । पक्षे कुटिलाग्रा, बहुतरसूत्रैर्महत्तरा । यद्वा बहुतन्तुमयी । लम्बायमाना, मधुरवस्तुदात्री । एवं च मोचनायोग्यत्वम्, दृढत्वम्, दूरतोऽपि कार्यसंपादकत्वम्, अवश्यं जनलोभनीयत्वं च क्रमेणोभयत्र ध्वन्यते । मदीयं मनः कर्षति । एवं च न ममापराध इति भावः । ह्रदमत्स्यम् । ह्रदपदेन स्वस्मिन्गाम्भीर्यमावेद्यते । बडिशरज्जुरिव । 'बडिशं मत्स्यवेधनम्' इत्यमरः । एवं च यथा बडिशरज्ज्वाकृष्टमत्स्यस्य ह्रदावस्थितिरसंभाविनी तथा प्रियादृष्ट्याकृष्टस्य मच्चेतसोऽप्यवस्थितिरिति व्यज्यते । तेन च ज्ञानशून्यत्वं तेनापि त्वदुपदेशापात्रमहमिति ॥

नायिकासखी नायकं वक्ति—

**आलप यथा यथेच्छसि युक्तं तव कितव किमपवारयसि ।**
**स्त्रीजातिलाञ्छनमसौ जीवितरङ्का सखी सुभग ॥ ९६ ॥**

**आलपेति** । यथा यथेच्छसि तथालप त्वन्मनसि यदायाति तद्यथेष्टं वद । वाच्यावाच्यविचारं मा कृथा इति भावः । इदं युक्तं तव । न ममेति भावः । यद्वा नान्यस्य समीचीनस्य । कितव धूर्त । एवं चैतादृशवक्तृतायोग्यत्वं तवेति भावः । किमपवारयसि गोपयसि । दुष्टो नेति वदसीति भावः । यद्वा यथा समाधातुं शक्यं यथा वचनरचनां कुरु । एवं च तत्र नास्माकमास्थेति भावः । एवं च गोपनेन किं सर्वमेवास्माभिस्त्वद्वृत्तं ज्ञायत इति व्यज्यते । स्त्रीमात्रकलङ्कभूतेयं मत्सखी । एवं चान्याभिर्नैवंविधं सोढुं शक्यमिति भावः । जीवितार्थं रङ्का दीना । एवं च त्वदनालोकनेन तस्या मरणमेव भावीति भावः । सुभग । कथमन्यथेदृशप्रियाप्राप्तिरिति भावः । एवं चेयं जीवितमात्राभिलाषिणी त्वदीयमेतादृशदुश्चेष्टितं

सहते, नान्यथैवं सह्यमिति स्वसख्यासक्तिर्नायके तस्य चेतरनायकाधिक्यं व्यज्यते। तेन तथाविधायां तस्यां तवैतादृशाचरणमनुचितमिति ॥

काचिन्नायिका नायकं प्रत्यन्योक्त्या वक्ति—

आस्वादितोऽसि मोहाद्बत विदिता वदनमाधुरी भवतः।
मधुलिप्तक्षुर रसनाच्छेदाय परं विजानासि ॥ ९७ ॥

**आस्वादितोऽसीति**। मधुलिप्तपदेनोपरितना माधुर्यवत्ता व्यज्यते। क्षुरपदेन क्षतजननयोग्यत्वं ध्वन्यते। मोहाद्भ्रमादास्वादितोऽसि। भवतो वदनस्य माधुरी विदिता। बत खेदे। एतदेवाह—रसनाच्छेदाय परं विजानासि। एवं च केवलं वदनमाधुर्यमात्रेण परकीयं वाक्प्रसरं खण्डयित्वान्तर्दौष्ट्यं करोषीति व्यज्यते। यद्वा प्रीत्यारम्भ एवैतादृशं त्वया कृतम्, अतोऽग्रे त्वत्संगतिरत्यन्तदुःखदैव भाविनीति नातस्त्वत्संगतिमहं विधास्य इति व्यज्यते ॥

अनासादितनायकरसां सामान्यवनितां सखी वक्ति—

आकृष्टिभग्नकटकं केन तव प्रकृतिकोमलं सुभगे।
धन्येन भुजमृणालं ग्राह्यं मदनस्य राज्यमिव ॥ ९८ ॥

**आकृष्टिरिति**। आकृष्ट्या। अवलम्बनेनेत्यर्थः। पक्षे विमर्देन। भग्नं कटकं वलयम्। पक्षे सैन्यम्। यस्याः। एवं चावलम्बनमात्रेण भञ्जनार्हत्वप्रतिपादनेन, वलयेऽतितनीयस्त्वद्योतनेन, कामिन्यामतिकोमलाङ्गीत्वं द्योत्यते। प्रकृत्या स्वभावेन। पक्षे प्रजाभिः। कोमलं मृदु। पक्षे सौम्यम्। सुभगे सौभाग्यशालिनि तव भुजमृणालम्। स्वभावकोमलत्वेऽपि मृणालरूपत्वप्रतिपादनेनातिकोमलत्वं ध्वन्यते। यद्वा संतापनोदकत्वमात्रमत्र केन धन्येन ग्राह्यम्। मदनस्य राज्यमिव। एवं च यस्य तव पाणिस्पर्शो भविता स मदनमहीपतिरेवेति व्यज्यते। तेन च त्वं रतिरूपेति। यद्वा बलादाकृष्टकरां सामान्यवनितामवलोक्य तत्सखी वक्ति। भग्नकटकमित्यनेन वलयार्थमेतस्माद्वसु ग्राह्यमिति व्यज्यते। धन्येन धनवतेत्यर्थः। केन सुखेन ग्राह्यम्। एवं चान्येन न ग्रहीतुं शक्यमिति भाव इत्यर्थः। अविवाहितां कांचित्काचिद्वक्तीत्यपि ॥

कश्चित्कांचिद्वक्ति—

आरुह्य दूरमगणितरौद्रक्लेशा प्रकाशयन्ती स्वम्।
वातप्रतीच्छनपटी वहित्रमिव हरसि मां सुतनु ॥ ९९ ॥

**आरुह्येति**। दूरमारुह्य। प्रासादशिखरमिति भावः। अगणितो रौद्रो

दुःसहः । पक्षे धर्मसंबन्धी क्लेशो यया । स्वमात्मानं प्रकाशयन्ती मां सुतनु हरसि स्वाधीनतां नयसि । वातप्रतीच्छनपटी वातानुकूलगमनजनकं वस्त्रं वहित्रमिव नावमिव । वहित्रपदेन सहनशीलत्वमावेद्यते । एवं च त्वद्दर्शनेनाहमितः सत्वरमागत एवेत्यवेहीति व्यज्यते ॥

केषांचिदाश्रयेण कंचिदपकर्तुमुद्यतं कश्चिदन्योक्त्या वक्ति—

आयासः परहिंसा वैतंसिकसारमेय तव सारः ।
त्वामपसार्य विभाज्यः कुरङ्ग एषोऽधुनैवान्यैः ॥ १०० ॥

**आयास इति** । हे वैतंसिकस्य मांसिकस्य । एवं चैतस्य मांसदानमशक्यमिति व्यज्यते । 'वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम्' [ इत्यमरः ] । सारमेय कुक्कुर । आयासः श्रमः, परस्य हिंसा प्राणनिर्गमफलको व्यापारः, तव सारः सारभूतम् । नान्यदिति भावः । एतदेवाह—त्वामपसार्य दूरीकृत्य । बलात्कारादिति भावः । एष कुरङ्गो हरिणः । एवं च कृपार्हत्वं ध्वन्यते । अधुनैव । एवं च पश्चात्प्रतीकाराभावो व्यज्यते । अन्यैर्मांसिकानुयायिभिर्विभाज्यः । विभज्य ग्राह्य इत्यर्थः । एवं चैतादृशानुचितकार्यकरणे तव न किंचित्फलम्, प्रत्युत दुःखादीतीदृशं न विधेयमिति व्यज्यते ॥

कश्चन कस्यचिदग्रे कस्यचिद्दौत्यमन्योक्त्या वक्ति—

आनयति पथिकतरुणं हरिण इह प्रापयन्निवात्मानम् ।
उपकलमगोपि कोमलकलमावलिकवलनोत्तरलः ॥ १०१ ॥

**आनयतीति** । कोमला ये कलमास्तेषामावलयस्तासां कवलन उत्तरल उत्कण्ठितो हरिण आत्मानं प्रापयन्निव । न वास्तवमित्यर्थः । एवं च धूर्तत्वं व्यज्यते । पथिकतरुणम् । पथिकपदेन विरहखिन्नत्वं द्योत्यते । तरुणपदेन कलमगोपिकास्पृहणीयत्वं व्यज्यते । कलमाः शालिविशेषास्तद्रक्षणकर्त्र्याः सविधे आनयति प्रापयति । एवं च कलमगोपिकायाः पथिकतरुणासक्तौ स्वयं कलमभक्षणं सुखेन करिष्यामीति धियेति भावः । एवं च स्वार्थप्रवणतयानेनैतस्या दौत्यं क्रियत इति व्यज्यते । यद्वा मृगोऽपि स्वार्थमेतादृशं कर्म कर्तुं जानाति, तत्र किं वाच्यं मनुष्यरूपायास्तवेति । नाहमिदं कर्म जानामीति वादिनीं कांचन प्रलोभनपुरःसरं काचिद्वक्ति । यद्वा यस्या एव स्वार्थेच्छा सैव मदीयं दौत्यं करिष्यतीति काचित्कांचिद्दूतीं वक्ति । अथवैतमेतस्या दर्शयित्वासक्तिमुत्पाद्यैतस्या धनमनेन भुज्यत इति कश्चित्कांचिद्वक्ति । यद्वा मृगेणापि गोपिकाकलमभक्षणेन तरुणसंगमरूपोपकारस्तस्याः क्रियते, त्वया तु न

तथेति काचिद्दूतीमुपालभते । अथवा स्वार्थपुरःसरतयैतादृशं कर्तुं शक्यमिति कांचिदन्योक्त्या वदति ॥

किं त्वयैतादृशमकारि येनायमधुनान्यादृशं वक्तीति वादिनीं सखीं नायिका वक्ति—

आसीदेव यदार्द्रः किमपि तदा किमयमाहतोऽप्याह ।
निष्ठुरभावादधुना कटूनि सखि रटति पटह इव ॥ १०२ ॥

**आसीदिति ।** अयं नायको यदार्द्र एव मद्विषयकरसवानेवासीत्तदाहतोऽपि किमपि किमाहावादीत् । नेत्यर्थः । अयमेवेति योजना वा । एवं च सर्वमेतत्तवैव प्रत्यक्षमिति व्यज्यते । 'एषः' इत्यपि पाठः । सखि, अधुना निष्ठुरभावात्प्रेमाभावात् । पक्षे शुष्कत्वात् । कटूनि रटति पटह इव । 'आनकः पटहोऽस्त्री' इत्यमरः । एवं च न ममापराधः, किं त्वयमेव निष्ठुरत्वादेतादृशं वक्तीति ध्वन्यते । पटहोऽप्यार्द्रस्ताडितो न शब्दं जनयति, शुष्कस्तु जनयति तद्वदिति भावः ॥

त्वच्चेष्टितमिदमाकर्ण्य नायिका त्वां किं किं न करिष्यतीति वादिनीं नायिकासखीं नायको वक्ति—

आज्ञाकरश्च ताडनपरिभवसहनश्च सत्यमहमस्याः ।
न तु शीलशीतलेयं प्रियेतरद्वक्तुमपि वेद ॥ १०३ ॥

**आज्ञाकर इति ।** यद्वा यदि त्वमेतस्याः सर्वदाज्ञाकार्यसि तर्हीयं कथं मुखरा भविष्यतीति वादिनीं नायको वक्ति । आज्ञां करोत्येतादृशः । ताडनम्, परिभवस्तिरस्कारः । ताडनापेक्षया तिरस्कारे दुःसहत्वं ध्वन्यते । यद्वा ताडनजन्यपराभवः । एवं च वचनजन्यपराभवस्याकिंचित्करत्वं व्यज्यते । एतत्सहनः । अस्या नायिकायाः । दूरस्थत्वेऽपि प्रत्यक्षवन्निर्देशेन सर्वदा तद्गतमनस्कत्वं तेनान्यादृशाचरणाभावो व्यज्यते । अहमस्मि । शीलेन स्वभावेन शीतला सौम्या । एवं च स्वभावस्य दूरीकर्तुमशक्यत्वेन मदपराधनिवेदकस्य वृथा श्रमवत्तेति व्यज्यते । तेन त्वया तत्र न किमपि वाच्यमिति । इयं प्रियेतरदप्रियं वक्तुमपि । एवं च कर्तुं नेति किमु वाच्यमिति भावः । न वेद ॥

एतस्मादिदं भविष्यति न वेत्यविचार्य कार्यकारिणमन्योक्त्या कश्चिद्वक्ति—

आधाय दुग्धकलशे मन्थानं श्रान्तदोर्लता गोपी ।
अप्राप्तपारिजाता दैवे दोषं निवेशयति ॥ १०४ ॥

**आधायेति ।** दुग्धस्य कलशे पात्रे मन्थानमाधाय श्रान्ता दोर्लता यस्याः सा

गोपी गोपस्य स्त्री । एवं च विवेकविधुरत्वं ध्वन्यते । एवमपि न प्राप्तः पारिजातवृक्षो यया सा दैवे दोषं निवेशयति स्थापयति । एवं च यथा देवैः क्षीरसमुद्रमथनेन पारिजातो लब्धः स च कृष्णेन सत्यभामाया दत्तस्तर्हि मयापि क्षीरं निर्मथ्य तं संप्राप्य सत्यभामाधिकया भवितव्यमिति कृते भाण्डक्षीरमथने तदप्राप्त्या दैवं निन्दति, न स्वमौर्ख्यमिति भावः । एवं च यतो यद्भविष्यतीति निर्णयस्तत्रैव तदर्थं प्रवृत्तिरुचितेति ध्वन्यते । यद्वैतस्मान्मम सुखं भविष्यति न वेत्यनवधार्य कस्मिंश्चिदासक्तिं विधाय तदप्राप्त्या दैवविनिन्दिकां काचिदन्योक्त्या वक्ति । यत्तु पारिजातं नवनीतमित्याह तत्तथा कोपाद्यश्रवणादसम्यक् ॥

कश्चिन्नायिकासाधुत्वं स्वस्य सखायं वक्ति—

आस्तां मानः कथनं सखीषु वा मयि निवेद्य दुर्विनये ।
शिथिलितरतिगुणगर्वा ममापि सा लज्जिता सुतनुः ॥१०५॥

**आस्तामिति ।** निवेदितुं योग्यो दुर्विनयो यस्तैतादृशेऽपि मयि सति । एवं चावश्यकथनीयत्वमपराधे ध्वन्यते । मान आस्ताम् । न कृत इत्यर्थः । न केवलं मानासंपादनम् । अपि तु सखीषु । सखीपदं कथनार्हतां द्योतयति । कथनं वा । मदपराधस्येति भावः । न कृतमित्यर्थः । शिथिलितो रतिसंबन्धिगुणानां गर्वो यया सा सुतनुर्मम लज्जिता । एवं च यदि मयि गुणाः स्युस्तदानेनान्यत्रासक्तिः कथं कर्तुं शक्येति धिया संजातलज्जा मां प्रत्यभूत्, अतो न मानमकरोत्, न वा सखीष्वकथयदिति भावः । अथवा सापराधत्वेन मम लज्जायोग्यत्वेऽपि सैव स्वस्मिन्गुणाभावशङ्कया सलज्जा न मानादिकमकरोदिति भावः । अथवा ममापीति यथास्थित एवापिः । एवं चान्यं प्रति लज्जाकरणादीति किमपूर्वमिति भावः । यद्वा निवेदयितुं योग्यो मय्येव मदीयो दुर्विनयः । सोऽपि लज्जया मां प्रत्यपि नोक्तस्तत्र का वार्तान्यकथनादेरिति भावः ॥

काचित्प्रियागमनोत्सवनैमित्तिकं तण्डुलाद्युज्ज्वलपिष्टद्रवलिप्तकरतलादिना चित्रकरणमङ्गलगानरूपमातृतर्पणविधानमन्यजनभीत्या स्नानावसर एवावर्तादिच्छद्मना करोतीति काचित्कांचिद्वक्ति—

आवर्तैरातर्पणशोभां डिण्डीरपाण्डुरैर्दधती ।
गायति मुखरितसलिला प्रियसंगममङ्गलं सुरसा ॥ १०६ ॥

**आवर्तैरिति ।** डिण्डीरपाण्डुरैः फेनश्वेतैः । 'डिण्डीरोऽब्धिकफः फेनः' इत्य-

मरः । एवं च तण्डुलादि द्रवसाजात्यं ध्वन्यते । आवर्तैः । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । एवं च करतलकृतचित्रसाजात्यं व्यज्यते । आतर्पणस्य शोभां दधती कुर्वती । मुखरितं सशब्दं कृतं सलिलं जलं यया । एवं चैतद्ध्वनिना स्वगानकरणतिरोधानमावेद्यते । यद्वा सलिलध्वनिमेव गानत्वेन संपादयतीत्यत्यन्तजनभीतिमत्त्वमावेद्यते । तच्चात्यन्तचातुरीम् । सुरसा । एवं च रसातिशयवत्त्वादेवैतादृशाचरणप्रवणत्वमिति द्योत्यते । प्रियसंगमहेतुकं मङ्गलं गायति । नायिका चेयं परकीया ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेताकारव्रज्या ।

---

इकारव्रज्या ।

रात्रिसुरतश्रमसुप्तां नायिकां सखी शिक्षयितुं वक्ति—

इयमुद्वर्तिं हरन्ती नेत्रनिकोचं च विदधती पुरतः ।
न विजानीमः किं तव वदति सपत्नीव दिननिद्रा ॥ १०७ ॥

**इयमिति** । इयं तव दिननिद्रा सपत्नीवोद्वर्तिं गमनम् । पक्षे उत्कृष्टताम् । हरन्ती । नेत्रनिकोचं नयनसंकोचम् । आलस्यादिति भावः । पक्षे नेत्रविकारम् । द्वेषादिति भावः । विदधती पुरतः । तवेति भावः । एवं च त्वद्भीतिशून्यत्वं द्योत्यते । किं वदतीति न विजानीमः । एवं च यथा सपत्नी दुश्चरितवत्तामारोपयितुं समर्था तथेयं तव दिननिद्रा, इत्यतो मुखैनामिति ध्वन्यते । यद्वा नेत्रसंकोचम्, अर्थात्तव, कुर्वती । सपत्न्याः प्रौढिवशाद्भयेनेति भावः । तव दिननिद्रा पुरतोऽग्रे किं वदति वदिष्यति । तन्न विद्म इत्यर्थः । एवं चेदानीं यथातथा समाधातुं शक्यमग्रे त्वनिष्टमेवानया भावीति ध्वन्यते । नायिका चेयं परकीया ॥

इदमुभयभित्तिसंततहारगुणान्तर्गतैककुचमुकुलम् ।
गुटिकाधनुरिव बालावपुः स्मरः श्रयति कुतुकेन ॥ १०८ ॥

**इदमिति** । इदमुभयभित्तावुभयपार्श्वे संततहारगुणस्तदन्तर्गत एककुचमुकुलो यस्मिंस्तद्बालाया मुग्धाया वपुर्गुटिकाधनुरिव गुटिकास्त्रमिव स्मरः श्रयति कुतुकेन । वैकक्षिकमालान्तर्गतकुचमुकुलत्वादिति भावः ॥

व्यवायस्थैर्याय कान्तचित्तं व्याक्षेप्तुं नायिका वक्ति—

इह शिखरिशिखरावलम्बिनि विनोददरतरलवपुषि तरुहरिणे ।
पश्याभिलषति पतितुं विहगी निजनीडमोहेन ॥ १०९ ॥

**इहेति** । इह शिखरी वृक्षः । 'तरुशैलौ शिखरिणौ' इत्यमरः । तच्छिखरावलम्बिनि । क्वचित् 'शिखा' इति पाठः । विनोदेन दरमीषत्तरलं चञ्चलं वपुर्यस्य तस्मिंस्तरुहरिणे शाखामृगे । अत्रोभयपदयोः परिवृत्तिसहत्वम् । विहगी निजं यन्नीडं स्थानम् । 'कुलायो नीडमस्त्रियाम्' इत्यमरः । तद्भ्रमेण पतितुमभिलषति । इदं पश्य । एवं च व्यवायस्थैर्यायैतादृग्ध्यानं विधेयमिति व्यज्यते । उक्तं च— 'वानरं चपलं ध्यायेद्वृक्षशाखावलम्बिनम्' इति । अन्यत्रापि—'शाखामृगमतिचपलं क्षितिरुहनिहितं विचिन्तयेत्प्राज्ञः । अपि मणिमुखपर्यन्तप्राप्तं बीजं हि नो गलति ॥' इति ॥

अन्याङ्गनाविलोकनजन्यमानवतीं नायिकां नायको यथासिद्धकुतूहलेन प्रसादयति—

इक्षुर्नदीप्रवाहो द्यूतं मानग्रहश्च हे सुतनु ।
भ्रूलतिका च तवेयं भङ्गे रसमधिकमावहति ॥ ११० ॥

**इक्षुरिति** । हे सुतनु, इक्षुः, नदीप्रवाहः, द्यूतम्, मानग्रहश्च, तवेयं भ्रूलतिका च, भङ्गेऽधिकं रसमावहति । अत्र भङ्गरसशब्दौ क्रमेण दन्तचर्वणीयत्वातिशयसेत्वादिबन्धनपराजयपरित्यागवक्रतामृष्टतातिशयजलाधिक्यक्रीडनाधिकोत्साहकषायितवस्त्रानुरागातिशयतुल्यप्रीत्यतिशयचमत्कारविशेषार्थकौ । एवं च त्वदीयकुटिलभ्रुकुटिदर्शनेन ममाधिकं सुखमुत्पद्यत इति व्यज्यते । यद्वा तव मानग्रहः, भ्रूलतिका च । एवं च मानभङ्गे मिथ्या भ्रूकुटिलता सुखावहा, न वास्तवकोपेन विहितेति ध्वन्यते । 'हे' इति पदस्थाने 'ते' इति पाठे सुतनु, इक्षुः, नदीप्रवाहः, द्यूतं च, भङ्गेऽधिकं रसमावहति । अत्रामुकस्येति विशेषानुपादानात्सर्वस्येत्यर्थो लभ्यते । भङ्गरसशब्दावत्र प्रागुक्तार्थौ । ते मानग्रहो भ्रूलतिका च भङ्गे । तरङ्गवाचिना भङ्गपदेनाधिक्यं लक्ष्यते । तेन चौद्धत्यं व्यज्यते । एवं चाधिक्ये कौटिल्य इत्युभयत्रार्थः । अधिकं रसं शोभोत्कर्षं तवावहति । एवं चैतादृशातिशयितमानकुटिलभ्रुकुटिकरणं च तवोचितं नान्यासामिति व्यज्यत इति सनिन्दं नायकसखी मानिनीं वक्तीत्यर्थः । ग्रहपदेन चावश्यप्रतीकारकरणयोग्यत्वं ध्वन्यते ॥

काचिन्नायिकां वक्ति—

इन्दोरिवास्य पुरतो यद्विमुखी सापवारणा भ्रमसि ।
तत्कथय किं नु दुरितं सखि त्वया छाययेव कृतम् ॥१११॥

**इन्दोरिति**। इन्दोरिव। एवं च संतापापनोदकत्वम्, तेन चालिङ्गनार्हत्वं ध्वन्यते। अस्य नायकस्य पुरतोऽग्रे यद्येन विमुखी परिवर्तितवदना। पक्षे पराङ्मुखी। सापवारणा कृतावरणा। पक्षेऽन्तर्धिसहिता। चन्द्रान्तर्गतत्वादिति भावः। भ्रमसीतस्ततो गच्छसि। पक्षे चन्द्रचलनादिति भावः। त्वया छाययेव किं नु दुरितं कृतं तत्कथय। एवं च सर्वाङ्गीणसंतापापनोदकसंमुखनायकपुरतो वैमुख्यचलनव्यवधानसंपादनादि प्राक्तनपापजनितमिति भावः। एवं चैतत्सर्वं परित्यज्य विगतभीर्नायकमालिङ्गयेति व्यज्यते॥

कांचित्कंचिन्निग्रहीतुमुद्यतामवलोक्य तं प्रति कश्चिदन्योक्त्या वदति—

इह कपटकुतुकतरलितदृशि विश्वासं कुरङ्ग किं कुरुषे ।
तव रभसतरलितेयं व्याधवधूर्वालधौ वलते ॥ ११२ ॥

**इहेति**। कपटजन्यकुतुकेन तरलिता चञ्चलतां प्रापिता। अन्यत्र स्थापितेत्यर्थः। एवं च न कथितपदत्वम्। दृग्ययैतादृश्याम्। इहैतस्याम्। एवं च विश्वासानर्हत्वं ध्वन्यते। हे कुरङ्ग हरिण। एवं च ज्ञानानर्हत्वं ध्वन्यते। विश्वासम्। इयं कुतुकासक्तदृगिति धियेति भावः। किं कुरुषे। तव रभसेन सरलतया तरलतां चञ्चलतां प्राप्ता। एवं च त्वत्सरलतैव तव बाधिकेति भावः। इयं व्याधवधूः। एवं च हिंसकत्वातिशयो द्योत्यते। वालधौ पुच्छे वलते संनिहिता भवति। एवं चेयमधुनैव त्वां निग्रहीष्यतीति नैतस्यां विश्वासो विधेय इति व्यज्यते॥

काचिन्महत्तरनायकसङ्गगर्वभाषिणीं कांचिदुद्दिश्यान्योक्त्या कांचित्प्रति वक्ति—

इह वहति बहुमहोदधिविभूषणा मानगर्वमियमुर्वी ।
देवस्य कमठमूर्तेर्न पृष्ठमपि निखिलमाप्नोति ॥ ११३ ॥

**इह वहतीति**। बहत्यन्तं महोदधिरूपं विभूषणं यस्याः सा। पक्षे बहुर्महत्तरो यो मह उत्सवस्तदुदधिर्विभूषणं यस्याः सा। यद्वा बह्वी महोदधेर्विभूषणरूपा। लक्ष्मीरिति यावत्। इयमुर्वी पृथ्वी। पक्षे श्रेष्ठा। मानस्य परिमाणस्य। पक्षे सर्वोत्कृष्टताभिमानस्य। गर्वम्। इह भवत्समक्षम्। न मत्समक्षमिति भावः। पक्ष इह

लोके । वहति । कमठमूर्तेर्देवस्य कच्छपरूपभगवतो निखिलं समग्रं पृष्ठमपि नाप्नोति । एवं च सर्वशरीरव्यापनं क्वेति भावः । एवं चैतस्यास्तत्पृष्ठावलोकनमपि दुर्लभम्, तत्र किमु वाच्यं तत्संगमादिरिति व्यज्यते । तेन चेयं भवत्सविधे मिथ्यागर्वमुद्वहतीति ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेतेकारव्रज्या ।

---

ईकारव्रज्या ।

कश्चित्सखायं वक्ति—

ईर्ष्यारोषज्वलितो निजपतिसङ्गं विचिन्तयंस्तस्याः ।
च्युतवसनजघनभावनसान्द्रानन्देन निर्वामि ॥ ११४ ॥

**ईर्ष्येति** । तस्या निजपतिसङ्गं विचिन्तयन्नीर्ष्ययाक्षान्त्या यो रोषस्तेन ज्वलितः संतप्तश्च्युतवसनं जघनं तच्चिन्तनेन यः सान्द्रानन्दस्तेन निर्वामि संतोषं प्राप्नोमि । एवं च तदीयतथाविधजघनध्यानादेतादृशानन्दः, तत्र किमु वाच्यस्तत्प्राप्ताविति भावः ॥

काचित् 'महत्परिगृहीतेयम्, अतस्त्वयैतस्यामासक्तिर्न कार्या' इत्यन्योक्त्या कंचिद्वक्ति—

ईश्वरपरिग्रहोचितमोहोऽस्यां मधुप किं मुधा पतसि ।
कनकाभिधानसारा वीतरसा कितवकलिकेयम् ॥ ११५ ॥

**ईश्वरेति** । महादेवकृताङ्गीकारेणोचितो मोहो भ्रमो यस्यैतादृशस्त्वम् । महादेवस्य धत्तूरपुष्पं प्रियमिति पुराणादौ प्रसिद्धम् । पक्ष ईश्वरो महांस्तदङ्गीकारेणोचितो मोह आसक्तिर्यस्य । एवं च महत्परिग्रहादेवास्यां समीचीनत्वभ्रमेणासक्तिः, न वास्तविकगुणवत्त्वेनेति भावः । अस्यां कलिकायाम् । मधुप । एवं च सारग्राहकत्वेन याथातथ्येन गुणमार्गणमुचितं तवेति द्योत्यते । यद्वा भ्रान्तत्वम् । मुधा किमिति पतसि । यत इयं कनकाभिधानमेव सारो यस्याः । एवं चार्थशून्यत्वं व्यज्यते । वीतरसाविद्यमानमकरन्दा कितवस्य कलिका । 'उन्मत्तः कितवो धूर्तो धत्तूरः कनकाह्वयः' इत्यमरः । यद्वा कितव धूर्त । एवं चैतादृशाचरणमनुचितमित्यावेद्यते कलिका । एवं च महत्तरस्यानुरागवशादेवास्यामुन्मादमात्रजनिकायां नायिकायामासक्तिर्न विधेया, किं तु गुणाद्यालोकनेनेति व्यज्यते ॥

वापीसविधे कियद्भिः परिवृतां कांचन दृष्ट्वा कश्चिद्वक्ति—

ईषदवशिष्टजडिमा शिशिरे गतमात्र एव चिरमङ्गैः ।
नवयौवनेव तन्वी निषेव्यते निर्भरं वापी ॥ ११६ ॥

**ईषदिति** । ईषदवशिष्टो जडिमा शैत्यम् । पक्षे जडत्वम् । यस्याः । शिशिरतौं समाप्तमात्र एव । वसन्तादावित्यर्थः । अङ्गैरवयवैः । पक्षे गुणभूतैश्चिरं निर्भरमत्यन्तं नवयौवना तन्वीव वापी निषेव्यते । एवं चैतादृशा गुणभूता अपि समीचीना इति व्यज्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेतेकारव्रज्या ।

---

उकारव्रज्या ।

सखी नायिकां स्तौति—

उल्लसितभ्रूधनुषा तव पृथुना लोचनेन रुचिराङ्गि ।
अचला अपि न महान्तः के चञ्चलभावमानीताः ॥ ११७ ॥

**उल्लसितेति** । उल्लसितं भ्रूरूपं धनुः । पक्षे भ्रूसदृशं धनुर्यस्य । पृथुना । आकर्णान्तेनेत्यर्थः । पक्षे पृथुनाम्ना राज्ञा । लोचनेन नेत्रेण । पक्ष आलोचनेन, कथमन्यथा जनावस्थितिरिति विचारेण । रुचिराङ्गि । महान्तः श्रेष्ठाः । पक्षे महापरिमाणशालिनः । अचला अपि चापल्यशून्या अपि । धीरा इत्यर्थः । पक्षे पर्वताः । के न चञ्चलभावमानीताः प्रापिताः । एवं च त्वत्कटाक्षविक्षेपमात्रेण के के न धैर्यं परित्यज्य विह्वला जाता इति भावः । पक्षे महीधरव्याप्तां महीमालोक्य पृथुराज्ञेतस्ततः पर्वताः कृता इति भावः ॥

मत्प्रसादादेवैते धनिनः संवृत्ता इति काचिद्वक्ति—

उपनीय यन्नितम्बे भुजंगमुच्चैरलम्बि विबुधैः श्रीः ।
एकः स मन्दरगिरिः सखि गरिमाणं समुद्वहतु ॥ ११८ ॥

**उपनीयेति** । यस्य नितम्बे कटके । पक्षे यश्चासौ नितम्बश्च तस्मिन् । भुजंगं सर्पम् । पक्षे विटम् । उपनीय प्रापय्य विबुधैर्देवैः । पक्षे विशेषज्ञानवद्भिः । उच्चैः श्रीरलम्बि स मन्दरगिरिः पर्वतः । पक्षे मन्दरगिरिरिव । एकः । एवं चान्ये निरर्थका इति भावः । गरिमाणं गौरवं समुद्वहतु । एवं च मन्नितम्बप्रसादेनैते

श्रीमन्त इति व्यज्यते । यद्वा कस्याश्चिन्निदर्शनं प्रदर्श्य कश्चित्कांचिद्वक्ति । एवं च सैव गर्वं करोतु, तव तु तत्करणमनर्थकमिति व्यज्यते ॥

नैष समयो जारसविधे गन्तुमिति काचित्कांचिद्वक्ति—

उल्लसितलाञ्छनोऽयं ज्योत्स्नावर्षी सुधाकरः स्फुरति ।
आसक्तकृष्णचरणः शकट इव प्रकटितक्षीरः ॥ ११९ ॥

**उल्लसितेति** । उल्लसितं लाञ्छनं यस्य, ज्योत्स्नां कौमुदीं वर्षति, असौ सुधाकरश्चन्द्रः स्फुरति । आसक्तः कृष्णचरणो यस्मिन् । कृष्णत्वेन लाञ्छनवत्तासादृश्यम् । प्रकटितं क्षीरं येन । क्षीरपदेन ज्योत्स्नावत्त्वसादृश्यम् । शकट इवासुरविशेष इव । एवं चैतत्समये गमने लाञ्छनमवश्यं भविष्यतीति व्यज्यते ॥

स्वमनोरथं काचित्कांचिद्वक्ति—

उपचारानुनयास्ते कितवस्योपेक्षिताः सखीवचसा ।
अधुना निष्ठुरमपि यदि स वदति कलिकैतवाद्यामि ॥ १२० ॥

**उपचारेति** । कितवस्य धूर्तस्य, ते पूर्वप्रसिद्धा, उपचारेण अनुनयाः प्रसादनानि । एवं च न वास्तवा इति भावः । यद्वोपचारा अनुनयाश्च सख्याः । एवं च तद्वचनादरकरणयोग्यत्वं व्यज्यते । वचनेन, एवमेव मानस्त्वया संस्थाप्यः क्षणोत्तरमयमवश्यमेस्य ते वश्यो भविष्यतीत्येवंरूपेण, उपेक्षिता अगणिताः । एवं च स्वस्यापराधशून्यत्वं ध्वन्यते । अधुना स निष्ठुरमपि परुषमपि । एवं च समीचीनभाषणं दूरापास्तमिति भावः । यदि वदति तर्हि कलिकैतवात्कलहकपटाद्यामि गच्छामि । अर्थात्तं द्रष्टुमिति भावः । एवं चाधुना तेन तथौदासीन्यमालम्बितं यथा न निष्ठुरमपि वक्ति । येन किमिति तादृशं वदसीति वक्तुमहं गमिष्यामीति भावः । एवं चाधुना कोऽप्युपायस्तद्दर्शन इति चिन्तातिशयो द्योत्यते ॥

सखी नायिकां वक्ति—

उषसि परिवर्तयन्त्या मुक्तादामोपवीततां नीतम् ।
पुरुषायितवैदग्ध्यं व्रीडावति कैर्न कलितं ते ॥ १२१ ॥

**उषसीति** । व्रीडावति, उपवीततां नीतम् । उपवीतरूपं कृतमित्यर्थः । मुक्तादाम परिवर्तयन्त्याः सव्यीकुर्वन्त्या उषसि पुरुषायितस्य वैदग्ध्यं कैर्न कलितम् । अपि तु सर्वैरिति भावः । एवं चेदानीं मत्समक्षं लज्जां नाटयसि, परंतु त्वदीयतत्कालीनलज्जाशून्यत्वं तथाविधमुक्तादामपरिवर्तनमेव सर्वेषां कथयतीति भावः ॥

नायिकां प्रति वक्ति—

उड्डीनानामेषां प्रासादात्तरुणि पक्षिणां पङ्क्तिः।
विस्फुरति वैजयन्ती पवनच्छिन्नापविद्धेव॥ १२२॥

**उड्डीनेति**। प्रासादादुड्डीनानामेकगतिविशेषशालिनाम्। हे तरुणि, पक्षिणां पङ्क्तिः पवनेन च्छिन्ना चासावपविद्धा वैजयन्ती मालेव विशेषेण स्फुरति त्वं पश्य। एवं च नायकः प्रासादमायातस्त्वमपि प्रयाहीति ध्वन्यते। यद्वा संकेतस्थलमिद-मिति व्यज्यते॥

अतितीक्ष्णमतिभिः संरक्ष्यमाणां कांचित्कश्चिदन्योक्त्या वक्ति—

उज्जागरितभ्रामितदन्तुरदलरुद्धमधुकरप्रकरे।
काञ्चनकेतकि मा तव विकसतु सौरभ्यसंभारः॥ १२३॥

**उज्जागरितेति**। काञ्चनकेतकि, उज्जागरितः, भ्रामितः, उच्चावचपत्रैर्निरुद्धः, मधुकराणां प्रकरो यया तत्संबुद्धिः। तव सौरभ्यसंभारो मा विकसतु। एवं च यद्दर्शनेन येषां यूनामितस्ततस्त्वद्दर्शनाय भ्रमणरात्रिजागरणादि भवति तेषां दुष्टा-दिभिर्निवारणे क्रियमाणे त्वद्यौवनं निष्फलमिति व्यज्यते॥

सखी नायिकां वक्ति—

उल्लसितभ्रूः किमतिक्रान्तं चिन्तयसि निस्तरङ्गाक्षि।
क्षुद्रापचारविरसः पाकः प्रेम्णो गुडस्येव॥ १२४॥

**उल्लसितभ्रूरिति**। निस्तरङ्गे अक्षिणी यस्यास्तत्संबुद्धिः, निश्चलेक्षणे। एवं च चिन्तावत्त्वमभिव्यज्यते। उल्लसितभ्रूः सती त्वमतिक्रान्तं निवृत्तं किं चिन्तयसि। एवं च निवृत्तचिन्तनमनर्थकमिति भावः। यतो गुडस्येव प्रेम्णः पाकः परिपाकः क्षुद्रस्य नीचस्य। पक्षे क्षुद्राया मक्षिकाया अपचारः संवन्धस्तेन विरसो भवति। एवं च नीचमाध्यस्थ्ये प्रेम्णो न निर्वाह इति भावः। एवं च नीचमाध्यस्थं प्रथमतो विधाय पश्चाच्चिन्ताविधानमनुचितमिति द्योत्यते। क्षुद्रासक्त्युत्तरं कथमधुना विधेय-मिति सचिन्तां सखी वक्ति। एवं च क्षुद्रसंवन्धेऽवश्यं प्रेमवैरस्यमिति ध्वन्यते। तेन च तत्परित्याग एवोचित इति कश्चित्॥

कस्याश्चिद्रतौत्सुक्यं काचित्कांचिद्वक्ति—

उद्दिश्य निःसरन्तीं सखीमियं कपटकोपकुटिलभ्रूः ।
एवमवतंसमाक्षिपदाहतदीपो यथा पतति ॥ १२५ ॥

**उद्दिश्येति** । उद्दिश्येदं विधेयमस्तीति निःसरन्तीम् । अर्थात्केलिसदनात् । सखीमियं नायिका कपटकोपेन । न वास्तवेनेति भावः । कुटिले भ्रुवौ यस्याः । अवतंसं यथाहतो दीपो यस्मिन्कर्मणि पतत्येवमाक्षिपत् । सख्या उपरि त्यजति स्म । एवं च दीपनाशनेन रतौत्कण्ठ्यं व्यज्यते ॥

स्वल्पबलेऽपि शान्तिशालिनि प्रबलस्य न तथा तेजोऽधिकं भवतीति कश्चिदन्योक्त्या कंचन वक्ति—

उदितोऽपि तुहिनगहने गगनप्रान्ते न दीप्यते तपनः ।
कठिनघृतपूरपूर्णे शरावशिरसि प्रदीप इव ॥ १२६ ॥

**उदितोऽपीति** । उदितोऽपि । एवं च क्षीणत्वाभावो व्यज्यते । तुहिनस्य हिमस्य गहनं यस्मिन् । अथवा तुहिनेन गहने निबिड आकाशप्रान्ते । तापयतीति तपनः सूर्यो न दीप्यते नात्यन्तं प्रदीप्तो भवति । कठिनघृतपूरेण पूर्णे शरावस्य मृद्भाजनविशेषस्य शिरसि प्रदीप इव । एवं च शीलशीतले न कस्यचित्क्रोधाग्नेराधिक्यमिति व्यज्यते । तेन शान्तिप्रवणत्वमुचितमिति । यद्वा सौम्यसमुदाये क्रूरेण न किंचित्कर्तुं शक्यमिति कश्चिदन्योक्त्या वक्ति । दीपसादृश्यार्थं प्रान्तपदम् । अथवा हीनबलसमुदायाक्रान्तप्रबलस्य शनैर्बलं भवत्येवेत्यन्योक्त्या वक्ति । उदितः । 'अपिः' 'तुहिनगहने' इत्यत्रान्वेति । नेति काकुः । अथवा बहुतरशान्तिमति हृदयाकाशे न कामक्रोधादेस्तथा प्रसर इति कश्चित्कंचिद्वक्ति ॥

उद्गमनादि व्यापारालसा त्वं किमितीति वादिनीं सखीं नायिका वक्ति—

उद्गमनोपनिवेशनशयनपरावृत्तिवलनचलनेषु ।
अनिशं स मोहयति मां हृल्लमः श्वास इव दयितः ॥ १२७ ॥

**उद्गमनेति** । स दृष्टपूर्वः, अनिशं निरन्तरम्, हृल्लग्नो हृदयमधिष्ठितः । यद्वानिशं मोहयतीति योजना । दयितः, उद्गमन उत्थाने, उपनिवेशने स्थितौ, शयनपरावृत्तौ, पार्श्वपरिवर्तने, वलने वक्राङ्गकरणे, वचनव्यापारे च मोहयति भ्रान्तिं जनयति । तत्तद्व्यापारासमर्थां करोतीति भावः । एवं च तथाविधनायकाप्राप्त्या

ममैतादृशं दुःखं भवतीति व्यज्यते । तेन च तदानयनार्थं यतस्वेति । हृल्लमः श्वास इव । हृच्छ्वासरोगेणापि गमनोपवेशनादि व्यापारेष्वत्यन्तं दुःखं भवति ॥

कयोश्चित्कटाक्षमात्रेणैव योगः संवृत्त इति काचिद्वक्ति । यद्वा न दूत्यादेरुपयोगः, किं तु कटाक्षमात्रेणैव कार्यं कर्तुं शक्यमिति काचित्कांचिद्वक्ति—

उज्झितसौभाग्यमदस्फुटयाच्ञानङ्गभीतयोर्यूनोः ।
अकलितमनसोरेका दृष्टिर्दूती निसृष्टार्था ॥ १२८ ॥

**उज्झितेति** । उज्झितस्त्याजितः सौभाग्यस्य मदो यथैतादृशी या प्रकटयाच्ञा, अनङ्गश्च । एतद्भीतयोः । स्फुटप्रार्थनायां सौभाग्यमदभङ्गः, अप्रार्थनायां मदनबाधेत्युभयत्रापि भीतिरिति भावः । 'भङ्ग' इति पाठे सौभाग्यमदभङ्गं सोढ्वापि याच्ञायां कृतायां तत्फलाभावे भीतिरित्यर्थः । अकलितं मनो याभ्यां तयोः अविज्ञातपरस्पराभिप्राययोरित्यर्थः । यूनोरेका दृष्टिः परस्परावलोकनं निसृष्टार्था दूती । 'उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् । सूत्कृष्टं कुरुते कार्यं निसृष्टार्था तु सा स्मृता ॥' एवं च कटाक्षमात्रेणैव संयोगः संवृत्तः कर्तुं शक्य इति ध्वन्यते ॥

यद्यपीयं बहुभिर्भुज्यते तथाप्येकस्मिन्नेव जारेऽत्यन्तमासक्तेति काचित्कांचिद्वक्ति—

उत्तमभुजंगसंगमनिस्पन्दनितम्बचापलस्तस्याः ।
मन्दरगिरिरिव विबुधैरितस्ततः कृष्यते कायः ॥ १२९ ॥

**उत्तमेति** । उत्तमो यो भुजंगः सर्पः । उत्तमपदेन चित्तस्थिरीकरणयोग्यत्वं व्यज्यते पक्षे षिङ्गः तत्संगमेन बन्धनेन । पक्षे संभोगेनेति भावः । चपलत्वे हेतुः । निस्पन्दस्य निश्चलस्य । पूर्वमिति भावः । नितम्बस्य कटकस्य । पक्षे कटिप्रदेशस्य । चापलं यस्मिन् । यद्वोत्तमभुजंगसंगमेन निश्चलनितम्बो यस्मिन्नेतादृशं चापलं यस्य । एवं च बाह्यरतवत्तान्येषां नान्तररतवत्तेति भावः । तस्याः कायो देहो मन्दराचल इव विबुधैर्ज्ञानवद्भिः । पक्षे देवैः । इतस्ततः कृष्यते । एवं चान्यैर्भुज्यमानापि न मनो निवेशयति तेषु, किं तु तथाविधजारसंभोगतृष्ण्या तस्मिन्नेवासक्तेति ध्वन्यते ॥

एतस्याः पतिरत्यन्तजडोऽस्ति, अतस्त्वया न भेतव्यमिति काचित्कंचिद्वक्ति—

उपनीय कलमकुडवं कथयति सभयश्चिकित्सके हलिकः ।
शोणं सोमार्धनिभं वधूस्तने व्याधिमुपजातम् ॥ १३० ॥

**उपनीयेति** । कलमानां शालिविशेषाणां कुडवं पलालनिर्मितं पात्रमुपनीय

समीपे संस्थाप्य सभयः । कथमियं जीविष्यतीति धियेति भावः । हलिकः । एवं च मूर्खत्वं व्यज्यते । चिकित्सके वैद्ये, वधूस्तने, शोणमारक्तम्, अर्धचन्द्राकारम्, उप समीपे जातम्, व्याधिं रोगं कथयति । एवं चैतस्यैतन्नखक्षतज्ञानं नास्तीति व्यज्यते। तेन त्वया यथेष्टमागन्तव्यं चेति । कुडवशब्दः परिमाणविशेषवाचीति केचित् ॥

कांचिदग्निं ज्वालयन्तीं जारातिसक्त्या मानसतत्संभोगं कुर्वतीं धूर्तनिजदयितेनालोच्यमानां सनिह्नवं सखी निवारयति—

उन्मुकुलिताधरपुटे भूतिकणत्रासमीलितार्धाक्षि ।
धूमोऽपि नेह विरम भ्रमरोऽयं श्वसितमनुसरति ॥ १३१ ॥

उन्मुकुलितेति । उत्कृष्टमुकुलवदाचरितमधरपुटं यया तत्संबुद्धिः । वह्निप्रज्वलनाय फूत्कारविधानादिति भावः । भूतेर्भस्मनः कणानां त्रासेन नेत्रान्ते भस्मसंबन्धभयेन मीलिते अर्धमक्षिणी यया तत्संबुद्धिः । एवं च विशिष्य भ्रमराज्ञानाद्धूमभ्रमवत्त्वौचित्यं व्यज्यते । धूमोऽपीह न । अपिना व्यक्तिव्यवच्छेदः । विरम फूत्कारकरणादिति भावः । ननु धूमलेखा दृश्यते, तत्कथम् 'नेह धूमः' इति वदसीत्याह—ते श्वसितं भ्रमरोऽयमनुसरति । एवं च त्वद्वदनामोदवशाद्भ्रमरः परिभ्रमति, परंतु न वास्तवो धूमः । अतोऽनर्थकैतद्व्यापाराद्विरमेति भावः । इति निह्नवपुरःसरमधरोन्मुकुलननयनार्धनिमीलने फूत्कारभस्मसंबन्धभयेन समाधातुं शक्ये, परंतु कथमपि श्वसितं न समाहितुं शक्यम् । अयं च ते भ्रमर इव भ्रमरः । यद्वा भ्रमं राति । एवं च यथार्थवार्ताग्राहकस्यास्य यथार्थवार्ताग्रहणे न कोऽपि विलम्बः । दयितश्च श्वसितमिदमवश्यं ज्ञास्यत्येव । तव त्वधरोन्मुकुलनयनार्धनिमीलनश्वसितानि मानससंभोगजन्यान्येव । अतो न विधेयमेतदिति व्यज्यते । यद्वा वह्निप्रज्वालनार्थमादिष्टां तत्समय एव जाराय चुम्बनं प्रयच्छन्तीं नायिकामवलोक्य तत्सखी तदुत्साहवर्धनाय वक्ति—हे भूतिकणत्रासमीलितार्धाक्षि, इति । सोल्लुण्ठनवचनमेतत् । एवं च न भूतिकणत्रासेन तवार्धाक्षिनिमीलनम्, अपि तु जारचुम्बनसुखोदयेनेति व्यज्यते । उन्मुकुलितम् । चुम्बनार्थमिति भावः । अधरपुटं येन तस्मिन् । इह जारो न विरमति । चुम्बनदानार्थमिति भावः । दन्तक्षतभीतिं स्वयमाशङ्क्य परिहरति—अपिरवधारणे । नकारोऽप्यत्रान्वेति । अयं धूमो न, किंतु भ्रमर एव श्वसितम् । अर्थात्तव । अनुसरति । एवं च न धूमलेखा, अपि तु फूत्कारकालीनत्वद्वदनसमीरणसौरभ्यलुभ्यन्मधुकरश्रेणिरत एतद्दंशमिषेणैव दन्तक्षतसमा-

धेर्विधातुं शक्यत्वेन दन्तक्षतभयमपास्यास्य यथेच्छं चुम्बनं देहीति ध्वन्यते। अथवा नायकदूत्युक्तिरियम्। भूतिकणत्रासमीलितार्धाक्षीत्यनेन चुम्बनप्राप्त्यौत्कण्ठ्येनैतदीयाधरोन्मुकुलनमपि न मयावधारितमिति व्यज्यते। इतरत्समम् ॥

कान्तसविधे तथाविधबालायातायातमवलोक्य कुपितां गृहिणीं नायकः समाधत्ते—

उपरि परिप्लवते मम बालेयं गृहिणि हंसमालेव ।
सरस इव नलिननाला त्वमाशयं प्राप्य वससि पुनः ॥१३२॥

**उपरीति**। हे गृहिणि। एवं च गृहभारस्य त्वदधीनत्वेन त्वमेव मुख्येति व्यज्यते। यथा सरसः सरोवरस्योपरि हंसमाला भ्रमति, नलिननाला त्वभ्यन्तरे वसति, तथेयं बाला ममोपरि। नान्तःकरण इत्यर्थः। परिप्लवते भ्रमति। त्वं त्वन्तःकरणं प्राप्य वससि। एवं चैतस्या मच्चेतसि नाधिष्ठानं तव तु वर्तत इति व्यज्यते। पुनस्त्वर्थे। 'नाला नालम्' इतिपाठान्नालाशब्द आवन्तः ॥

कश्चन कस्याश्चिद्यौवनलुब्धस्तदप्राप्तिखिन्नस्तां प्रति वक्ति—

उत्कम्पघर्मपिच्छिलदोःसाधिकहस्तविच्युतश्चौरः ।
शिवमाशास्ते सुतनु स्तनयोस्तव चञ्चलाञ्चलयोः ॥ १३३ ॥

**उत्कम्पेति**। हे सुतनु। एवं च कामुकेच्छायोग्यत्वं व्यज्यते। उत्कृष्टः कम्पो यस्य, घर्मेण पिच्छिलश्च, यो दोःसाधिकस्य यामिकस्य हस्तस्तस्माद्विच्युतः। उत्कम्पपिच्छिलपदाभ्यां च्यवनार्हत्वं व्यज्यते। चोरस्तव चञ्चलाञ्चलयोः। एवं च दर्शनयोग्यत्वं व्यज्यते। स्तनयोः शिवं कल्याणमाशास्ते। एवं च त्वत्कुचकुम्भदर्शनसंजातसात्विकभावकम्पस्वेदयामिकशिथिलकरबन्धविच्युतचोरस्यैव सुखदत्वेन तदाशास्यशिवभाजनमस्मदादीनां त्वत्यन्तदुःखदत्वेन शापभाजनमेव भविष्यति त्वत्कुच इति व्यज्यते। यद्वा दुष्टवृत्त्युपजीविन एवायं ते स्तनमण्डलः सुखयिता नान्येषां समीचीनानामिति कश्चिद्वक्ति। अथवा त्वत्कुचकुम्भदर्शनादेव तथा भ्रान्तिरुदेति यथाग्रे स्वमरणमपि न विज्ञायत इति वक्ति। यामिकस्य केवलतस्करधारणमेव वृत्तिः। एवं च तद्धस्तात्तस्करापगमनेन भाविप्रभुकोपफलाज्ञानवदेषामपि न तदनुसंधानमिति व्यज्यते। यद्वा त्वया रात्रावभिसरणं कृतमिति कश्चिद्वक्ति ॥

कयाचन नायिकया कृष्यमाणाञ्चलं नायकं प्रत्यन्योक्त्या तत्सखी वक्ति—

उत्क्षिप्तबाहुदर्शितभुजमूलं चूतमुकुल मम सख्या ।
आकृष्यमाण राजति भवतः परमुच्चपदलाभः ॥ १३४ ॥

**उत्क्षिप्तेति ।** उत्क्षिप्तो यो बाहुस्तेन दर्शितं भुजमूलं यत्र क्रियायाम् । हे चूतमुकुल । मुकुलपदं भ्रमराद्यभुक्तप्रतिपादनेनाङ्गनासंगतिशून्यत्वं नायके ध्वनयति । तच्चात्यन्तस्पृहणीयत्वम् । मम सख्याकृष्यमाण, भवतः परमुत्कृष्टमुच्चतरपदलाभो राजति । एवं च मत्सखीकराकर्षणेन तवोत्कृष्टस्थानप्राप्तिर्जातेति व्यज्यते । तेन चैतत्कराकर्षणं स्वर्गसुखरूपमिति । पल्लवादेराकर्षणोत्तरमोचनादूर्ध्वगमनमिति लौकिकम् ॥

त्वद्धारदर्शनेन सर्वोऽपि त्वद्विहारमाकाङ्क्षतीति सखी नायिकां वक्ति—

उच्चकुचकुम्भनिहितो हृदयं चालयति जघनलग्नाग्रः ।
अतिनिम्नमध्यसंक्रमदारुनिभस्तरुणि तव हारः ॥ १३५ ॥

**उच्चेति ।** उच्चौ यौ कुचकुम्भौ । कुम्भपदमाधारकाठिन्यद्योतनाय । तत्र निहितः । जघने कट्याः पुरोभागे । 'क्लीबे तु जघनं पुरः' इत्यमरः । लग्नमग्रं यस्य । अत्यन्तं निम्नो नीचो यो मध्यस्तत्संक्रमाय यद्दारु तत्तुल्यः । निम्नदेश उल्लङ्घनाय यत्काष्ठं दीयते तत्संक्रमदारु । तरुणि, तव हारो हृदयम् । द्रष्टुरिति यावत् । चालयति चञ्चलं करोति । अन्योऽपि संक्रमदारुमार्गेण गच्छंश्चञ्चलताभाजनं भवतीति लौकिकम् ॥

रतश्रान्तेयमिति सखी नायकं वक्ति—

उल्लसितशीतदीधितिकलोपकण्ठे स्फुरन्ति तारौघाः ।
कुसुमायुधविधृतधनुर्निर्गतमकरन्दबिन्दुनिभाः ॥ १३६ ॥

**उल्लसितेति ।** उल्लसितः । सुरतसुखादिति भावः । शीतदीधितिर्मुखचन्द्रस्तस्य मनोज्ञोपकण्ठे कुसुमायुधेन विधृतं यद्धनुस्तन्निर्गता ये मकरन्दबिन्दवस्तत्सदृशास्तारौघाः प्रस्वेदबिन्दवः स्फुरन्ति । एवं च कुसुमसमसुकुमारताशालिनीयं रतश्रान्तेति व्यज्यते । यद्वा जातोऽयमभिसारसमय इति सखी नायिकां वक्ति । उल्लसितः प्रादुर्भूतः शीतदीधितिश्चन्द्रस्तत्समीपदेशे तारौघा नक्षत्रौघा मदनधनुर्मकरन्दतुल्याः स्फुरन्ति । अर्धचन्द्रत्वेन धनुस्तुल्यता । एवं चैतादृशसुधाकरसाहाय्यसंपन्नः कुसुमधन्वा सज्जः संवृत्तः । अतो द्रुततरमभिसरस्वेति ध्वन्यते ॥

काचिन्नायिका नायकीयविलम्बागमनजन्यं मानमासाद्य स्वल्पावशिष्टयामिन्यां नायकेन दूरीकृताभिमाना रात्रिः स्वल्पावशिष्टेति विज्ञायानुशोचति—

उपनीय प्रियमसमयविदं च मे दग्धमानमपनीय ।
नर्मोपक्रम एव क्षणदे दूतीव चलितासि ॥ १३७ ॥

**उपनीयेति** । हे क्षणदे रात्रि । 'त्रियामा क्षणदा क्षपा' इत्यमरः । अथ चोत्सवदे । एवं चोत्सवदायास्तदभावसंपादनमनुचितमिति व्यज्यते । असमयविदं समयज्ञानशून्यम् । एवं च पूर्वरात्रावागमनमुचितमिति व्यज्यते। प्रियम् । एवं च दुर्लभत्वं द्योत्यते । उपनीय प्रापय्य । असमयविदं रात्रेरल्पावशिष्टत्वेन करणानर्हम् । अत एव दग्धं मे मानं च । किमर्थं विलम्बितमिति हेतोः संजातमित्यर्थः । दूरीकृत्य क्रीडोपक्रम एव दूतीव । दूतीपदं संगतिसंपादनमात्रकर्तृत्वं द्योतयति । चलितासि । दूत्यपि नायकमानीय मानमपनीय क्रीडारम्भ एव निर्गच्छतीति लौकिकम् । नायिका चेयं परकीया ॥

त्वत्करस्पर्शनादेवास्मत्सखी विगतधैर्या सती त्वामनुसरतीति नायिकासक्तिं सखी वक्ति—

उत्तमवनितैकगतिः करीव सरसीपयःसखीधैर्यम् ।
आस्कन्दितोरुणा त्वं हस्तेनैव स्पृशन्हरसि ॥ १३८ ॥

**उत्तमेति** । उत्तमवनितानामेकगतिरूपः । एवं च स्वानुरूपान्यनायकाभावेन नायिकासक्तिस्त्वयि युक्ततरेति व्यज्यते । पक्ष उत्तमवनितावदेका मुख्या गतिर्यस्य । आस्कन्दितावूरू जङ्घे येन तेन । पक्षे संस्पृष्टस्वजङ्घेन । हस्तेनैव । पक्षे शुण्डादण्डेनैव स्पृशन्करी सरसीपय इव सख्या धैर्यं हरसि । एवकारेणालिङ्गनादौ किं किं हरिष्यसीति न विद्म इति व्यज्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेतोकारव्रज्या ।

---

ऊकारव्रज्या ।

कांचिज्जरठविवाहितां तदीयप्रेमराहित्यखिन्नां सख्यन्योक्त्या वक्ति—

ऊढामुनातिवाहय पृष्ठे लग्नापि कालमचलापि ।
सर्वंसहे कठोरत्वचः किमङ्केन कमठस्य ॥ १३९ ॥

**ऊढेति** । हे सर्वंसहे वसुमति । एवं चैतदीयापराधसहने तव न किंचित्कठि-

नमिति व्यज्यते । अमुना कमठेनोढा सती पृष्ठे लग्नापि । अपिरवधारणे । लग्नैवेत्यर्थः । अचलापि । एवं च स्वतो निश्चलायाश्चाञ्चल्याभावोपदेशः पिष्टपेषणतुल्य इति व्यज्यते । कालमतिवाहय । 'असि' इति पाठे यतो निश्चलासि, अत एव कालमतिवाहयेति योजना । कठोरत्वचः । एवं च जरठत्वं ध्वन्यते । कमठस्याङ्केन किम् । एवं चैतज्जरठपाणिग्रहणशालिन्या चाञ्चल्यशून्यया त्वया कर्कशतदङ्केच्छामपहाय सर्वमेतत्तदीयापराधजातमपि सोढ्वावस्थेयमिति ध्वन्यते ॥

इत्यनन्तपण्डितगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेतोकारव्रज्या ।

---

ऋकारव्रज्या ।

नेदं स्वकटाक्षविक्षेपादिचातुर्यप्रदर्शनस्थलम् । अतोऽतिसरलतयैवात्रावस्थितिरुचितेति काचित्कांचिच्छिक्षयति—

ऋजुना निधेहि चरणौ परिहर सखि निखिलनागराचारम् ।
इह डाकिनीति पल्लीपतिः कटाक्षेऽपि दण्डयति ॥ १४० ॥

**ऋजुनेति** । ऋजुना सरलेन, अर्थान्मार्गेण चरणौ निधेहि स्थापय । समग्रां नागररीतिं त्यज । इह स्थले पल्लीपतिर्घोषाधिपः । एवं चानभिज्ञत्वं ध्वन्यते । कटाक्षसंपादनेऽप्येवं चान्यकर्तव्यता दूरापास्तेति भावः । डाकिनीति बुद्ध्या दण्डयति ॥

शास्त्रचर्चात्र भवतीति विज्ञायागतस्तत्र ग्रामीणचर्चामालोक्य कश्चिद्वक्ति—

ऋषभोऽत्र गीयत इति श्रुत्वा स्वरपारगा वयं प्राप्ताः ।
को वेद गोष्ठमेतद्गोशान्तौ विहितबहुमानम् ॥ १४१ ॥

**ऋषभ इति** । ऋषभः स्वरविशेषः, वृषभश्च । 'ऋषभो वृषभो वृषः' इत्यमरः । अत्र गीयत इति ज्ञात्वा स्वरज्ञानवन्तो वयं समागताः । एतत्स्थलं गोशान्तौ विहितो बहुमानो यत्रेति गोष्ठं गोस्थानकमिति को वेद । दीपोत्सवादावाभीरा गवामलंकरणं विधाय गानं कुर्वन्तीति देशाचारः । एवं च नाममात्रादेवास्माकं गानसमानत्वबुद्धिरुदभवदिति भावः ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता ऋकारव्रज्या ।

---

एकारव्रज्या ।

नायकोऽधरं स्तौति—

एको हरः प्रियाधरगुणवेदी दिविषदोऽपरे मूढाः ।
विषममृतं वा सममिति यः पश्यन्गरलमेव पपौ ॥ १४२ ॥

**एक इति** । प्रियाधरगुणान्वेत्ति । एवं च विशिष्य वक्तुमशक्यत्वं गुणेषु व्यज्यते । एको हरः । एवं च विरक्तवेषवत्तया नान्यथाभाव आशङ्कनीय इति भावः । अन्ये देवा मूढाः । उभयत्र हेतुमाह—यो हरो विषममृतं वा सममिति विचारयन्गरलमेव पपौ । एवं च प्रियाधरं विनामृतमपि विषतुल्यमिति व्यज्यते । दिविषदस्तु कमलाधरार्थं यत्नमकुर्वाणा अमृतार्थं च कुर्वाणास्ततस्तदधिकमिति मन्वाना मूढा इति भावः । यद्वा एको हरः प्रियाधरगुणज्ञानवान्, नान्ये देवाः । किं पुनर्मानुषा इति भावः । यतो यो विषमप्यमृततुल्यं विज्ञाय तदेव पपौ । एवं च प्रियाधरपानसंबन्धिनिवेदने विषमप्यमृतं भवतीति भावः । एवं च प्रियाधरेऽधिकत्वं सुधातो द्योत्यते । अत्रोभयत्र विषगरलपदान्यतरस्यैवोपादानमुचितमित्याभाति ॥

काचिद्दुष्टा प्रियगमनावसरेऽपुनरावृत्त्यर्थममङ्गलं कुर्वाणा तदमङ्गलभीत्यावस्थितं नायकमवलोक्यान्यथाचिन्तितस्यान्यथाभवनं दैवाधीनमिति सखीं वक्ति—

एष्यति मा पुनरयमिति गमने यदमङ्गलं मयाकारि ।
अधुना तदेव कारणमवस्थितौ दग्धगेहपतेः ॥ १४३ ॥

**एष्यतीति** । अयं पुनर्मा एतु, एतदर्थं यदमङ्गलं गमनकालेऽकारि तेनैव कारणेन ज्वलितगृहपतेरवस्थितिः संवृत्तेत्यर्थः ॥

त्वय्येवासक्तास्ति सेति सखी नायकं वक्ति—

एकैकशो युवजनं विलङ्घमानाक्षनिकरमिव तरला ।
विश्राम्यति सुभग त्वामङ्गुलिरासाद्य मेरुमिव ॥ १४४ ॥

**एकैकश इति** । प्रत्येकमित्यर्थः । 'एकैकशो दत्त्वा, एकैकशो ददाति' इति भाष्यकारप्रयोगद्वयवच्छस् । 'इहेदानीमेकैकशो वैधर्म्यमुच्यते, एकैकशस्तावदवलोक्य येऽन्यत्रैकैकशो दुर्लभाः' इति प्रशस्तपादभाष्य-स्वयंवरप्रस्तावीयवासवदत्ता-समाप्तकल्पदशकुमारप्रयोगाश्चेत्यलमत्र विचारेण । युवजनम् । युवपदेन स्पृहणी-

यत्वं व्यज्यते । अक्षाणां मालामणीनां समुदायमिव विलङ्घमानावगणयन्ती । पक्ष उल्लङ्घयन्ती । अङ्गुलिरिव तरला मेरुमिव मालाप्रान्तमणिमिव त्वां प्राप्य सुभग । एवं चैतादृशनायिकासक्तिर्न भाग्यं विनेति व्यज्यते । विश्राम्यति । मेरोरुल्लङ्घनं न कार्यमिति जापकसंप्रदायः ॥

कश्चिद्याच्ञाखेदखिन्नो वक्ति—

एकः स एव जीवति स्वहृदयशून्योऽपि सहृदयो राहुः ।
यः सकललघिमकारणमुदरं न बिभर्ति दुष्पूरम् ॥ १४५ ॥

**एक इति** । सकललघुताकारणम्, दुःखेन पूरयितुमशक्यम् । दुष्पूरत्वं लघुताकारणे हेतुः । उदरं यो न बिभर्ति स स्वहृदयविहीनोऽपि । स्वपदमनर्थकमिवाभाति । सहृदयो हृदयेन सहितो राहुरेवैको जीवति । एवं च ये स्वोदरदरीपूरणाय याच्ञां कुर्वन्ति त एव मृता इति व्यज्यते ॥

कश्चिद्विदेशस्थो मनोरथं करोति—

एकेन चूर्णकुन्तलमपरेण करेण चिबुकमुन्नमयन् ।
पश्यामि बाष्पधौतश्रुति नगरद्वारि तद्वदनम् ॥ १४६ ॥

**एकेनेति** । एकेन करेण चूर्णकुन्तलम् । 'अलकाश्चूर्णकुन्तलाः' इत्यमरः । अपरेण चिबुकमुन्नमयन्नगरद्वारदेशे । प्रेमातिशयेन तावद्दूरागमनमिति भावः । बाष्पैः । चिरकालदर्शनादिति भावः । धौता श्रुतिर्यत्र । तिर्यक्चिबुकोन्नमनादिति भावः । तस्या वदनं पश्यामि, इति काका एवं जगदीश, कदा करिष्यसीति व्यज्यते । 'विगलद्वारि' इति पाठे कुन्तलविशेषणम् ॥

नायिकासखी नायकं वक्ति—

एकं जीवनमूलं चञ्चलमपि तापयन्तमपि सततम् ।
अन्तर्वहति वराकी सा त्वां नासेव निःश्वासम् ॥ १४७ ॥

**एकमिति** । एकम् । नान्यदित्यर्थः । जीवनकारणम् । एवं च त्यागानर्हत्वं ध्वन्यते । चञ्चलस्वभावमपि । एवं चान्यत्र त्वदीयानुबन्धादिश्रवणेऽपि तस्यास्त्वय्यनुराग इति दुर्लभतरेयमेतादृशी नायिकेति व्यज्यते । तेन च त्वया न चाञ्चल्यं विधेयमिति । निरन्तरं तापयन्तम् । चञ्चलस्वाभाव्यादिति भावः । नासेव सा वराकी । एवं च दीनत्वं व्यज्यते । निःश्वासतुल्यं त्वामन्तर्वहति । एवं च बहिस्तथाविधकृत्रिमचाटुवचनविज्ञानशून्यत्वेऽप्यन्तःप्रेमशालित्वमिति व्यज्यते ॥

नायकप्रेषितदूतीं नायिका वक्ति—

एकं वदति मनो मम यामि न यामीति हृदयमपरं मे ।
हृदयद्वयमुचितं तव सुन्दरि हृतकान्तचित्तायाः ॥ १४८ ॥

**एकमिति** । हे दूति, एकं मम मनो यामीति वदति, न यामीत्यपरं हृदयं वदति । एवं च गन्तव्यं वा न गन्तव्यमिति संशयशालिन्यहमिति व्यज्यते । नायिकागमने संशयं श्रुत्वा सखी वक्ति—हे सुन्दरि । एवं च नायिकासक्तिस्त्वय्युचितैवेति ध्वन्यते । हृतं स्वाधीनीकृतं कान्तस्य चित्तं यया तस्यास्तव हृदयद्वयमुचितम् । एवं च नायकचित्तस्य त्वयि निमग्नत्वेन तवैतादृशमौदासीन्यं तच्च तस्यान्यत्रानुरागित्वेऽवश्यं त्वया द्रुततरं तत्रागन्तव्यमिति व्यज्यते । अत्र सर्वत्र चित्तार्थकयत्किंचिदेकपदस्यैवादानमुचितमित्याभाति ॥

कश्चिद्धलिकवधूसङ्गं स्तौति—

एरण्डपत्रशयना जनयन्ती स्वेदमलघुजघनतटा ।
धूलिपुटीव मिलन्ती स्मरज्वरं हरति हलिकवधूः ॥ १४९ ॥

**एरण्डेति** । एरण्डपत्राणां शयनं यस्याः । स्वेदम् । अर्थान्नायकस्य । सुरतातिशयेनेत्यर्थः । जनयन्ती । महज्जघनतटा, मिलन्ती, हलिकस्य वधूर्धूल्याः पुटीव स्मरसंबन्धिज्वरं हरति । एरण्डपत्रान्तरिता, स्वेदमुत्पादयन्ती, स्थूलपुरोभागा, अङ्गसङ्गशालिनी, धूलिपोटली मदनज्वरशान्तिजनिकेति वैद्यकप्रसिद्धिः ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेतैकारव्रज्या ।

---

ककारव्रज्या ।

इयं प्रतिवेश्यासक्तेति कश्चिद्वक्ति—

केलिनिलयं सखीमिव नयति नवोढां स्वयं न मां भजते ।
इत्थं गृहिणीमर्ये स्तुवति प्रतिवेशिना हसितम् ॥ १५० ॥

**केलीति** । केलिसदनं नवोढाम् । एवं चेयमवश्यमनेन भोक्तव्येति ज्ञानवत्त्वं ध्वन्यते । सखीमिव । एवं च द्वेषशून्यत्वं व्यज्यते । प्रापयति स्वयं मां न भजते । इत्थं च गृहिणीमर्ये वैश्ये । 'अर्यः स्वामिवैश्ययोः' इत्यमरः । स्तुवति सति प्रतिवेशिना हसितम् । इयं च मदासक्त्या सपत्नीमेतस्मिन्संयोज्यात्रायातीति नानेन मूर्खेण ज्ञायत इति धियेति भावः ॥

किंचित्कालोत्तरमियं प्राप्तयौवनास्माकमुपयुक्ता भविष्यतीत्याशंसाकारिणं कश्चिदन्योक्त्या वक्ति—

कालक्रमकमनीयक्रोडेयं केतकीति काशंसा।
वृद्धिर्यथा यथास्यास्तथा तथा कण्टकोत्कर्षः॥ १५१॥

**कालेति**। कालक्रमेण कमनीयः क्रोडः समीपदेशः। पक्षे भुजाभ्यन्तरम्। इयं केतकीति काशंसा। न कापीत्यर्थः। अत्रोपष्टम्भकमाह—यथा यथास्या वृद्धिस्तथा तथा कण्टकोत्कर्षो भविता। एवं चैतस्या यौवनेऽनेकदुष्टप्रचारो भवितेति व्यज्यते। तेन च न तवोपयोग इति। कण्टकोत्कर्षभवनरूपक्रियान्वयस्यैकदा तत्पदार्थे भवितुमर्हत्वात् 'संचारिणी-' इत्यादिपद्यवदत्र तच्छब्दे वीप्सा समुचितेत्याभाति॥

बहुतरसमाधानसमाहितामपि समाधानमप्राप्तां मानिनीमवलोक्य निर्विण्णहृदयतया सुप्तं नायकम् 'सुप्तोऽयम्। अतःपरं किं विधेयम्' इति विह्वला नायिका वक्ति—

कृतकस्वाप मदीयश्वासध्वनिदत्तकर्ण किं तीव्रैः।
विध्यसि मां निःश्वासैः स्मरः शरैः शब्दवेधीव॥ १५२॥

**कृतकेति**। कृत्रिमस्वाप। एवं च 'न शयानं बोधयेत्' इति निषेधोल्लङ्घनदोषानर्हत्वं ध्वन्यते। मदीयश्वासध्वनिषु दत्तः कर्णो येन। एवं च त्वदीयावगणनाकारिण्या मम सम्यगिदं संतापजश्वासजातं जातमिति भावः। मां तीव्रैर्दीर्घैः। एवं च स्वापे कृतकत्वमावेद्यते। पक्षे तीक्ष्णैः। निःश्वासैः शब्दवेधी स्मर इव शरैः किं किमिति विध्यसि। एवं च मद्विहितावगणनासंजातसंतापजत्वदीयश्वासैः कथमयमवगणित इति मम दुःखमुत्पद्यते। श्वासेषु स्मरशरसमताप्रतिपादनेन समुत्पन्नमन्मथतीव्रवेदना विगलिताभिमानाहं संवृत्तास्मीति च व्यज्यते। यद्वा सपत्नीसविधे गन्तुकामं नायकं विज्ञाय नायिका वक्ति—मिथ्यासुप्त। मदीयश्वासध्वनिदत्तकर्ण। यदैवेयं स्वापं करिष्यति तदैव मया तत्र गन्तव्यमिति धियेति भावः। निःश्वासैरित्यनेन मदीयनिद्रां विज्ञाय न मया सुप्तव्यमिति धीमत्त्वं ध्वन्यते। किमिति विध्यसि। एवं च छलेन किमर्थं गन्तुमुद्यतोऽसि, एवमेव गच्छ, न मया निवार्यस इति स्वदुःखं व्यञ्जयति। निःश्वासेषु स्मरशरसमताप्रतिपादनेन बहिःक्षतजनकत्वाभावेऽप्यन्तःक्षतविशेषजनकत्वमित्यावेद्यते। अथवा सपत्नीमुपभुज्या-

गतं मिथ्यासुप्तं नायकं नायिका वक्ति—हे मिथ्यास्वाप । मदीयश्वासध्वनिदत्त-कर्ण । किमियं जागर्ति न वेति ज्ञातुमिति भावः । निःश्वासैः । संभोगजन्यैरिति भावः । मां किमिति विध्यसि । दुःखं ददासीत्यर्थः । श्वासेषु स्मरशरसमताप्रति-पादनेन केवलस्वसाक्षिकवेदनाजनकत्वं ध्वन्यते ॥

कश्चित्पिषिद्धविशेषसंचारनिरुद्धान्यसंचारां तद्गमनोत्तरं सामान्यवनितामन्योक्त्या वक्ति—

क्व स निर्मोकदुकूलः क्वालंकरणाय फणिमणिश्रेणी ।
कालियभुजंगगमनाद्यमुने विश्वस्य गम्यासि ॥ १५३ ॥

**केति ।** स प्रसिद्धो निर्मोक एव सर्पकञ्चुक एव दुकूलः क्व । अलंकरणाय फणिमणिश्रेणिः क्व । कालियनामा यो भुजंगः सर्पः । पक्षे तत्तुल्यो विटः । तद्गम-नाद्विश्वस्य यमुने नदि । पक्षे यमुनेति नाम । गम्यासि । एवं च तथाविधदुष्टविट-संपर्कसंजातान्योपभुक्तवसनादि सर्वं विहाय तदभावात्सकलजनसंसर्गादधुनान्यादृ-शमेव सर्वं संवृत्तमिति व्यज्यते । यद्वा केनचिन्महत्तरविटेन पूर्वं पालितां तदपग-मोत्तरं सर्वसुलभां सामान्यवनितामन्योक्त्या तत्प्रशंसनपुरःसरं वक्ति । एवं च तद्विटगमनोत्तरं तथाविधोज्ज्वलदुकूलबहुमूल्यमणिमयभूषणाद्यभावेऽपि सकलज-नोल्लङ्घनीयत्वं तव वृत्तमिति व्यज्यते ॥

कश्चिन्नायिकाप्रसादनवृत्तान्तं वयस्यं प्रति वक्ति—

किंचिन्न बालयोक्तं न सप्रसादा निवेशिता दृष्टिः ।
मयि पदपतिते केवलमकारि शुकपञ्जरो विमुखः ॥ १५४ ॥

**किंचिदिति ।** मयि पदपतिते कृतप्रणामे । मानापनोदनार्थमिति भावः । बा-लया किंचिन्नोक्तम् । सम्यगसम्यग्वेति भावः । न केवलं वचनाभावमात्रम्, अपि तु प्रसादसहिता दृष्टिर्न निवेशिता । किं तु केवलं शुकपञ्जरोऽन्यदिङ्मुखोऽकारि । एवं च शुकपञ्जरवैमुख्यसंपादनरूपरहःसंपादनेन रत्यनुमतिरेव दत्तेति व्यज्यते ॥

साधारणवनिताचेष्टां कश्चिद्वक्ति—

कृतहसितहस्ततालं मन्मथतरलैर्विलोकितां युवभिः ।
क्षिप्तः क्षिप्तो निपतन्नङ्गे नर्तयति भृङ्गस्ताम् ॥ १५५ ॥

**कृतेति ।** कृतो हसितेन हस्ततालो यत्र । परस्परमिति भावः । मन्मथच-पलैः । एवं च लज्जाविरहो व्यज्यते । युवभिर्विलोकितां नायिकां क्षिप्तः क्षिप्तः ।

वारं वारं दूरीकृत इति भावः । अङ्गेषु शरीरावयवेषु निपतन्भृङ्ग इव भृङ्गः । एवं च रसलम्पटत्वं व्यज्यते । नर्तयति । भृङ्गोऽपि चपलकिसलयचाञ्चल्यदूरीकृतोऽपि पुनस्तामेव लतामालम्बत इति भृङ्गपदेन नायिकायां लतात्वारोपणेनावयवेषु पल्लवत्वारोपणेन कोमलत्वमावेद्यते । एवं चेयं विटेन वारं वारं तत्करनिवारणमवगणय्य लोकदृष्टिं लज्जां च कुचादौ स्पृश्यत इति कौतुकं त्वं पश्येति व्यज्यते । अन्ये तु यथाश्रुतमेवाहुः ॥

निरोधदुःखितां नायिकां काचिच्छिक्षयति—

कमलमुखि सर्वतोमुखनिवारणं विदधदेव भूषयति ।
रोधोऽरुद्धस्वरसास्तरङ्गिणीस्तरलनयनाश्च ॥ १५६ ॥

**कमलेति** । हे कमलमुखि, सर्वतोमुखस्य जलस्य निवारणं बन्धनेन प्रवाहविच्छेदनं सर्वस्मान्मुखस्याप्रदर्शनं च । लज्जयेति भावः । विदधदेव तीरं रोधनं च । अरुद्धः स्वस्य रसो जलम्, इच्छा च याभिस्ता नदीः, नायिकाश्च भूषयति । एवं चावश्यस्पृहणीयत्वं रोधने द्योत्यते । तरङ्गिणीतरलनयनपदाभ्यां चाञ्चल्यमभिव्यज्यते । एवं चावश्यं निरोधवत्त्वेन भवितव्यमिति ध्वन्यते ॥

किमर्थं न सा समायातीति वादिनं नायकं दूती वक्ति—

कितव प्रपञ्चिता सा भवता मन्दाक्षमन्दसंचारा ।
बहुदायैरपि संप्रति पाशकसारीव नायाति ॥ १५७ ॥

**कितवेति** । हे कितव । एवं चागमभीतिरावेद्यते । भवता प्रपञ्चिता प्राकट्यं नीता चालिता च । मन्दाक्षेण लज्जया । पक्षे मन्दपाशकैः । स्वल्पसंख्यावद्भिरित्यर्थः । मन्दः स्वल्पः संचारो गृहाद्गृहान्तरगमनं यस्याः । बहुद्रव्यैरपि । पक्षे बहुदायैरित्यर्थः । वारंवारपातनैरिति यावत् । अपिनोपायान्तरशून्यत्वं ध्वन्यते । संप्रति । कालान्तरे को वेद किं भविष्यतीति न जान इति व्यज्यते । पाशकसारीव पाशक्रीडनगुटिकेव नायाति । एवं च तवैवापराधो न तस्या इति द्योत्यते ॥

साधारणवनिताप्रतिवेशी कंचित्प्रति वक्ति—

कः श्लाघनीयजन्मा माघनिशीथेऽपि यस्य सौभाग्यम् ।
प्रालेयानिलदीर्घः कथयति काञ्चीनिनादोऽयम् ॥ १५८ ॥

**क इति** । यस्य माघार्धरात्रेऽपि सौभाग्यं प्रालेयानिलेन दीर्घः । प्रालेयानिलस्य श्रमापनोदकतया सुरतातिशयसंपादनेन काञ्चीनिनाददैर्घ्यसंपादकत्वमिति भावः ।

काञ्चीनिनादः कथयति । अत एव श्लाघार्हं जन्म यस्य । धनिकत्वादिति भावः । अयं कः । एवं चैतादृशशीतातिशयशालिसमयेऽपि नायिकेयमत्यन्तोल्लासेन विपरीतरतं विदधाति तस्मादयमर्थविशेषशालीति ज्ञातम्, परं तु का वास्याभिधेति न ज्ञायत इति भावः । यद्वा कः श्लाघनीयजन्मेति प्रश्न उत्तरं वक्ति—प्रालेयानिलदीर्घः । एवं च संतापापनोदकत्वं ध्वन्यते । अयमित्यत्यन्तानुसंधीयमानत्वेन प्रत्यक्षवन्निर्देशः । काञ्चीनिनादो माघनिशीथेऽपि । अपिनेतरकालसमुच्चयः । एवं च माघरात्रेरतिदीर्घत्वं तत्राप्यतिचिरकालीनं रतमितोऽन्यकाले किमु वाच्यमिति व्यज्यते । यस्य सौभाग्यं कथयति । एवं च यस्यैवातिसुप्रेमसुरतनिपुणतरुणीसंततसङ्गवत्ता स एव श्लाघनीयजन्मेति भाव इत्यर्थः ॥

किमशकनीयं प्रेम्णः फणिनः कथयापि या बिभेति स्म ।
सा गिरिशभुजभुजंगमफणोपधानाद्य निद्राति ॥ १५९ ॥

**किमिति** । प्रेम्णः किमपि नाशक्यं यतो या सर्पवार्तयापि बिभेति स्म सा हरभुजसर्पफणारूपमुपधानं यस्या एतादृशी । अद्य । विवाहोत्तरदिन इत्यर्थः । निद्राति । एवं च प्रेम्णा किं किं न संभवतीति व्यज्यते । पार्वतीसखीवाक्यमेतत् । यद्वा प्रेमवत्त्वेऽपि तत्रागमने मम भीतिरुत्पद्यत इति वादिनीं नायिकां नायकदूती दृष्टान्तेन वक्ति—अद्य । अधुनेत्यर्थः । एवं च यदि ते प्रेम तर्हि ते नास्त्येव भीतिः, अन्यथा न प्रेम इत्युभयतोऽपि काठिन्यम्, अतः प्रयाहीति ध्वन्यते । यद्वा तदङ्गास्वादोत्तरं न स्थास्यति भीतिरिति ध्वन्यते ॥

सामान्यवनितासंगतिरनुचितेति कश्चित्कंचिच्छिक्षयति—

कृत्रिमकनकेनेव प्रेम्णा मुषितस्य वारवनिताभिः ।
लघुरिव वित्तविनाशक्लेशो जनहास्यता महती ॥ १६० ॥

**कृत्रिमेति** । कृत्रिमं धातुवादादिभिर्मिथ्या विधीयमानं यत्कनकं तेनेव प्रेम्णा वारवनिताभिर्मुषितस्य वित्तविनाशक्लेशो लघुः । परं तु जनहास्यता महती । एवं च सामान्यवनितासंगमो न विधेय इति व्यज्यते ॥

सखी नायिकां वक्ति—

किं पर्वदिवसमार्जितदन्तोष्ठि निजं वपुर्न मण्डयसि ।
स त्वां त्यजति न पर्वस्वपि मधुरामिक्षुयष्टिमिव ॥ १६१ ॥

**किमिति** । पर्वदिवसे मार्जितौ दन्तोष्ठौ यया तत्संबुद्धिः । ब्रह्मचर्यस्थिति-

धियेति भावः । निजं वपुः किमिति न मण्डयसि । स त्वां मधुराम् । एवं च निषेधवचनकारिणी न त्वमिति व्यज्यते । इक्षुयष्टिमिव पर्वस्वपि पर्वकालेऽपि । पक्षे ग्रन्थिष्वपि । 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरः । न त्यजति । एवं च मिथ्यैतत्त्वं दर्शयसि, तेन तु त्वं यथेच्छमुपभोग्येति ध्वन्यते ॥

केनचिन्नायकेन सह संयोजयितुं नायिकां दूती वक्ति—

कष्टं साहसकारिणि तव नयनार्धेन सोऽध्वनि स्पृष्टः ।
उपवीतादपि विदितो न द्विजदेहस्तपस्वी ते ॥ १६२ ॥

**कष्टमिति** । हे साहसकारिणि । अनुचितकारिणीत्यर्थः । एवं च मया तवोचितमेवोपदिश्यत इति व्यज्यते । तव । एवं च साक्षादनपराधत्वेऽपि स्वीयत्वेन तदपराधस्य त्वय्येवागमनमिति व्यज्यते । तेन च तत्परिहारकर्तव्यता तवैवेति । नयनार्धेन स नायकोऽध्वनि स्पृष्टः । त्वत्कटाक्षविषयीभूत इत्यर्थः । इदं कष्टम् । महदनुचितमित्यर्थः । एवं च त्वत्कटाक्षविशिखहतस्य तस्य त्वद्दर्शनं विना प्राणवियोग एव भवितेति व्यज्यते । किमेतावता इत्यत आह—तपस्वी । एवं च करुणार्हत्वं व्यज्यते । ब्राह्मणदेह उपवीतादपि । एवं च प्रत्यक्षपरिदृश्यमानत्वेन न स ब्राह्मण इति वक्तुमशक्यमिति भावः । तेन च विदितः । एवं चान्यजातीयस्य यथातथास्ताम् , अयं तु ब्राह्मणोऽवश्यं त्वया गत्वा जीवनीय इति द्योत्यते ॥

श्रमातिशयप्राप्तयानया ते किं सुखमिति वादिनं कश्चिद्वक्ति—

क्लेशेऽपि तन्यमाने मिलितेयं मां प्रमोदयत्येव ।
रौद्रेऽनभ्रेऽपि नभःसुरापगावारिवृष्टिरिव ॥ १६३ ॥

**क्लेशेऽपीति** । क्लेशेऽपि विस्तार्यमाणे मिलितेयं मां प्रमोदयत्येव । एवं चान्यस्यैतादृशी मोदयति न वेति को वेदेति भावः । अभ्राभावेऽपि घर्मे नभसः सुरापगाया वारिवृष्टिरिव । एवं चाभ्राभावे घर्मे खिन्नस्य यथा वृष्टिरत्यन्तसुखदा तथैतस्याः संगतिरिति व्यज्यते । मेघाभावेऽप्यातपे ये जलबिन्दवः पतन्ति ते सुरापगाया इति लोकप्रथा ॥

गुणाभिज्ञभीरुकुलजनायिकानामेवान्यानवलोकनीयतासंपादकपटावगुण्ठनमुचितम्, न त्वन्यासामपीति कश्चिदुक्ति—

कूपप्रभवाणां परमुचितमपां पट्टबन्धनं मन्ये ।
याः शक्यन्ते लब्धुं न पार्थिवेनापि विगुणेन ॥ १६४ ॥

**कूपेति** । या विगुणेन रज्जुशून्येन । पक्षे गुणरहितेन । पार्थिवेनापि पृथिवीविकारकलशादिनापि । पक्षे राज्ञापि । एवं च धनादिलोभशून्यत्वं नायिकासु व्यज्यते । प्राप्तुं न शक्यन्ते तासां कूपप्रभवाणाम् । एवं च गम्भीरत्वं तेन च दुष्प्रापत्वं ध्वन्यते । अपां जलानाम्, पट्टस्य सारिण्या बन्धनम् । पक्षे सर्वाङ्गीणाच्छादकवस्त्ररचनं परमुचितं मन्ये । यद्वात्यन्तलज्जावत्तयाच्छादनादिकारिणीं कश्चिदुक्ति— एवं चेतस्ततो द्रव्यादिलोभेन गमनादिशालिन्याः किं तव गोपनमिति व्यज्यते ॥

खण्डिता नायिका नायकं वक्ति—

कररुहशिखानिखात भ्रान्त्वा विश्रान्त रजनिदुरवाप ।
रविरिव यन्त्रोल्लिखितः कृशोऽपि लोकस्य हरसि दृशम् ॥ १६५ ॥

**करेति** । नखाग्रनिखात बहुतरनखक्षतशालिन्, भ्रान्त्वा । इतस्ततो गत्वेत्यर्थः । पक्षे मेरुं प्रदक्षिणीकृत्य । विश्रान्त । क्षणमात्रमिति भावः । रजन्यां दुरवाप । अन्यत्रासक्तत्वादिति भावः । पक्षे मेरोरुत्तरगमनात् । यन्त्रोल्लिखितो रविरिव कृशोऽपि । अपिना निस्तेजस्कत्वसमुच्चयः । लोकस्य । न ममेति भावः । लोकपदमनभिज्ञत्वं ध्वनयति । दृशं हरसि । एवं चैतादृशस्वरूपस्त्वमन्याभ्य एव रोचसे न मह्यमिति व्यज्यते । सूर्योऽपि तेजोबाहुल्येन वीक्षितुमशक्यस्त्वष्ट्रा यन्त्रोल्लिखितोऽल्पतेजस्कतया लोकदृग्विषय इति भावः ॥

किमिति स्वस्वामिनं न सुखयसीति वादिनीं कांचित्काचिदुक्ति—

किं करवाणि दिवानिशमपि लग्ना सहजशीतलप्रकृतिः ।
हन्त सुखयामि न प्रियमात्मानमिवात्मनश्छाया ॥ १६६ ॥

**किमिति** । सह बाल्यतः । पक्ष उत्पत्तित इत्यर्थः । जाता, शीतला शान्ता । पक्षे यथाश्रुतम् । प्रकृतिः स्वभावो यस्याः सा । एवं च सर्वदा मधुरवचनशालित्वं व्यज्यते । दिवानिशमपि लग्ना । सेवार्थमिति भावः । अहमात्मनः स्वस्य छायात्मानमिव प्रियं हन्त खेदे न सुखयामि । किं करवाणि । एवं च यथा सर्वदा निकट-

र्वर्तिनी शीतलापि स्वच्छाया न सुखजनिका तथाहं संवृत्तेत्यत्र न मद्दोषः, अपि तु ईश्वरेच्छैवात्र नियामिकेति व्यज्यते । यद्वा सततसेवाकारित्वसौम्यत्वस्वीयत्वादिदोषवत्त्वादहं न सुखजनिकेति द्योत्यते। तेन चैतदभाववत्त्वेवैतत्तोषजनिकेति ॥

नायकसंगमे श्रमो भवतीति वादिनीं सखी वक्ति—

केशैः शिरसो गरिमा मरणं पीयूषकुण्डपातेन ।
दयितवहनेन वक्षसि यदि भारस्तदिदमचिकित्स्यम् ॥१६७॥

**केशैरिति**। स्फुटार्थमेतत् ॥

नायको मानिनीं वक्ति—

किंचित्कर्कशतामनु रसं प्रदास्यन्निसर्गमधुरं मे ।
इक्षोरिव ते सुन्दरि मानस्य ग्रन्थिरपि काम्यः ॥ १६८ ॥

**किंचिदिति**। हे सुन्दरि, किंचित्कार्कश्योत्तरम्। एवं चातिकार्कश्याभावो व्यज्यते। स्वभावस्पष्टं रसं रतिम्। पक्षे द्रवम्। प्रदास्यन्। ते मानस्य, इक्षोरिव ग्रन्थिरपि। दुरपनेयाग्रह इति यावत्। किमु वाच्यं मृद्वभिमान इत्यपिना द्योत्यते। काम्यः। एवं च मानग्रन्थावपि सुखम्, किमुत तदपगम इति व्यज्यते। तेन चैतादृशावगणनमनुचितमिति द्योत्यते। 'मधुरः' इति पाठे ग्रन्थिविशेषणम् ॥

कश्चिदतिप्रवीणो वक्ति—

केन गिरिशस्य दत्ता बुद्धिर्भुजगं जटावनेऽर्पयितुम् ।
येन रतिरभसकान्ताकरचिकुराकर्षणं मुषितम् ॥ १६९ ॥

**केनेति**। गिरौ शेते तस्य। एवं च नागरिकव्यवहारशून्यत्वं व्यज्यते। तेन यस्यकस्यचिद्वचनविश्वासकारित्वम्। भुजगं जटावने। एवं च स्वतो भीषणत्वेऽपि भुजगार्पणेनातिभीषणत्वं ध्वन्यते। अर्पयितुम्। अर्पितपदेन संस्थापनाभावप्रतिपादनेनेतस्ततो जटासंचारित्वं भुजगे व्यज्यते। तेन चैकदेशस्यापि करस्पर्शायोग्यत्वम्। केन बुद्धिर्दत्ता। यद्वा जटानामवनं रक्षणं तत्र। तन्निमित्तमित्यर्थः। एवं च संरक्षणेऽन्ये बहवोऽभ्युपायाः सन्ति, एवं सत्येतादृशायुक्तविचारकथनमप्रामाणिककृत्यमिति व्यज्यते। यद्वा गिरिशपदेन भुजगसंस्थापनार्हकंदरादिज्ञानवत्त्वं द्योत्यते। जटाभिरवने। अवननिमित्तमित्यर्थः। अर्थाद्भुजगस्य। एवं च भुजगे भूषणत्वं ध्वन्यते। एवं च वनपदस्य विपिनार्थकत्वे सर्पस्यावनयोग्यत्वे न तत्करणेनानौचित्यमायातीति दूषणमपास्तम्। येन यया बुद्ध्या रतिवेगेन यत्कान्तया करेण

चिकुराकर्षणं मुषितम्। भुजगभयादिति भावः। एवं च रतिकालीननायिकाविधीयमानकेशाकर्षणमत्यन्तसुखदमिति व्यज्यते। 'चिकुराकर्षरसमुषितः' इति पाठे येन रसमुषितो हरो जात इत्यर्थः॥

को वा नायिकाप्रणयशालीति वादिनं कश्चिद्वक्ति—

करचरणकाञ्चिहारप्रहारमविचिन्त्य बलगृहीतकचः।
प्रणयी चुम्बति दयितावदनं स्फुरदधरमरुणाक्षम्॥ १७०॥

**करेति**। करादिप्रहारमविचिन्त्य। नायिकाकृतमित्यर्थः। बलेन। एवं च पीडा भविष्यतीति ज्ञानविधुरत्वं तेन चात्यन्तरतिनिर्भरत्वं व्यज्यते। गृहीतकचः स्फुरदधरम्। निष्ठुरं वक्तुमिति भावः। अरुणाक्षम्। कोपोद्रेकादिति भावः। दयितावदनं यश्चुम्बति। एवं च भीतिशून्यत्वं व्यज्यते। स प्रणयी नायिकानिरूपितप्रेमवान्। अन्यथा कोपाद्यवगणय्य बलाच्चुम्बनकरणमसंभवीति भावः। 'नायिकाविषयकप्रेमवान्। एवं च प्रहारदुःखमवगणय्य यस्तथा करोति स एव तथेति भावः' इति ऋजवः। वस्तुतस्तु रागोद्रेकशालीत्यर्थः। यद्वैतादृशो यस्तथाविधं नायिकावदनं चुम्बति स एव धन्य इत्यर्थः। यद्वा मया कोपः प्रदर्शनीयः, त्वया तु प्रियो मयि बलात्काराय प्रेरणीय इति शिक्षिता सखी नायकं वक्ति। एवं च कोपवत्यामपि नायिकायां प्रीतिशालिना नायकेन तत्कृतकरतर्जनाद्यवगणय्य बलात्कारः क्रियत एव, अतस्त्वया भीतिमुत्सृज्य स्वेच्छाचारो विधेय इति ध्वन्यत इत्यर्थः॥

नायकचाञ्चल्यखिन्नां नायिकां सखी समाधत्ते—

कुरुतां चापलमधुना कलयतु सुरसासि यादृशी तदपि।
सुन्दरि हरीतकीमनु परिपीता वारिधारेव॥ १७१॥

**कुरुतामिति**। हे सुन्दरि, अधुना नायकश्चापलमितस्ततो विलोकनादि कुरुताम्। न निवारणीय इति भावः। यतो यत्प्रकारिका त्वं सुरसासि तदपि जानातु। केव। हरीतकीमनु परिपीता जलधारेव। एवं च यथा तिक्तकटुकादिरसशालिहरीतकीस्वादोत्तरं जलधारा मृष्टतमा भवति, तथा त्वमन्यगुणहीननायिकारसास्वादोत्तरमत्यन्तसुखदा भविष्यसीति व्यज्यते। अत एवासम्यग्वस्तुदर्शनोत्तरं सम्यग्वस्तुदर्शनेन सुखम्, न तेन विना तथेति लोकप्रसिद्धिः॥

शृङ्गाररचनार्थं कृताभ्यङ्गां साधारणवनितां सखी वक्ति—

कज्जलतिलककलङ्कितमुखचन्द्रे गलितसलिलकणकेशि ।
नवविरहदहनतूलो जीवयितव्यस्त्वया कतमः ॥ १७२ ॥

**कज्जलेति** । हे कज्जलतिलकेन । दृग्दोषनिवारणार्थं कृतेनेति भावः । कलङ्कितो मुखचन्द्रो यस्यास्तत्संबुद्धिः । गलितसलिलकणाः केशा यस्यास्तत्संबुद्धिः । नूतनो यो विरहवह्निस्तस्य तूलरूपस्त्वया कतमो जीवयितव्यः । 'दूनः' इत्यपि पाठः । एवं चैतादृशत्वदीयदर्शनेन सर्वेऽपि तात्कालिकविरहवह्निवृतदह्यमाना भविष्यन्ति, तेषु कस्त्वयानुग्राह्य इति सुभगत्वं ध्वन्यते ॥

स्वस्य दारिद्र्येऽपि महान्तो न दानं परित्यजन्तीति कश्चिद्वक्ति—

कृच्छ्रानुवृत्तयोऽपि हि परोपकारं त्यजन्ति न महान्तः ।
तृणमात्रजीवना अपि करिणो दानद्रवार्द्रकराः ॥ १७३ ॥

**कृच्छ्रेति** । कृच्छ्रानुवृत्तयोऽपि कष्टजीवना अपि महान्तः । एवं च नीचानामन्यादृशी गतिरिति भावः । परोपकारम् । दानरूपमित्यर्थः । न त्यजन्ति । तृणमात्रेण जीवनं येषां तेऽपि करिणो गजाः, दानं मदः, दानोदकं च तेनार्द्रः करः शुण्डादण्डश्च येषाम् ॥

कांचन गोपिकामालिङ्ग्य तिष्ठन्तं कृष्णमवलोक्य विस्मयेन समागतान्बालकान्गोपीसखी वक्ति—

किं हसथ किं प्रधावथ किं जनमाह्वयथ बालका विफलम् ।
तदयं दर्शयति यथा रिष्टः कण्ठेऽमुना जगृहे ॥ १७४ ॥

**किमिति** । रिष्टो दैत्यः । एवं च भूतार्थाभिनयोऽयं न त्वन्यदपूर्वं किंचिदिति व्यज्यते ॥

कातरताकेकरितस्मरलज्जारोषमसृणमधुराक्षी ।
मोक्तुं न मोक्तुमथवा वलतेऽसावर्धलब्धरतिः ॥ १७५ ॥

**कातरतेति** । कातरता भीतिस्तया केकरिते वक्रीकृते स्मरलज्जारोषैर्मसृणमधुरे स्निग्धसुन्दरे अक्षिणी यस्याः । मोक्तुमथवा न मोक्तुम् । नायकमिति भावः । अर्धं लब्धा रती रतं ययासौ वलत उद्युक्ता भवति । जातिवर्णनमेतत् ॥

केचिद्दूरादागताः, परं तु नात्र तेषां तत्फलमिति कश्चिदन्योक्त्या वक्ति—

केतकगर्भे गन्धादरेण दूरादमी द्रुतमुपेताः ।
मदनस्यन्दनवाजिन इव मधुपा धूलिमाददते ॥ १७६ ॥

**केतकेति**। केतकपुष्पस्य मध्ये गन्धस्यादरेण लोभेन द्रुतं दूरात् । एवं च श्रमातिशयो व्यज्यते । उपेताः । गन्धस्यादरो यस्य तेन । वायुनेत्यर्थः । द्रुतं दूरादुपेता मदनरथाश्वा इव । एवं च भारवहनसमर्थत्वं व्यज्यते । तेन चोपमेयेऽतिश्रेष्ठत्वम् । मधुपाः । एवं च तदेकजीवनोपायशालित्वं ध्वन्यते । धूलिमाददते । एवं चैतादृशानां कीर्तिश्रवणादागतानामत्रैतादृशी गतिरित्यनुचितमिति व्यज्यते । पक्षे रथोद्धतरजःसंवन्धाद्धूलिमत्तेति भावः । यद्वा सामान्यवनितां सखी वक्ति—हे केतकगर्भे । अतिगौराङ्गीत्यर्थः । कीर्त्यादरेण दूराच्छीघ्रमागताः । एवं चात्रत्यानां कालान्तरेऽपि समाधातुं शक्यत्वमावेद्यते । मदनरथाश्वा इव । एवं च मदनोऽपि सौन्दर्याद्यनेकगुणवतामेतेषामेव वलेन जगज्जयं करोतीति व्यज्यते । तेन चैतादृशदुर्लभा इति । मधुपा मद्यपाः । एवं चोन्मादवत्तया द्रव्यव्ययक्लेशशून्यत्वं ध्वन्यते । धूलिम् । अर्थात्त्वच्चरणसंवन्धिनीम् । आददते । एवं चैतेन नायका अवश्यमनुग्राह्या इति ध्वन्यते ॥

मूर्खनिवद्धान्तःकरणत्वान्नैताश्चातुर्यादिगुणभाजनमिति कश्चिदन्योक्त्या वक्ति—

को वक्रिमा गुणाः के का कान्तिः शिशिरकिरणलेखानाम् ।
अन्तः प्रविश्य यासामाक्रान्तं पशुविशेषेण ॥ १७७ ॥

**क इति**। वक्रिमा वक्रत्वं कः, गुणाः के, कान्तिः का, चन्द्रलेखानाम् । शिशिरकिरणपदेन तदधिपमान्द्यमावेद्यते । प्रविश्य यासामन्तरभ्यन्तरं पशुविशेषेण । अतिजडेनेति भावः । आक्रान्तम् । एवं चैतासां चातुर्यादि सर्वं मिथ्यैवेति व्यज्यते ॥

वलादियं कन्या मया परिणेयेति वादिनं कश्चिद्दृष्टान्तव्याजेन वारयति—

कृतविविधमथनयत्नः पराभवाय प्रभुः सुरासुरयोः ।
इच्छति सौभाग्यमदात्स्वयंवरेण श्रियं विष्णुः ॥ १७८ ॥

**कृतेति**। कृतो विविधमथने यत्नो येन सः । मथनमर्थात्समुद्रस्य । विविध-

पदेन बुद्धिविशेषशालित्वं व्यज्यते। देवदानवयोः पराजयाय प्रभुः समर्थो विष्णुः सौभाग्यस्य मदादभिमानात्स्वयंवरेण श्रियम्। एवं चात्यन्तस्पृहणीयत्वं व्यज्यते। इच्छति। एवं च शारीरबुद्धिबलसत्त्वेऽपि विष्णुना लक्ष्मीपाणिग्रहणाय न बलात्कारः कृतः। अतस्त्वया नैतादृक्कर्म कर्तव्यमिति ध्वन्यते। यद्वा त्वयि सुभगत्वेऽवश्यं सा त्वामेव वरिष्यति, अन्यथा बलाद्धृतेति न तत्प्रीतिरिति ध्वन्यते॥

एतेषु वैदेशिकेषु स्थायि भ्रमेण विहिता त्वया संगतिः, तव सा न सुखदेति काचित्कांचित्प्रति वक्ति—

**किं पुत्रि गण्डशैलभ्रमेण नवनीरदेषु निद्रासि।**
**अनुभव चपलाविलसितगर्जितदेशान्तरभ्रान्तीः॥ १७९॥**

**किमिति**। हे पुत्रि। एवं चोपदेशार्हत्वं ध्वन्यते। गण्डशैलानां भ्रमेण। 'गण्डशैलास्तु च्युताः स्थूलोपला गिरेः' इत्यमरः। नूतनमेघेषु। नीरदपदेनेदं देयमिदं देयमिति संकल्पमात्रकारित्वं व्यज्यते। तेन च न ततोऽर्थप्राप्तिरपीति। निद्रासि। एवं चातिविश्वस्तत्वं व्यज्यते। चपलायास्तडितो विलसितानि, गर्जितानि च, देशान्तरभ्रमणानि चानुभव। एवं चैतत्संगत्या सपत्नीवैभवतर्जनदिगन्तगमनादिदुःखमवश्यं भावीति व्यज्यते॥

नायिकासखी नायकसखीं वक्ति—

**कान्तः पदेन हत इति सरलामपराध्य किं प्रसादयथ।**
**सोऽप्येवमेव सुलभः पदप्रहारः प्रसादः किम्॥ १८०॥**

**कान्त इति**। कान्तश्चरणेन हत इति सरलाम्। एवं च भवच्छाठ्यानभिज्ञेयत्वमिति ध्वन्यते। अपराध्य। सापराधां विधायेत्यर्थः। किं प्रसादयथ। सोऽपि प्रहाररूपः प्रसादः, एवमेव किं सुलभः। एवं च मानिन्यानया क्रोधात्पादाहते नायके भवतीभीरियमनुचितकार्यकारिणी त्वमिति त्रासयित्वा प्रसादना क्रियते। परं त्वेतत्पदप्रहारोऽप्येतस्यातिदुर्लभ इति नायिकाधिक्यं द्योत्यते॥

किमिति नायको नानीयते भवतीभिरिति दूतीषु वादिनीं नायिकां सखी द्वाभ्यां वक्ति—

**कर्णगतेयममोघा दृष्टिस्तव शक्तिरिन्द्रदत्ता च।**
**सा नासादितविजया क्वचिदपि नापार्थपतितेयम्॥ १८१॥**

**कर्णगतेयमिति**। या कर्णविशाला, कर्णहस्तगता च। सफला। पक्षेऽमो-

घेति शक्तिनाम । इन्द्रेण परमेश्वरेण । पक्षे पुरंदरेण । दत्ता । आसादितो विशिष्टानां जयो यया । न विद्यत आसादितविजयो यस्याः सकाशात् । एवं चेयमेव विशिष्टजयकर्त्रीत्यर्थः । पक्षेऽप्राप्तार्जुना । यद्वासादितो विजयो यस्याः । एतज्जयकारिणी नान्येति भावः । इयं तव दृष्टिः शक्तिश्च क्वचिदप्यपगतोऽर्थो यस्याः । षण्ढेत्यर्थः । पतिता नेति न इति काकुः । पक्षेऽर्जुनभिन्ने घटोत्कचे पतिता नेति न । एवं च यस्त्वत्कटाक्षमात्रेण न वश्यः स पुरुष एव नेति द्योत्यते ॥

क्लेशयसि किमिति दूतीर्यदशक्यं सुमुखि तव कटाक्षेण ।
कामोऽपि तत्र सायकमकीर्तिशङ्की न संधत्ते ॥ १८२ ॥

**क्लेशयसीति** । दूतीरिति बहुवचनेन न कापि तत्र युक्तिश्चलतीति व्यज्यते । अकीर्तिशङ्की । षण्ढत्वादिति भावः । एवं च कामबाणापेक्षया कटाक्षेऽतिशयो व्यज्यते ॥

कश्चिदधरं स्तौति—

को वेद मूल्यमक्षद्यूते प्रभुणा पणीकृतस्य विधोः ।
प्रतिविजये यत्प्रतिपणमधरं धरनन्दिनी विदधे ॥ १८३ ॥

**को वेदेति** । प्रभुणेश्वरेण । एवं चानर्घवस्तुसत्त्वं द्योत्यते । अक्षद्यूते पणीकृतस्य चन्द्रस्य मूल्यं को वेद । यस्माद्धरति महीमिति धरः । 'धरपर्वताः' इत्यमरः । तत्तनया । एवं च चातुर्यविशेषवत्त्वं ध्वन्यते । प्रतिविजये प्रतिपणमधरं विदधे । एवं चाधरसमताप्रदर्शनेन चन्द्रेऽधिकत्वं न वास्तवमित्यधरामृतेऽधिकत्वं ध्वन्यते ॥

'मुञ्च माम्, नो चेत्ताडयामि चरणेन' इति वादिनीं कुपितनायिकां नायको वक्ति—

कुपितां चरणप्रहरणभयेन मुञ्चामि न खलु चण्डि त्वाम् ।
अलिरनिलचपलकिसलयताडनसहनो लतां भजते ॥ १८४ ॥

**कुपितामिति** । हे निरर्थककोपने, चरणप्रहरणभयेन कुपितां त्वां न मुञ्चामि । यतो वायुचपलपल्लवताडनसहोऽलिर्लतां भजते । अलिरिति स्वस्मिन्नलितुल्यत्वप्रतिपादनेनानन्यगतिकत्वं द्योत्यते । कोपेऽनिलतुल्यत्वप्रतिपादनेन चञ्चलत्वमावेद्यते । चरणे किसलयतुल्यत्वप्रतिपादनेन कोमलत्वं तेन च दुःखाजनकत्वं

ध्वन्यते । यद्वा मन्मथशस्त्ररूपत्वं तेन च तत्संबन्धेनोन्मत्ततया वेदनानभिज्ञत्वं स्वस्मिन्व्यज्यते ॥

कथमनेन विलम्बितमिति कुपितां नायकेन च स्वापराधक्षमापनाय विहितप्रसादां नायिकां सखी वक्ति—

कोपाकृष्टभ्रूस्मरशरासने संवृणु प्रिये पततः ।
छिन्नज्यामधुपानिव कज्जलमलिनाश्रुजलबिन्दून् ॥ १८५ ॥

**कोपेति** । प्रिये नायकविषये कोपेनाकृष्टम् । एवं च ज्याभङ्गो युक्त इति व्यज्यते । भ्रूरूपं स्मरशरासनं यया तत्संबुद्धिः । छिन्ना या ज्या तन्मधुपानिव । स्मरधनुर्ज्या भ्रमररूपेति प्रसिद्धिः । पततः कज्जलमलिनाश्रुजलबिन्दून्संवृणु । एवं च नायकप्रणत्युत्तरकालं कोपविधानमनुचितमिति व्यज्यते । यद्वा संवृण्वित्यनेन कोपप्रदर्शनाव्यवहितमेव तत्परित्यागोऽनुचित इत्यावेद्यते । यद्वा छिन्नज्यात्वनिरूपणेन यद्यधुनापि कोपं करिष्यसि तर्हि कुपितो नायकः केनापि समाहितुमशक्य इति भीतिरावेद्यते । अत्र जलपदमाधिक्यं द्योतयति ॥

बालवनिताचित्तं स्वकरे कर्तुं कृतयत्नवैकल्यखिन्नः कश्चिद्वक्ति—

कामेनापि न भेत्तुं किमु हृदयमपारि बालवनितानाम् ।
मूढविशिखप्रहारोच्छूनमिवाभाति यद्वक्षः ॥ १८६ ॥

**कामेनेति** । बालवनितानां हृदयं कामेनापि । एवं चान्यस्य का वार्तेति भावः । भेत्तुम् । किमु वितर्के । नापारि मूढस्य । यद्वा मूढो मन्दो यो बाणप्रहारस्तेनोच्छूनमिव वक्ष आभाति । अन्यस्यापि धन्विनो मन्दशरप्रहारे लक्ष्यशरीर उच्छूनतामात्रमेव भवति । एवं च मदीययत्नेनैतासां हृदयं न भिद्यत इति न चित्रमित्यावेद्यते ॥

कश्चिन्नायिकां वक्ति—

किं परजीवैर्दीव्यसि विस्मयमधुराक्षि गच्छ सखि दूरम् ।
अहिमधिचत्वरमुरगग्राही खेलयतु निर्विघ्नः ॥ १८७ ॥

**किमिति** । हे सखि, विस्मयेन । सर्पदर्शनकौतुकजन्येनेत्यर्थः । सुन्दराक्षि । विस्फारितत्वादिति भावः । परस्यान्यस्य प्राणैः किमिति क्रीडसि । दूरं गच्छ । चत्वरमधिकृत्याहितुण्डिको विघ्नहीनोऽहिं खेलयतु । एवं च निखिलजनेषु त्वद्वदन-

विलोकनासक्त्याहितुण्डिकश्रमो निरर्थक एव भवितेति व्यज्यते। यद्वा चत्वरपदेन सर्वजनसमाजयोग्यत्वं ध्वन्यते। दूरं बहुकालं खेलयतु। परस्य संकेतितनायकस्य प्राणैः किमिति क्रीडसि। अतो गच्छ। एवं चान्यस्य निर्विघ्नतासंपादने स्वस्यापि तद्भवतीति नियमेनात्र सकलदुष्टासक्त्या निर्विघ्नतया संकेतितनायकसविधे गन्तव्यम्। विलम्बे तु मदनानलसंतप्तस्य तस्य प्राणा एव गमिष्यन्तीति दूती नायिकां वक्ति॥

कुपितनायिकाचरणप्रहारखिन्नं नायकं नायिकासखी समाधत्ते—

**करचरणेन प्रहरति यथा यथाङ्गेषु कोपतरलाक्षी।**
**रोषयति परुषवचनैस्तथा तथा प्रेयसीं रसिकः॥ १८८॥**

**करेति**। कोपचञ्चलाक्षी करौ च चरणौ च करचरणं तेनाङ्गेषु यथा यथा प्रहरति तथा तथा क्रोधजनकवाक्यैः प्रेयसीं यः कोपयति स एव रसिकः। एवं च यदि त्वं रसिकस्तर्ह्येतादृशेऽर्थे कोपविधानमनुचितं तवेति व्यज्यते। अत्र द्वितीयतच्छब्दः 'संचारिणी दीपशिखा—' इत्यादि पद्यवदुचितः॥

निन्दसि त्वं नायिकामिति वादिनीं नायिकासखीं नायको वक्ति—

**कस्तां निन्दति लुम्पति कः स्मरफलकस्य वर्णकं मुग्धः।**
**को भवति रत्नकण्टकममृते कस्यारुचिरुदेति॥ १८९॥**

**कस्तामिति**। तां को निन्दति। न कोऽपीत्यर्थः। मदनपटस्य चित्ररूपाम्। 'वर्णकः' इति पाठे मदनपटचित्रमित्यर्थः। को मूर्खो लुम्पति। रत्नकण्टको रत्ननिन्दकः। 'कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकहाटकनिष्कशुष्कवर्चस्कपिनाकभाण्डककटकदण्डकपिटकतालकफलककल्कपुलाकानि नपुंसके च' इति पाणिनिलिङ्गानुशासनात्कण्टकशब्दो नपुंसकः। को भवति। सुधायामरुचिः कस्योदेति। न कस्यापीत्यर्थः। एवं चैतादृश्याः कथं मया निन्दा विधेयेति व्यज्यते॥

संकेते गत्वा तत्र नायिकामप्राप्य गतं मया तत्रेति ज्ञापनाय चूताङ्कुरमादाय नायिकादृग्विषयं नायकं प्रति नायिकासखी वक्ति—

**कोपवति पाणिलीलाचञ्चलचूताङ्कुरे त्वयि भ्रमति।**
**करकम्पितकरवाले स्मर इव सा मूर्च्छिता सुतनुः॥ १९०॥**

**कोपवतीति**। कोपवति। कथं न समागतेयमिति धियेति भावः। स्मरविशेषणमप्येतत्। पाणौ लील्या विलासेन। एवं च लोकान्यथाबुद्धिनिरासकत्वं

ध्वन्यते । चञ्चल आम्राङ्कुरो यस्मिन् । करे कम्पितः । मारणोद्यमादिति भावः । खड्गो येन तस्मिन्स्मर इव त्वयि भ्रमति सति । ज्ञापनार्थमिति भावः । सा सुतनुः । एवं चोपेक्षानर्हत्वं ध्वन्यते । मूर्च्छिता । एवं चैतस्या अतिदुःखं जातमिति व्यज्यते । तेन चायमपराधः क्षन्तव्य इति ॥

कुलवत्याः सुरते गोत्रस्खलनमनुचितं तवेति वादिनीं सखीं नायको वक्ति—

कौलीन्यादलमेनां भजामि न कुलं स्मरः प्रमाणयति ।
तद्भावनेन भजतो मम गोत्रस्खलनमनिवार्यम् ॥ १९१ ॥

**कौलीन्यादिति** । अत्यर्थं कौलीन्यात्कुलीनत्वात् । 'कौलीनात्' इति पाठे तु कौलीनाल्लोकवादात् । 'स्यात्कौलीनं लोकवादे' इत्यमरः । एनां भजामि । एतस्याः परित्यागेऽत्यन्तलोकनिन्दाभीतिरिति भावः । स्मरः कुलं न प्रमाणयति । एवं च सगुणत्वमपेक्षितमिति भावः । तस्या भावनया सेयमिति बुद्ध्या भजतः । एनामिति भावः । मम नामस्खलनम् । 'गोत्रं नाम्नि कुलेऽपि च' इति विश्वः । निवारयितुमशक्यम् ।

कस्याश्चिन्नायिकायाः पतिमवलोक्य भीतं कंचन नायकं दूती वक्ति—

कुत इह कुरङ्गशावक केदारे कलममञ्जरीं त्यजसि ।
तृणबाणस्तृणधन्वा तृणघटितः कपटपुरुषोऽयम् ॥ १९२ ॥

**कुत इति** । हे कुरङ्गशावक । शावकपदेनाज्ञत्वं व्यज्यते । तेन च भीतियोग्यत्वम् । इह केदारे शालिमञ्जरीं कुतस्त्यजसि । नन्वत्रास्ति रक्षक इत्यत्राह—तृणरूपो बाणो यस्य, तृणरूपधनुष्मान्, तृणविहितो मिथ्यापुरुषः । एवं चाक्षमादस्माद्भीतिमपहाय यथेच्छं त्वमत्रागच्छेति द्योत्यते । यद्वा नायं पुरुषः किं तु तद्वेषधारीति भयमपास्य त्वमत्रागच्छेति ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता ककारव्रज्या ।

---

खकारव्रज्या ।

सन्मैत्रीं स्तौति—

खलसख्यं प्राङ्मधुरं वयोऽन्तराले निदाघदिनमन्ते ।
एकादिमध्यपरिणतिरमणीया साधुजनमैत्री ॥ १९३ ॥

**खलसख्यमिति** । प्राक्प्रथमतः । अन्तराले मध्ये वयः । तारुण्यमित्यर्थः ।

अन्ते सायं ग्रीष्मदिनम्। मधुरं मनोहारि। एका। नान्यदेतत्सममिति भावः। एवं च सत्संगतिरेव विधेयेति ध्वन्यते॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता खकारव्रज्या।

---

गकारव्रज्या।

केनचिद्गुणवता दरिद्रेण संयोजयितुं काचित्कांचिद्वक्ति—

गुणमधिगतमपि धनवान्न चिरान्नाशयति रक्षति दरिद्रः।
मज्जयति रज्जुमम्भसि पूर्णः कुम्भः सखि न तुच्छः॥१९४॥

**गुणमिति**। हे सखि, प्राप्तमपि। एवं चाधिकार्जनं दूरापास्तमिति भावः। दरिद्रो रक्षत्यपि। एवं च नवीनमर्जयतीति भावः। तुच्छोऽपरिपूर्णः। एवं च दारिद्र्येऽपि गुणवत्त्वादेतत्संगतिरेवोचितेति व्यज्यते। यद्वा साधारणोक्तिरियम्॥

महदङ्गीकारेणैव महत्सविधे गमनमुचितम्, अन्यथा नेति कश्चित्कंचिदुपदिशति—

गुरुरपि लघूपनीतो न निमज्जति नियतमाशये महतः।
वानरकरोपनीतः शैलो मकरालयस्येव॥ १९५॥

**गुरुरिति**। आशयेऽन्तःकरणे, मध्ये च। मकरालयपदेन स्वल्पस्याप्यन्तर्वसतियोग्यत्वमिति व्यज्यते। एवं चैतादृशेऽप्यत्यन्तमहतो लघ्वङ्गीकरणान्नात्यन्तपरिचितिरिति व्यज्यते॥

कदापि कस्याप्यवाच्यं न वाच्यमिति कश्चित्कंचिदुपदिशति—

गौरीपतेर्गरीयो गरलं गत्वा गले जीर्णम्।
जीर्यति कर्णे महतां दुर्वादो नाल्पमपि विशति॥ १९६॥

**गौरीपतेरिति**। महत्तरं गरलं गत्वा। एवं च तद्ग्रहणे नोद्यमो गौरीपतेरिति भावः। एवं च महद्भिः परदोषश्रवणे नोद्यमः क्रियत इति किं वक्तव्यम्। तज्जातं तदैव नश्यतीति व्यज्यते। जगदीश्वरस्य कण्ठे जीर्णम्। एवं च बहिर्निःसरणानर्हत्वं व्यज्यते। महतां कर्णे दुर्वादो जीर्यति। अल्पमपि न प्रविशति। एवं च श्रवणसमसमयमेव दुर्वादो नश्यति, न सतां स्वल्पमपि हृदयमवतरतीति भावः। अल्पं नीचपुरुषं विशत्यपि, न जीर्यतीति किमु वाच्यमिति भावः। एवं च महन्मुखाच्च कस्यचिद्दूषणं निःसरति, क्षुद्रस्य मुखाद्बहिरेव निःसरतीति व्यज्यत इति

वार्थः । एवं च यदि ते महत्त्वापेक्षा तर्हि न कदापि कस्यापि निन्दा विधेयेति द्योत्यते । दुर्वादे गरलसमताप्रतिपादनेन दाहकत्वातिशयो द्योत्यते ॥

कस्याश्चिद्वार्ता काचिद्वक्ति—

गृहपतिपुरतो जारं कपटकथाकथितमन्मथावस्थम् ।
प्रीणयति पीडयति च बाला निःश्वस्य निःश्वस्य ॥ १९७ ॥

**गृहपतीति** । गृहपतिपदेन गृहव्यासङ्गप्रवणत्वेन प्रतारणार्हत्वं ध्वन्यते । तत्पुरतः । 'धनविशेषाप्राप्त्या मनसिजसंतापकदर्थितोऽहं भवद्विधद्विजराजदर्शनमपि गृहीतुं नोत्सहे, केवलं गरलगिलनमेवाश्रित्येदानीं संसारविरतिं विधास्ये' इत्यादि कपटवार्ताभिः कथितस्वमन्मथावस्थं जारम् । बाला षोडशवार्षिकी । एवं चोन्मादवत्त्वं ध्वन्यते । पतिपुरत इदमप्यत्रान्वेति । निःश्वस्य । तथाविधदारिद्र्यश्रवणानुकम्पयेति भावः । अथ च 'तावत्पर्यन्तं सुरतरङ्गं विधास्ये, यावत्ते श्रमातिशयाच्छ्वासोच्छ्वासातिशयो भावी' इति कथनेन, अथवा 'श्वासपरित्यागेन विरहेण तव प्राणापगमे ममापि प्राणा गमिष्यन्ति' इति प्रेमातिशयदर्शनेन प्रीणयति । तथाविधचेष्टासञ्जितरतातिशयानुस्मारणेन पीडयति च । एवं च स्त्रीधूर्तत्वं केनापि विज्ञातुमशक्यमिति ध्वन्यते ॥

रतप्रावीण्यविहीनं पुंस्त्वाभिमानशालिनं काचिदन्योक्त्या वक्ति—

गतिगञ्जितवरयुवतिः करी कपोलौ करोतु मदमलिनौ ।
मुखबन्धमात्रसिन्धुर लम्बोदर किं मदं वहसि ॥ १९८ ॥

**गतीति** । गत्या गमनविशेषेण गञ्जिता तिरस्कृता । पक्षे ज्ञानेन । रतिनैपुण्येनेत्यर्थः । गञ्जिता रतिविजयेन स्वाधीनीकृता । वरा गतिविशेषशालितया । पक्षे कामकेलिकोविदात्वेन । युवतिर्येन । मुखबन्धमात्रेण । एवं च करिकार्यसत्त्वाभावो व्यज्यते । सिन्धुर गज । लम्बोदर । एवं च गतिविशेषशून्यत्वं व्यज्यते । पक्षे लम्बोदरपदेनोत्थानासामर्थ्यमभिव्यज्यते । किं मदं वहसि । एवं च पुरुषचिह्नसत्त्वमात्रेण न गर्वस्त्वया विधेय इति द्योत्यते । यद्वान्यकामुकसमताकारिणं कंचन काचिदन्योक्त्या वक्ति । एवं च तत्तुल्यं त्वयि न सामर्थ्यमिति व्यज्यते ॥

काचित्कस्याश्चिद्वार्ता वक्ति—

गेहिन्याः शृण्वन्ती गोत्रस्खलितापराधतो मानम् ।
स्निग्धां प्रिये सगर्वां सखीषु बाला दृशं दिशति ॥ १९९ ॥

**गेहिन्या इति** । श्रेष्ठपत्न्या नामस्खलनरूपापराधजन्यं मानं शृण्वन्ती । अत्र

नुमागमश्चिन्त्यः। बाला। प्रिये स्निग्धाम्। स्वासक्तिज्ञानजनितप्रेमवत्तयेति भावः। सखीषु सगर्वाम्। ईदृश्यहं गुणशालिनीति धियेति भावः। यद्वैतासां प्रिया नैता-स्वेतादृशासक्तिमन्त इति धियेति भावः॥

केलिवने गन्तव्यमिति कश्चित्कांचिद्वक्ति—

ग्रीष्ममये समयेऽस्मिन्विनिर्मितं कलय केलिवनमूले।
अलमालवालवलयच्छलेन कुण्डलितमिव शैत्यम्॥ २००॥

**ग्रीष्मेति**। संतापप्रचुरेऽस्मिन्समये विनिर्मितम्। वृक्षसंजीवनार्थमिति भावः। क्रीडावृक्षसमूहमूले। वनपदेन सर्वत्र तत्र शैत्यमित्यावेद्यते। अत्यर्थं शैत्यमालवालवलयमिषेण। वलयपदं कुण्डलितत्वदार्ढ्याय। कुण्डलितमिव निर्बन्धवत्तां प्रापितमिव त्वं कलय। एवं चैतत्समये क्रीडा तत्रैवोचितेति भावः। यद्वा ग्रीष्मस्वरूपे समये क्रीडावृक्षसमूहमूले विशेषेण निर्मितम्। कलशसेचनादिनेति भावः। अस्मिन्समये। वर्षाकाल इत्यर्थः। आलवालवलयमिषेणाल्पमत्यर्थं कुण्डलितमिव निरर्थकीकृतमिव कलय। मेघोदकेन तन्निर्वाहादिति भावः। अन्यदपि निरर्थकं कुण्डलितं कृतमिति लौकिकम्। एवं च वर्षासमयः संवृत्तः अतस्ते प्रियः समायास्यतीति सखी नायिकां समाश्वासयतीत्यर्थः। अथवा नायको नायिकां वक्ति—अत्र संबुद्धिपदानुपादानं मदनबाधातिशयं व्यनक्ति। ग्रीष्मस्वरूपे समये केलिवनमूले विनिर्मितं शैत्यमस्मिन्। पुरोवर्तिनि त्वत्कुचमण्डले सतीत्यर्थः। आलवालवलयमिषेणेवात्यन्तं कुण्डलितम्। एवं चैतादृशग्रीष्मसमये त्वत्कुचमण्डलसमं नान्यदस्ति शीतलतरमिति ध्वन्यते। तेन चातिमनोजानलसंतप्तस्य ममेदमेव शरणमिति॥

मदीयगुणनिबद्धोऽयमिति बुद्ध्या नायं नायकस्त्वया विश्वसनीय इत्यन्योक्त्या काचित्कांचिदुपदिशति—

गुणबद्धचरण इति मा लीलाविहगं विमुञ्च सखि मुग्धे।
अस्मिन्वलयितशाखे क्षणेन गुणयन्त्रणं त्रुटति॥ २०१॥

**गुणबद्धेति**। हे सखि। एवं चोपदेशार्हत्वं व्यज्यते। मुग्धे। इत्यनेनाज्ञत्वं द्योत्यते। गुणैः सूत्रैः। पक्षे चातुर्यादिभिः। बद्धचरणः। पक्षे बद्धाचरणः। बद्धव्यवहार इति यावत्। इति हेतोर्लीलाविहगं मा विमुञ्च। निबद्धचरणत्वात्कानेन गन्तव्यमिति धियेति भावः। यतोऽस्मिन्वलयितशाखे वृक्षे गुणैर्यन्त्रणं बन्धनम्।

पक्षे स्वाधीनतासंपादनम्। क्षणेन त्रुटति। एवं चात्यन्तसावधानतया स्थेयमित्यावेद्यते। लीलाविहगमित्यनेन सर्वस्पृहणीयत्वं ध्वन्यते। तेन चातिसंरक्षणीयत्वम्। विहगपदेनेतस्ततो गमनस्वाभाव्यं द्योत्यते। वलयितशाख इत्यनेन गुणत्रुटनयोग्यत्वम्। पक्षे नायिकासमूहशालित्वं व्यज्यते॥

मदनवेदनासह्येति काचिद्वक्ति—

गुरुगर्जिसान्द्रविद्युद्द्वयमुद्रितकर्णचक्षुषां पुरतः।
बाला चुम्बति जारं वज्रादधिको हि मदनेषुः॥ २०२॥

**गुर्विति**। गुरुगर्जिश्च निबिडविद्युच्चानयोर्यद्द्वयं तेनाच्छादितश्रोत्रनेत्राणां पुरतो बाला। एवं च भीतियोग्यत्वम्। जारं चुम्बति। हि यस्मान्मदनबाणो वज्रादधिकः। एवं च मेघगर्जितविद्युद्द्वयस्य क्षणिकत्वेनातिशीघ्रनेत्रोन्मीलने द्रष्टव्यमेतैरिति विवेकविधुरत्वं ध्वन्यते। यद्वा बहूनामपि भयजनके गर्जितादौ स्वयमेका न भीतेति साहसवत्त्वमावेद्यते॥

मानसंपादनप्रधानशीलां नायिकां सखी वक्ति—

गृहिणीगुणेषु गणिता विनयः सेवा विधेयतेति गुणाः।
मानः प्रभुता वाम्यं विभूषणं वामनयनानाम्॥ २०३॥

**गृहिणीति**। गृहिणी गृहाधिपत्यशालिनी। तद्गुणेषु विनयादित्रितयं गुणः। वामनयनानां दुःशीलानां मानादि विभूषणम्। एवं च यदि गृहाधिपत्यप्रतिष्ठादिकामा त्वमसि तर्हि मानाद्यपहाय विनयाद्येव कुर्विति ध्वन्यते। यद्वा तव नायिकात्यन्तं प्रभुताकारिणीति वादिनं कश्चिद्वक्ति—वामनयनानाम्। त्रिविधानामिति भावः। मध्ये गृहिणीगुणेषु स्वीयागुणेषु नम्रता, सेवा, आज्ञाकारित्वमिति गुणाः प्रधानभूता गणिताः। एवं चैतद्गुणवतीनामेव स्वीयात्वमिति व्यज्यते। तेन चैतद्वत्त्वं सर्वस्वीयास्विति तद्वत्त्वेन न कापि श्लाघ्यतेति। वामनयनानां मध्ये गृहिणीष्वेते गुणा गणिता इत्येव वक्तव्ये गुणेष्विति पदोपादानम्, अन्येऽपि गुणाः सन्ति परं तु तेऽप्रधानभूता इति द्योतयितुम्। मानः, प्रभुता, वाम्यमिदं विभूषणम्। एवं चैतत्त्रितयं कस्यचिदेव भाग्यवतोऽङ्गनायां भवतीति व्यज्यते। एवं च विनयादेः सर्वगृहिणीगुणत्वेन विद्यमानत्वेऽपि मानादिविभूषणसत्त्वेन स्वाङ्गनायामाधिक्यं व्यज्यते। यद्वा गृहिण्या गृहकर्मव्यापृतायाः। किंचिद्गतयौवनाया इति भावः। विनयादयो गुणा मुख्यत्वेन गणिताः। एवं चैतेषामेव तद्भूषणत्वं व्यज्यते। वाम-

नयनानाम् । यौवनातिशयशालिनीनामिति भावः । मानादयो विभूषणमित्यर्थः । अथवा सर्वदा नायकस्य विनयसेवादिकमेव करोषि न कदापि किमिति प्रभुतां नाटयसीति वादिनीं काचिद्वक्ति—गृहिण्या विनयादयो विभूषणम्, कुटिलनयनानां तु मानादयो विभूषणम् । एवं च स्वस्मिन्नत्यन्तसाधुत्वमावेद्यत इत्यर्थः । यद्वा स्वीयागुणेषु विनयादयो मुख्या गणिता वामनयनानां परकीयादीनां वाम्यादि विभूषणम् । एवं च स्वीयाया एवैतत्करणमनुचितमिति भावः । विभूषणपदेन वाम्यादौ गुणव्यवहाराभावो द्योत्यते । अथवा स्त्रीषु मध्ये गृहिणीनां विनयादयो गुणाः । गुणपदेन नैसर्गिकत्वं व्यज्यते । भूषणपदेन वाम्यादावचिरावस्थायित्वं ध्वन्यते । एवं च न मया वाम्यादि वहुकालं स्थाप्यम्, अपि तु विनयादि विधेयमिति 'वहुकालं मानः कर्तव्यः' इति वादिनीं काचिद्वक्ति ॥

भर्तृकृतातिशयलालनेऽपि कथं त्वं दुःखितैवासीति वादिनीं काचिद्वक्ति—

गुणमान्तरमगुणं वा लक्ष्मीर्गङ्गा च वेद हरिहरयोः ।
एका पदेऽपि रमते न वसति निहिता शिरस्यपरा ॥ २०४ ॥

**गुणमिति** । हरिहरयोरान्तरम् । एवं च वहिर्दर्शनायोग्यत्वं ध्वन्यते । गुणं दोषं वा लक्ष्मीर्गङ्गा च वेद । यत एका लक्ष्मीः पदेऽपि । एवं च बाह्यादराभावो द्योत्यते । रमते । अपरा गङ्गा शिरसि निहितापि । एवं च बाह्यादरो द्योत्यते । न तिष्ठति । एवं च या यत्संगतिशालिनी सैव तद्गुणदोषं विजानाति, नान्या कापीति ध्वन्यते ॥

चिरप्रत्यागतं पुनर्विदेशं गन्तुकामं नायकं काचिद्वक्ति—

गत्वा जीवितसंशयमभ्यस्तः सोढुमतिचिराद्विरहः ।
अकरुण पुनरपि दित्ससि सुरतदुरभ्यासमस्माकम् ॥ २०५ ॥

**गत्वेति** । जीवितसंदेहं प्राप्यातिचिरकालेन विरहः सोढुमभ्यस्तः । हे अकरुण करुणाशून्य । एवं च पूर्वमपि करुणाभावो द्योत्यते । अस्माकं सुरतस्य दुरभ्यासं पुनरपि दित्ससि दातुमिच्छसि । एवं चातःपरं त्वद्विदेशगमनेऽस्माकं प्राणपरित्याग एव भविष्यतीति व्यज्यते ॥

कश्चित्कस्याश्चिद्वार्तां वक्ति—

गोत्रस्खलितप्रश्नेऽप्युत्तरमतिशीलशीतलं दत्त्वा ।
निःस्वस्य मोघरूपे स्ववपुषि निहितं तया चक्षुः ॥ २०६ ॥

**गोत्रेति** । गोत्रस्खलितेन प्रश्नस्तस्मिन्नपि । एवं चावश्यक्रोधजननयोग्यत्वं

द्योत्यते। अत्यन्तस्वभावशीतलमुत्तरं दत्त्वा। निष्फलं रूपं यस्य तस्मिन्। कान्तचित्तवश्यतासंपादनसामर्थ्याभावादिति भावः। स्वीयदेहे निःश्वस्य दुःखोद्रेकादिति भावः। तया नेत्रं निहितम्। विद्यमानमपीदं रूपादि किमिति न नायकवश्यतासंपादकमिति धियेति भावः॥

काचित्कांचिदन्योक्त्या वक्ति—

गन्धग्राहिणि शालोन्मीलितनिर्यासनिहितनिखिलाङ्गि।
उपभुक्तमुक्तभूरुहशतेऽधुना भ्रमरि न भ्रमसि॥ २०७॥

**गन्धेति**। आमोदग्राहिणि। एवं च लोलुपत्वचाञ्चल्ये व्यज्येते। शालस्य वृक्षविशेषस्योन्मीलन्यो निर्यासस्तत्र निहितसर्वाङ्गि। उन्मीलत्पदेन नवीनदर्शननायकदर्शितातिशयितप्रेमशालिनी त्वमिति द्योत्यते। उपभुक्तमुक्तं वृक्षशतं यया तत्संबुद्धिः। एवं चैकस्यापि न संगतिस्त्वया निर्वाहितेति ध्वन्यते। भूरुहपदेनाल्पवयस्कसंगतिशालित्वम्, तेन चातिनीचगुणवत्त्वं ध्वन्यते। भ्रमरि, अधुना न भ्रमसि। एवं च त्वमेतादृशीति विज्ञाय सर्वैरुपेक्षितेति व्यज्यते॥

केनचिदूनसमतामापादितः कश्चिदन्योक्त्या वक्ति—

गुरुषु मिलितेषु शिरसा प्रणमसि लघुषून्नता समेषु समा।
उचितज्ञासि तुले किं तुलयसि गुञ्जाफलैः कनकम्॥२०८॥

**गुरुष्विति**। गुरुताशालिषु। पक्षे श्रेष्ठेषु। मिलितेषु संयुक्तेषु। पक्षे समागतेषु। शिरसाग्रभागेन। पक्षे मस्तकेन। प्रकर्षेण नमस्यवनता भवति। पक्षे नमस्करोषि। लघुषु न्यूनपरिमाणशालिषु। पक्षे नीचेषु। उन्नतोच्चा। पक्षे साभिमाना। समेषु समा। अत एव तुले उचितज्ञासि। कनकं गुञ्जाफलैस्तुल्यसीदं किम्। एवं चात्रैव तवोचितज्ञता कुत्र गतेति व्यज्यते॥

कश्चिद्गेहिनीसखीं वक्ति—

गेहिन्या ह्रियमाणं निरुध्यमानं नवोढया पुरतः।
मम नौकाद्वितयार्पितगुण इव हृदयं द्विधा भवति॥ २०९॥

**गेहिन्येति**। गेहिन्या प्रौढया ह्रियमाणम्। न तु हृतमिति भावः। नवोढया पुरतो निरुध्यमानम्। न तु निरुद्धम्। मम नौकाद्वितयं विपरीतगामि तत्संबद्धगुण इव हृदयं द्विप्रकारं भवति। नौकासमताप्रतिपादनेनोभयत्र रससंब-

न्धित्वं ध्वन्यते । एवं चोभयत्र समप्रीतिरहमस्मीति व्यज्यते । 'पद इव' इति क्वचित्पाठः ॥

एकत्रैव गुणे दृढा परिचितिरुचिता, न तु सर्वत्र यथाकथंचिदिति कश्चिद्वक्ति—

गुण आकर्षणयोग्यो धनुष इवैकोऽपि लक्षलाभाय ।
लूतातन्तुभिरिव किं गुणैर्विमर्दासहैर्बहुभिः ॥ २१० ॥

**गुण इति** । आकर्षणाय योग्यः । विचारक्षम इत्यर्थः । पक्षे यथाश्रुतम् । एवं च दृढत्वं ध्वन्यते । गुणो धनुष इवैकोऽपि लक्षसंख्याकधनलाभाय । पक्षे वेध्यलाभाय । विमर्दासहैर्विचारासहैः । पक्ष आकर्षणासहैः । लूता कीटविशेषस्तत्तन्तुभिरिव बहुभिर्गुणैः किम् । न किंचित्फलमित्यर्थः ॥

नायिकासक्तिं नायके दूती वक्ति—

गायति गीते शंसति वंशे वादयति सा विपञ्चीषु ।
पाठयति पञ्जरशुकांस्तव संवादाक्षरं बाल ॥ २११ ॥

**गायतीति** । विपञ्चीषु, पञ्जरशुकानिति च बहुवचनम् । वादितस्य पुनर्वादनेन पाठितस्य पुनः पाठनेन संवादाक्षरे प्रेमातिशयो द्योत्यते । एवं च त्वत्संवादैकाक्षरमपि तस्याः प्राणप्रियमित्यासक्तिविशेषो व्यज्यते ॥

अत्र क्षुद्रस्यापि प्राप्तिः सौम्यतया, न गर्वेण महत इति कश्चिदन्योक्त्या वक्ति—

गणयति न मधुव्ययमयमविरतमापिबतु मधुकरः कुमुदम् ।
सौभाग्यमानवान्परमसूयति द्युमणये चन्द्रः ॥ २१२ ॥

**गणयतीति** । मधुकरः कुमुदमापिबतु । सौभाग्यमानवानयं चन्द्रो मधुव्ययं न गणयति । परं द्युमणये सूर्यायासूयति । एवं च महतः सूर्यस्य न कुमुदोपभोगस्तत्र चन्द्रस्य न कार्पण्यं हेतुर्यतो मधुकरस्योपभोगः । किं तु सूर्यगर्व एव यथा तथात्र न गर्वेण प्राप्तिरिति ध्वन्यते ॥

सखी नायिकां वक्ति—

गुणविधृता सखि तिष्ठसि तथैव देहेन किं तु हृदयं ते ।
हृतममुना मालायाः समीरणेनेव सौरभ्यम् ॥ २१३ ॥

**गुणेति** । सखि, गुणैर्लोकवादभीत्यादिभिर्विधृता । पक्षे दोरकैः । देहेन तथैव यथापूर्वं तिष्ठसि । किं तु समीरणेन मालायाः सौरभ्यमिवामुना नायकेन ते हृदयं

हृतम् । एवं च न तवापराध इति भावः । एवं च नास्मल्लज्जा कार्येति द्योत्यते । एवं च यद्यपि त्वं यथास्थिता दृश्यसे तथापि त्वच्चित्तं मान्मथावस्थादुस्थं वृत्तमित्यावेद्यते । तेन चास्माकं प्रति गोपनमनर्थकमिति । यद्वा वलद्देहेन कृतापि धृतिरनर्थकैव, अतो यतस्व तन्मिलनायेति व्यज्यते ॥

कश्चित्सखायं वक्ति—

गुरुसदने नेदीयसि चरणगते मयि च मूकयापि तया ।
नूपुरमपास्य पदयोः किं न प्रियमीरितं प्रियया ॥ २१४ ॥

**गुर्विति** । नेदीयसि निकटे सति । मयि चरणगते प्रणमति सति । एवं च नायिकायां मानवत्त्वं द्योत्यते । मूकयापि । गुरुभीत्येति भावः । तया चरणयोः । नूपुरमित्येकत्वमविवक्षितम् । अपास्य प्रियया । एवं चैतादृशविधानमुचितमेवेति ध्वन्यते । किं न प्रियमीरितम् । अपि तु सर्वमीरितम् । एवं च शब्दजनकनूपुरत्यागेन रत्यनुमतिर्दत्तेति द्योत्यते । यद्वा निःशब्दपदसंचारेण त्वयात्र रात्रावागन्तव्यमिति ध्वन्यते । अथवा निष्ठुरवचनमूलभूतो मानः परित्यक्तो मयेति व्यज्यते । प्रस्थितैवाहं त्वमग्रे गच्छेति वा ॥

किमिति दरिद्रेऽनुरक्तासीति वादिनीं काचिद्वक्ति—

ग्रन्थिलतया किमिक्षो किमपभ्रंशेन भवति गीतस्य ।
किमनार्जवेन शशिनः किं दारिद्र्येण दयितस्य ॥ २१५ ॥

**ग्रन्थिलतयेति** । अनार्जवेन कौटिल्येन । एवं च रसनाश्रवणनयनाद्येकैकसुखप्रदातृतयेक्ष्वादीनां ग्रन्थिलत्वादयो दोषा न गण्यन्ते । किं पुनः सर्वाङ्गीणानन्दप्रदस्य दयितस्य दारिद्र्यैकदोषो न गण्यत इति । तद्गणनाकारिण्योऽतिभ्रान्ता इति ध्वन्यते । यद्वा ग्रन्थ्यादिसत्त्वेऽपीक्ष्वादे रसप्रदत्वं नापैति यथा तथा दारिद्र्येऽपि न सुखप्रदत्वमपैतीति व्यज्यते ॥

कश्चित्सखायं वक्ति—

गेहिन्या चिकुरग्रहसमयससीत्कारमीलितदृशापि ।
बालाकपोलपुलकं विलोक्य निहतोऽस्मि शिरसि पदा ॥२१६॥

**गेहिन्येति** । केशग्रहस्य । चुम्बनार्थमिति भावः । समये ससीत्कारं मीलितदृशापि गेहिन्या बालायाः कपोलसंबन्धि पुलकम् । चुम्बनजन्यमिति भावः ।

विलोक्य शिरसि चरणेन निहतोऽस्मि । कथमीदृशावसरेऽप्येतादृशमकारि त्वयेति दोषख्यापनेनेति भावः ॥

नायकान्तरातिशयितरतातिवाहितयामिनीं प्रातस्तद्दत्तनखक्षतावलोकनकृतक्रोधां नायिकां सखी वक्ति—

गुरुपक्ष्म जागरारुणघूर्णत्तारं कथंचिदपि वलते ।
नयनमिदं स्फुटनखपदनिवेशकृतकोपकुटिलभ्रु ॥ २१७ ॥

**गुर्विति** । स्फुटनखपदनिवेशनेन । नायकदत्तेनेति भावः । कृतो यः कोपः । लोकज्ञानभिया । तेन कुटिलभ्रुकुटि । गुरुपक्ष्म । सालसत्वादिति भावः । जागरणेन रक्तं तेनैव घूर्णत्तारमिदं तव नेत्रं महता क्लेशेनापि वलते परिवर्तते । नखपदनिवेश इति भावः । एवं चैकनखक्षतविलोकनेन क्रुध्यसि, परमन्यानि नखक्षतानि नावलोकयसि । रात्रिजागरबाहुल्यालसनेत्रतयेति भावः । एवं च तदानीं न कापि भीतिः कृता, इदानीं तत्करणमनर्थकमिति व्यज्यते । यद्वा प्रकटनखक्षतदर्शनेन कोपः क्रियते । अप्रकटानि च बहूनि सन्ति । तद्दर्शनं च ते सालसनेत्रतया न भावीति द्योत्यते । 'निवेशने' इति पाठे स्फुटनखपदस्य निवेशने दाने कोपेन कुटिलभ्रु । स्फुटपदेन दृढत्वमावेद्यते । क्वचित् 'दृढ' इत्येव पाठः । गुरुपक्ष्म । सालसत्वादिति भावः । जागरारुणघूर्णत्तारमिदं नयनम् । 'तव' इति पदानुपादानं नयने नायिकाविधेयत्वं ध्वन्यते । कथंचिद्वलते । एवं च गमनकालीननखक्षतदानेऽपि केवलं भ्रुकुटिकौटिल्यमेव करोषि, एवं तु रात्र्यतिशयितरतनिःसहतया नेत्रव्यापारमपि कर्तुं न शक्नोषि । तत्र का वार्तोत्थाय करग्रहादेरिति भाव इति नायिकासखीवाक्यमिदम् । केचित् 'स्वनायकेन सह क्रीडातिवाहितरजनीं स्फुटतरनखक्षतदर्शनजातलज्जावशादुत्पन्नक्रोधां नायिकां सखी वक्ति' इत्याहुः ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता गकारव्रज्या ।

---

घकारव्रज्या ।

नायिकासखी नायकं वक्ति—

घटितजघनं निपीडितपीनोरु न्यस्तनिखिलकुचभारम् ।
आलिङ्गन्त्यपि बाला वदत्यसौ मुञ्च मुञ्चेति ॥ २१८ ॥

**घटितेति** । घटितजघनमित्यादिना रतेच्छावत्त्वमावेद्यते । आलिङ्गनकारिण्य-

प्यसौ बाला तरुणी मुञ्च मुञ्चेति वक्ति। एवं चैतस्या मुञ्च मुञ्चेति वचनं मिथ्येति विज्ञाय वर्तितव्यं त्वयेति द्योत्यते। 'आलिङ्गति' इति पाठ आलिङ्गति वदत्यपीति योजनायां वचनसमय आलिङ्गनसत्त्वेन विरुद्धकार्यकारितया रतिनिर्भरत्वं ध्वन्यत इत्यर्थः। नायकवचनं वा वयस्यं प्रति॥

अदृष्टवशादेव लक्ष्मीः स्थिरा भवति, न यत्नेनेति कश्चिद्वक्ति—

घटितपलाशकपाटं निशि निशि सुखिनो हि शेरते पद्माः।
उज्जागरेण कैरव कति शक्या रक्षितुं लक्ष्मीः॥ २१९॥

**घटितेति**। घटितं पत्ररूपं कपाटं यत्र। 'पत्रं पलाशं छदनम्' इत्यमरः। निशि निशि। एवं च सर्वदोद्यमशून्यत्वम्। सुखवन्तः पद्माः। 'वा पुंसि पद्मम्' इत्यमरः। स्वपन्ति। पद्मानां सूर्यविकासित्वाद्रात्रौ संकोच इति भावः। हे कैरव, उत्कृष्टजागरेण लक्ष्मीः कियद्रक्षितुं शक्या। चन्द्रविकासित्वात्कैरवाणामिति भावः। एवं च निरुद्यमानामपि लक्ष्मीर्जायते, सोद्यमानामपि नश्यतीति दैवमेव संपद्रक्षणे क्षममिति ध्वन्यते। यद्वा या ह्यङ्गनान्यत्र गन्तुकामा सा न केनापि रक्षितुं शक्येति कश्चिद्वक्ति। पलाशवत्कपाटम्। एवं च दूरीकरणार्हत्वं व्यज्यते। पद्माः। उज्जागरेण। उत्कृष्टरक्षणेनेति यावत्। लक्ष्मीपदेन चञ्चलस्वाभाव्यमभिव्यज्यत इत्यर्थः॥

कश्चित्प्रातःकालं वर्णयति—

घूर्णन्ति विप्रलब्धाः स्नेहापायात्प्रदीपकलिकाश्च।
प्रातः प्रस्थितपान्थस्त्रीहृदयं स्फुटति कमलं च॥ २२०॥

**घूर्णन्तीति**। विप्रलब्धा वियोगिन्यः। यद्वा संकेतनिकेतने प्रियतमप्राप्तिसमाकुलहृदया विप्रलब्धाः। प्रदीपकलिकाश्च। स्नेहस्य प्रीतेस्तैलस्य च नाशाद्घूर्णन्ति। मनोरथादिभिरधुना समायास्यतीति धिया च संपूर्णयामिनीजागरादिति भावः। विनश्वरा भवन्ति च। प्रस्थितो न तु गतो यो पान्थस्तत्कान्ताहृदयं कमलं च प्रातः स्फुटति द्वेधा भवति। दुःखोद्रेकादिति भावः। विकसति च। यद्वा जातोऽयं प्रातःकालः, अत इतोऽपसरणं सम्यगिति सखी नायकं वक्तीत्यर्थः॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता घकारव्रज्या।

---

चकारव्रज्या ।

काचित्कांचिद्वक्ति—

चपलस्य पलितलाञ्छितचिकुरं दयितस्य मौलिमवलोक्य ।
खेदोचितेऽपि समये संमदमेवाददे गृहिणी ॥ २२१ ॥

**चपलस्येति** । चपलस्य । एवं च पराङ्गनालम्पटत्वं व्यज्यते । दयितस्य । एवं च प्रीतियोग्यत्वं ध्वन्यते । मौलिं जराचिह्नितकेशमवलोक्य खेदार्हेऽपि । स्वस्याप्यसमीचीनत्वादिति भावः । समय आनन्दमेव गृह्णाति । स्वस्याप्यकार्यसंतोषेण नायके सामान्याङ्गनालम्पटत्वेन द्वेपातिशयो व्यज्यते ॥

नायिकां नायको वक्ति—

चण्डि प्रसारितेन स्पृशन्भुजेनापि कोपनां भवतीम् ।
तृप्यामि पङ्किलामिव पिबन्नदीं नलिननालेन ॥ २२२ ॥

**चण्डीति** । हे चण्डि, प्रसारितेन । एवं च निकटवर्तित्वाभावो व्यज्यते । भुजेनापि । नीरसेनेति भावः । कोपनां भवतीं स्पृशन् । यद्वा अपिरत्रान्वेति । एवं च तृप्यजनकत्वं ध्वन्यते । तृप्तिं प्राप्नोमि । पङ्किलां नदीं नलिननालेन **पिबन्निव** । नलिननालेन पाने स्वच्छजलागमनात्तृप्तिः । एवं च मम दुःखाजनकत्वेन त्वन्मानधारणमनर्थकम्, अतस्त्यज मानमिति द्योत्यते । भुजे नालसमताप्रतिपादनेन कोमलत्वपाण्डुरत्वसूक्ष्मत्वशीतलत्वानि व्यज्यन्ते । तैश्चाश्लेयस्पर्शत्वविरहक्षीणत्वसंतप्तत्वसुखदत्वानि ॥

खण्डिता नायकं प्रातस्तनसमीरणाभेदेन वक्ति—

चपलभुजंगीभुक्तोज्झित शीतलगन्धवह निशि भ्रान्त ।
अपराशां पूरयितुं प्रत्यूषसदागते गच्छ ॥ २२३ ॥

**चपलेति** । प्रातःकालीन वायो । अथवा प्रातःकाले सदा निरन्तरमागतिरागमनं यस्य एतादृश । एवं च कियन्मया सोढव्यमिति व्यज्यते । चपला या भुजंग्यः सर्पिण्यस्ताभिर्भुक्त्वोज्झित । एवं च सविषत्वेन स्पर्शानर्हत्वं व्यज्यते । अथ च चपलाः । एवं च सर्वजनवेद्यचाञ्चल्यानां तव तदज्ञानेन मूर्खस्त्वमसीति व्यज्यते । भुजंग्यो वेश्यास्ताभिर्भुक्तोज्झित । एवं चोच्छिष्टरूपत्वेनास्पृश्यत्वं ध्वन्यते । शीतलसमीरण । अथ च शीतलं गन्धम् । भोगार्थं परिगृहीतमिति भावः । वहतीति । निशि रात्रौ भ्रमणशील । अथ च रात्रिभ्रान्तिमन् । एवं च रात्रौ तव पैशाच्यमेव जायत

इति व्यज्यते । अपरदिशम् । अथ चान्यस्या आशाम् । इच्छामित्यर्थः । पूरयितुं पूर्णां कर्तुम् । अथ च सफलां कर्तुम् । गच्छ । एवं चैतादृशस्य तव न ममाशेति व्यज्यते ॥

काचित्कस्याश्चिदवस्थां वक्ति—

चिरपथिकद्राघिममिलदलकलताशैवलावलिग्रथिता ।
करतोयेव मृगाक्ष्या दृष्टिरिदानीं सदानीरा ॥ २२४ ॥

**चिरपथिकेति** । चिरकालीनो यः पथिकस्तस्य दैर्घ्येण । अतिविलम्बेनेति यावत् । मिलन्त्यः । संस्काराभावादिति भावः । याः केशरूपलतास्तद्रूपा या शैवलपङ्क्तिस्तया । पक्षेऽलकलतावदित्यर्थः । ग्रथिता युक्तेति यावत् । अत्र लतापदं परस्परसंलग्नतामावेदयति । करतोयेव नदीविशेष इव मृगाक्ष्या दृष्टिरिदानीम् । एवं च पूर्वसमयापेक्षया दुःखवत्त्वातिशयो ध्वन्यते । सदानीरा निरन्तराश्रुपूर्णा । पक्षे सदानीरेति करतोयानाम । 'करतोया सदानीरा' इत्यमरः । यद्वा नायिकासखी नायकं वक्ति । चिरपथिकेति संबुद्धिः । द्राघिम्णा दैर्घ्येण मिलन्त्यः संबन्धवत्यः । अलकलता इत्यादि प्राग्वत् ॥

नायको नायिकां वक्ति—

चण्डि दरचपलचेलव्यक्तोरुविलोकनैकरसिकेन ।
धूलिभयादपि न मया चरणहतौ कुञ्चितं चक्षुः ॥ २२५ ॥

**चण्डीति** । हे चण्डि । एवं च स्वस्यानपराधित्वं ध्वन्यते । ईषच्चञ्चलचेलेन प्रकटोर्वोर्विलोकनं तदेकरसिकेन मया त्वत्कृतचरणहनने रेणुत्रासादपि । एवं च न ताडनत्रास इति भावः । चक्षुर्न संकोचितम् । एवं चाहं त्वय्यत्यन्तासक्तः, अतो मानं परित्यज्य सुखयितव्योऽहमिति ध्वन्यते ॥

कश्चित्कंचिद्वक्ति—

चलकुण्डलचलदलकस्खलदुरसिजवसनसज्जदूरुयुगम् ।
जघनभरक्लमकूणितनयनमिदं हरति गतमस्याः ॥ २२६ ॥

**चलेति** । चलकुण्डलम्, चलदलकम्, किंचिद्दूरीभूतस्तनवसनम्, संघट्टवदूरुयुग्मम्, जघनभारश्रमसंकुचितनेत्रमस्या इदं गतं गमनं हरति । मन्मन इति भावः । जातिवर्णनमेतत् । 'जातिरप्राणिनाम्' इत्यनेन चलकुण्डलेत्यादावेकवद्भावः । अस्या इदम् । सर्वमित्यर्थः । गतं गमनम् । ममेति भावः । हरति । इत्यपि योजना ॥

भाग्यवत्संनिहितानुपकारिजनसेवाकारिणं कश्चिदन्योक्त्या वक्ति—

चरणैः परागसैकतमफलमिदं लिखसि मधुप केतक्याः।
इह वसति कान्तिसारे नान्तःसलिलापि मधुसिन्धुः॥२२७॥

**चरणैरिति**। हे मधुप। एवं च विवेकविधुरत्वं व्यज्यते। पदैः। बहुवचनेनोद्योगशालित्वं ध्वन्यते। केतक्या इदं परागरूपसैकतम्। सैकतपदेन सलिलाशायोग्यत्वं व्यज्यते। व्यर्थं लिखसि। व्यर्थत्वमेवाह—कान्तिरेव सारो यत्र। इह परागसैकते नान्तःसलिलापि। अपिना बहिःसलिलव्यवच्छेदः। मकरन्दनदी तिष्ठति। एवं च स्वरूपमात्रशालिष्वेतेषु न दयालेशः, अतोऽत्र नाशा त्वया विधेयेति ध्वन्यते। यद्वा कस्याश्चिन्नायिकायाः संगमाशया तत्संनिहितप्रदेशे यातायातकारिणं काचिदन्योक्त्या वक्ति। एवं चैतस्याः स्वान्तरेऽपि न मद इति व्यज्यते। तेन चेयं सतीति। तेनात्र तवानर्थकः श्रम इति॥

नायिकाङ्गीननखक्षतकिणदर्शनसंजातसंशयं नायकं नायिकासखी वक्ति—

चिरकालपथिक शङ्कातरङ्गिताक्षः किमीक्षसे मुग्ध।
त्वन्निस्त्रिंशाश्लेषव्रणकिणराजीयमेतस्याः॥ २२८॥

**चिरेति**। हे चिरकालीनपथिक। एवं च विरहातिशयादुन्मादान्निस्त्रिंशालिङ्गनकारित्वौचित्यं ध्वन्यते। मुग्ध सुन्दर। अथ च मूढ। संशयेन। व्रणाः किंजन्या एवंरूपेण। तरङ्गितं कृतं दूरव्यापारवत्कृतमक्षि येन सः। किमीक्षसे। एतस्यास्त्वदीयो यस्त्रिंशदङ्गुल्यधिकः खड्गस्तदालिङ्गनव्रणकिणपङ्क्तिरियम्। एवं च क्षतादिवेदनामविचार्याप्यनया त्वदीयत्वेन प्रीतिपात्रत्वत्खड्गालिङ्गनेन समतिवाहितोऽतितरां समयः। अतो नैतस्यामन्यथा संभावनीयं बहुतरदिवसपरदेशावस्थितिरूपापराधशालिना त्वयेति ध्वन्यते। एवं चैतस्या यथा त्वयि प्रेमातिशयस्तथा न कस्यांश्चित्कस्मिंश्चिदिति व्यज्यते॥

स्वाविवेकाच्चाञ्चल्यदोषशालिनीं निजनायिकां ताडयन्तं कंचन तत्प्रतिवेशी तदङ्गनालम्पटतया तं प्रति कलहं कर्तुमुद्यतोऽपि निरुद्ध इति काचिदन्योक्त्या वक्ति—

चपलां यथा मदान्धश्छायामयमात्मनः करी हन्ति।
आस्फालयति करं प्रतिगजस्तथायं पुरो रुद्धः॥ २२९॥

**चपलामिति**। मदान्धः। एवं चानुचितकारित्वं व्यज्यते। अयं करी।

आत्मनश्चपलां छायां यथा हन्ति, तथा रुद्धः प्रतिगजः करमास्फालयति। एवं च जनलज्जयैव न किंचिद्वक्तीति व्यज्यते॥

कश्चित्सखायं वक्ति—

चुम्बनलोलुपमदधरहृतकाश्मीरं स्मरन्न तृप्यामि।
हृदयद्विरदालानस्तम्भं तस्यास्तदूरुयुगम्॥ २३०॥

**चुम्बनेति**। चुम्वनसतृष्णस्य ममाधरेण हृतं केसरं यस्याः। कामशास्त्रे तत्रापि चुम्वनविधानात्। चुम्वनलोलुपो यो मदधारीति गजपक्षेऽपि योज्यम्। हृदयरूपगजवन्धनस्तम्भम्। एवं च चित्तं ततोऽन्यत्र न गच्छतीति भावः। तस्यास्तदूरुयुगं स्मरन्न तृप्यामि॥

काचित्कांचिद्वक्ति—

चिकुरविसारणतिर्यङ्नतकण्ठी विमुखवृत्तिरपि बाला।
त्वामियमङ्गुलिकल्पितकचावकाशा विलोकयति॥ २३१॥

**चिकुरेति**। चिकुराणां विसारणं परिष्करणं तेन तिर्यङ्नतः कण्ठो यस्याः। विमुखवृत्तिरपीयं बालाङ्गुलीभिः कृतः केशावकाशो यया त्वां विलोकयति। एवं च त्वयापीयं विलोकनादिनानुग्राह्येति द्योत्यते॥

सखी नायिकां वक्ति—

चुम्बनहृताञ्जनार्धं स्फुटजागररागमीक्षणं क्षिपसि।
किमुषसि वियोगकातरमसमेषुरिवार्धनाराचम्॥ २३२॥

**चुम्वनेति**। चुम्वनेन हृतमञ्जनार्धं यस्याः। कामशास्त्रे नेत्रप्रान्तचुम्वनविधानादिति भावः। प्रकटो जागरेण रागो यस्य तत्। वियोगाय। भाविन इति भावः। मीतमीक्षणं प्रातः किमिति क्षिपसि। एवं च भीरुतातिशयो व्यज्यते। मदनोऽर्धनाराचमिव। एवं च निःसारणानर्हत्वेन नायके गमनसामर्थ्याभावो द्योत्यते। एवं च नायके नायिकासक्तिविशेषो ध्वन्यते॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता चकारव्रज्या।

---

छकारव्रज्या ।

सखी कुपितनायिकां वक्ति—

छायाग्राही चन्द्रः कूटत्वं सततमम्बुज व्रजति ।
हित्वोभयं सभायां स्तौति तवैवाननं लोकः ॥ २३३ ॥

**छायाग्राहीति** । चन्द्रस्य सकलङ्कतया कमलस्य नित्यसंकोचितयोभयपरित्यागेन नित्यनिरतिशयोल्लासवत्कलङ्कहीनतया लोके त्वदाननस्तुतिरिति भावः । एवं च निरुपमानं त्वदाननमिति व्यज्यते । तेन च कोपादिमालिन्यं न विधेयमिति । अत्र कूटत्वमवसादः । संकोच इति यावत् । अथवा प्रमोदाभाव एव कूटत्वम् । 'कूट अप्रमोदावसादनयोः' इति चुरादिः । 'कूटं कुप्रदाप्रमुदोः' इति कल्पद्रुमः । यद्वा कूटत्वं परितापभावम् । संकोचमिति यावत् । 'कूट परितापे' ॥

नायिका सखीं वक्ति—

छायामात्रं पश्यन्नधोमुखोऽप्युद्धतेन धैर्येण ।
तुदति मम हृदयमिषुणा राधाचक्रं किरीटीव ॥ २३४ ॥

**छायामात्रमिति** । छायामात्रं पश्यन् । एवं च लोकभीतिरावेद्यते । अधोमुखोऽपि । एवं च तरलत्वाभावो व्यज्यते । उद्धतेन धैर्येण मम हृदयं तुदति । अर्जुनो बाणेन राधाचक्रमिव । पाञ्चालीस्वयंवरेऽर्जुनेनाधस्तनध्वजाग्रस्थितचपलमीनच्छायामात्रमालोकयता मीननयनं बाणेन हतमिति पुराणप्रसिद्धिः । एवं च गुरुसमक्षं छायामात्रमालोकयन्मल्लज्जारक्षणमकरोदित्यासक्तिविशेषो ध्वन्यते । अथवा यद्यप्ययं न साक्षादवलोकयति तथापि मन्मनोपहृतमनेनेति व्यज्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता छकारव्रज्या ।

---

जकारव्रज्या ।

प्रस्थानावसरे नायको नायिकां वक्ति—

जलबिन्दवः कतिपये नयनाद्गमनोद्यमे तव स्खलिताः ।
कान्ते मम गन्तव्या भूरेतैरेव पिच्छिलिता ॥ २३५ ॥

**जलेति** । गमनोद्यमे । ममेति भावः । तव नयनात्किंचित्संख्याका जलबिन्दवः स्खलिताः, न तु निर्गताः । मङ्गलाभावशङ्कयेति भावः । एवं च निबिडपक्ष्मशालित्वं नेत्रे द्योत्यते । कान्ते मनोज्ञे ममैतैरेवाश्रुबिन्दुभिरेव पिच्छिला । एवं च

चरणावस्थित्यनर्हत्वं द्योत्यते। भूर्गन्तव्या। गन्तव्येत्यनेनावश्यकत्वं ध्वन्यते। एवं च त्वदपेक्षया ममातिशयितदुःखमित्यावेद्यते॥

नायको वयस्यं वक्ति—

जृम्भोत्तम्भितदोर्युगयन्त्रितताटङ्कपीडितकपोलम्।
तस्याः स्मरामि जलकणलुलिताञ्जनमलसदृष्टि मुखम्॥२३६॥

**जृम्भेति**। जृम्भयोर्ध्वीकृतहस्तद्वयसंघट्टितताटङ्कपीडितकपोलम्। जलकणैः। नेत्रसंबन्धिभिरिति भावः। लुलितं विस्तृतमञ्जनं यस्य। अलसा दृष्टिर्यस्य तस्या मुखं स्मरामि। जातिवर्णनमेतत्॥

काचित्कांचिद्वक्ति—

जागरयित्वा पुरुषं परं वने सर्वतो मुखं हरसि।
अयि शरदनुरूपं तव शीलमिदं जातिशालिन्याः॥ २३७॥

**जागरेति**। वने कानने। पक्षे जले। शयितमिति भावः। परमन्यम्। पक्षे उत्कृष्टम्। पुरुषं जागरयित्वा सर्वतो मुखं वदनं हरसि। कमपि लज्जया न संमुखमवलोकयसीत्यर्थः। पक्षे जलं हरसि। वर्षासमयस्य समाप्तत्वादिति भावः। अयि शरत्तुल्यं शीलं जातिशालिन्या इति साकूतोक्तिः। पक्षे मालतीशालिन्याः। तवेदं शीलम्। एवं च किमर्थमत्र मिथ्या लज्जां नाटयसीति व्यज्यते। यद्वान्योक्त्या काचिद्वक्ति। अयि शरज्जातिशालिन्या इदं शीलं तवानुरूपं नान्यस्या इति भावः। तदेवाह—जागरयित्वेत्यादि॥

कश्चित्सखायं वक्ति—

जीवामि लङ्घितावधिदिनेति लज्जावशेन गेहिन्या।
मयि निह्नुतोऽपि बाष्पैरसंवरैर्व्यञ्जितो मानः॥ २३८॥

**जीवामीति**। लङ्घितमवधिदिनं यया जीवामीति लज्जावशेन। वशपदेन स्वातन्त्र्याभावो व्यज्यते। गेहिन्या गोपितोऽपि मानः संवर्तुमशक्यैर्बाष्पैर्ज्ञापितः। एवं च मानसंगोपनमसंभवीति व्यज्यते॥

काचित्कंचिदन्योक्त्या वक्ति—

जाल्मो गुरुः सुधृष्टो वामेतरचरणभेद उपदेशः।
ख्यातिर्गुणधवल इति भ्रमसि सुखं वृषभ रथ्यासु॥ २३९॥

**जाल्म इति**। सुधृष्टो जाल्मः। 'सुघृष्टः' इति पाठ उपदेशविशेषणमेतत्।

असमीक्ष्यकारी गुरुरुपदेष्टा । एवं च तवोपदेशकोऽपि न समीचीन इति व्यज्यते । वामं सव्यम् । 'वामं शरीरं सव्यं स्यात्' इत्यमरः । इतरो दक्षिणस्तयोर्भेदः, अयं वामोऽयं दक्षिण इति स एवोपदेशो ज्ञानम् । नान्यदिति भावः । यद्वा दक्षिणेन ताडनं तदेव तवोपदेशकमित्यर्थः । वृषभ रथ्यासु सुखं भ्रमसि । एवं च यथा शिक्षितवृषभो रथ्यासु भ्रमति तथा त्वमिति व्यज्यते । तेन च नास्मद्गृहागमनयोग्यस्त्वमसीति द्योत्यते ॥

वैद्यासक्ता काचिद्वक्ति—

ज्वर वीतौषधबाधस्तिष्ठ सुखं दत्तमङ्गमखिलं ते ।
असुलभलोकाकर्षणपाषाण सखे न मोक्ष्यसि माम् ॥ २४० ॥

**ज्वरेति** । हे ज्वर, वीतापगतौषधिबाधा यस्यैतादृशस्त्वं सुखं तिष्ठ । समग्रमङ्गं तव दत्तम् । सर्वाङ्गमभिव्याप्य तिष्ठेति भावः । दुर्लभो यो वैद्यरूपो लोकस्तस्याकर्षणपाषाण । 'चुम्बकः' इति लोके प्रसिद्धिः । एवं च नायके स्वत आगमनशून्यत्वमावेद्यते । सखे, मां न मोक्ष्यसि । मा मुञ्चेत्यर्थः । एवं च त्वयि विद्यमाने तदागमनं नान्यथेति द्योत्यते ॥

एतत्संगत्या स्वनिर्वाहो मया विधेय इति बुद्ध्या कृतनायकसङ्गां नायिकामप्रतिष्ठादिभीत्या परित्यक्तुमुद्यतं नायकं सखा समुपदिशति—

जीवनहेतोर्मिलिता मुञ्चति करकर्षणेन न खलु त्वाम् ।
नौरिव निम्नं सुन्दर मुग्धा तद्विरसतां मा गाः ॥ २४१ ॥

**जीवनहेतोरिति** । जीविकार्थं मिलिता करकर्षणेन परित्यागेन खलु त्वां न मुञ्चति । निम्नं नौरिव तद्विरसतां मा गाः । एवं च त्वयैतत्त्यागे क्रियमाणेऽपि नेयं त्वां त्यक्ष्यति परं त्वेतत्करणे लौकिकमात्रं भावीति व्यज्यते । यद्वा नायिकासखी नायकं वक्ति—जीवनेति । जीवनाद्धेतोर्मिलिता जीवनार्थमागता । पक्षे जलहेतुना समागता । मुग्धा सुन्दरी । एवं च स्पृहणीयत्वं व्यज्यते करस्य हस्तस्याकर्षणेन । पक्षे करेण कर्षणं तेन । त्वां न खलु मुञ्चति । नौरिव निम्नम् । पक्षे नीचम् । अत एव मूढार्थकं मुग्धेति पदमर्थवत् । हे सुन्दर तद्वैरस्यम् । पक्षे जलाभाववत्त्वं मा गाः । एवं च नीचमपि त्वामियं विरहभीता न त्यजतीति ध्वन्यते ॥

काचित्कंचिद्वक्ति—

जघनेन चापलं तव वितन्वतेयं तनूकृतापि तनुः ।
शाणेनेव क्षीणा स्मरासिपुत्री मनो विशति ॥ २४२ ॥

**जघनेनेति** । चाञ्चल्यं विस्तारयता जघनेन । अर्थादन्याङ्गनानाम् । क्षीणीकृतापि तव तनुः । शाणेन क्षीणा । एवं च तीक्ष्णत्वं ध्वन्यते । स्मरस्य च्छुरिकेव मनो विशति । एवं च विपरीतसुरतातिशयक्षीणमपि तव शरीरं मन्मनोमोहजनकमिति व्यज्यते । एवं चैतादृशं दृष्ट्वापि न मया मानः क्रियत इति स्वस्मिन्साधुत्वमावेदयति ॥

कश्चित्कांचिद्वक्ति—

ज्योत्स्नाभिसारसमुचितवेषे व्याकोशमल्लिकोत्तंसे ।
विशसि मनो निशितेव स्मरस्य कुमुदत्सरुच्छुरिका ॥२४३॥

**ज्योत्स्नेति** । ज्योत्स्नाभिसारे समुचितो वेषो यस्यास्तत्संबुद्धिः । अत एव विकसितमल्लिकोत्तंसे । निशिता स्मरस्य कुमुदरूपा त्सरुर्मुष्टिर्यस्याः । 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यमरः । एतादृशी छुरिकेव मनो विशसि । एवं चैतादृशवेषशालिनी त्वं मन्मनोमोहजनिकेति द्योत्यते ॥

कश्चित्कंचिदुपदिशति—

जड सुखयसि परतरुणीं गृहिणीं कारयसि केवलं सेवाम् ।
आलिङ्गति दिशमिन्दुः स्वां तु शिलां वारि वाहयति ॥२४४॥

**जडेति** । जड । एवं च कार्याकार्यविवेकवैधुर्यं ध्वन्यते । पक्षे जलमयत्वाज्जडत्वम् । परयुवतिम् । तरुणीपदेन साहजिकरूपशालित्वाभावो व्यज्यते । सुखयसि । स्वाङ्गनां केवलं सेवां कारयसि । अत्र दृष्टान्तमाह—चन्द्रो दिशम् । अन्यस्वामिकामिति भावः । आलिङ्गति । स्वशिलां जलं वाहयति । चन्द्रोदये चन्द्रोपलानां स्रवणं भवतीति लोकप्रसिद्धिः । एवं चैतादृशकार्यकरणेन कलङ्कादिभूषणमेव भावीति द्योत्यते । तेन नैतादृक्कर्तव्यमिति । यद्वा सिद्धानुवादोत्तरमुत्तरार्धम् । अत्र 'वह प्रापणे' इत्यस्य गत्यर्थकत्वेन प्राप्तद्विकर्मकत्वस्य 'नीवह्योर्न' इति निषेधाच्छिलस्येत्यपेक्षितम् ॥

कश्चित्कांचित्संकेतं वक्ति—

ज्योत्स्नागर्भितसैकतमध्यगतः स्फुरति यामुनः पूरः ।
दुग्धनिधौ नागाधिपतल्पतले सुप्त इव कृष्णः ॥ २४५ ॥

**ज्योत्स्नेति** । चन्द्रिकायां गर्भितम् । चन्द्रिकागर्भमध्ये स्थितमिति भावः । क्वचित् 'गर्वित' इति पाठः । यत्सैकतं तन्मध्यगतः । एवं च शरत्कालीनत्वं व्यज्यते । तेन च निश्चलत्वम् । यमुनासंबन्धी पूरः स्फुरति । अत्र दृष्टान्तमाह— दुग्धसमुद्रे शेषरूपतल्पे । तल्पपदेन समत्वमावेद्यते । सुप्तः कृष्ण इव । सर्वतो विद्यमानतयोज्ज्वलतया चन्द्रिकायां दुग्धोदधेः, लम्बतया श्वैत्याच्च सैकते शेषस्य, श्यामतया निश्चलतया च पूरे सुप्तकृष्णस्योपमानता । एवं च यमुनासैकततुल्यं नान्यस्थलमिति व्यज्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता जकारव्रज्या ।

---

झकारव्रज्या ।

नायको नायिकां वक्ति—

झंकृतकङ्कणपाणिक्षेपैः स्तम्भावलम्बनैर्मौनैः ।
शोभयसि शुष्करुदितैरपि सुन्दरि मन्दिरद्वारम् ॥ २४६ ॥

**झंकृतेति** । एवं चैतादृश्यवस्थितिरपि नवोढाया नायकसुखदेति व्यज्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता झकारव्रज्या ।

---

ढकारव्रज्या ।

नायकीयोन्माददौःशील्यमाकलय्य स्वयमपि दौःशील्यं विधातुकामां नायकां सखी वक्ति—

ढक्कामाहत्य मदं वितन्वते करिण इव चिरं पुरुषाः ।
स्त्रीणां करिणीनामिव मदः पुनः स्वकुलनाशाय ॥ २४७ ॥

**ढक्कामिति** । ढक्कां यशःपटहम् । 'स्याद्यशःपटहो ढक्का' इत्यमरः । आहत्य वादयित्वा करिण इव पुरुषा बहुकालं मदं वितन्वते । करिणीनामिव स्त्रीणां मदः

स्वकुलनाशाय। एवं च पुरुषाणां मदो यशसे, स्त्रीणां कुलकलङ्कायेति व्यज्यते। तेन च त्वयैतादृग्जनसि न विधेयमिति॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता ढकारव्रज्या।

---

तकारव्रज्या।

नायिकासखी नायकं वक्ति—

तां तापयन्ति मन्मथबाणास्त्वां प्रीणयन्ति बत सुभग।
तपनकरास्तपनशिलां ज्वलयन्ति विधुं मधुरयन्ति॥ २४८॥

**तामिति**। मदनबाणास्तां नायिकां तापयन्ति। त एव बाणा हे सुभग। दुःखदबाणानामपि सुखदत्वादिति भावः। त्वां तोषयन्ति। एवं च कथमन्यथैतादृशविलम्बकरणमिति व्यज्यते। नन्विदमसंभवीत्यत्र दृष्टान्तमाह—तपनकिरणास्तपनशिलां ज्वलयन्ति। तपनशिलासाम्येन स्वीयात्वप्रतिपादनेन तत्तुल्यत्वं नायिकायामावेद्यते। विधुं चन्द्रम्। एवं च चन्द्रसाम्येन संतापापनोदकत्वेन नायिकास्पृहणीयत्वं नायके द्योत्यते। यद्वा मदनतुल्यरूपशालित्वेन मदनविरोधित्वं नायके द्योत्यते। तेन च पीडाकरणौचित्येऽपि तदकरणेनाज्ञत्वं मदने व्यज्यते। मधुरयन्ति। पुष्टिदत्वादिति भावः। यद्वा तपनखिन्नानामेव चन्द्रमसः सुखदत्वादिति भावः॥

कश्चित्कांचिद्वक्ति—

तव सुतनु सानुमत्या बहुधातुजनितनितम्बरागायाः।
गिरिवरभुव इव लाभेनाप्नोमि व्यङ्गुलेन दिवम्॥ २४९॥

**तवेति**। हे सुतनु। एवं च स्पृहणीयत्वं ध्वन्यते। यद्वदसि तद्विधेयं मयेत्यनुमतिसहितायाः। पक्षे शिखरवत्याः। तु इति निश्चयेन बहुप्रकारमुत्पादितो नितम्बे रागः प्रीतिर्यया तस्याः। पक्षे बहुप्रकारगैरिकादिधातुभिर्जनितो नितम्बे कटके। 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः। रागो लौहित्यादिर्यस्याः। हिमालयवसुधाया इव तव लाभेन द्व्यङ्गुलेन स्वर्गं प्राप्नोमि। लाभे इति छेदे नञि काकुः। 'आप्नोति' इति पाठे मल्लक्षण इति शेषः। एवं च तव प्राप्तिहर्षोत्कर्षेणाहं स्वर्गमपि द्व्यङ्गुलान्तरितं मन्य इति भावः। एवं च त्वत्प्राप्त्या स्वर्गसुखमपि ममात्यन्तनिकटमिति व्यज्यते॥

कान्चिन्नायिका सखीं वक्ति—

त्यक्तो मुञ्चति जीवनमुज्झति नानुग्रहेऽपि लोलत्वम्।
किं प्रावृषेव पद्माकरस्य करणीयमस्य मया॥ २५०॥

**त्यक्त इति**। त्यक्तो जीवनं प्राणनम्। पक्षे जलम्। त्यजति। अनुग्रहेऽपि लोलत्वं चाञ्चल्यम्। पक्ष उच्छलद्वीचिकत्वम्। नोज्झति। प्रावृषा पद्माकरस्येव तडागस्येव मयास्य किं करणीयम्। एवं चोभयतोऽपि काठिन्यं ममेति ध्वन्यते॥

नायिकात्यन्तं त्वद्विरहक्षीणेति सखी नायकं वक्ति—

त्वद्विरहापदि पाण्डुस्तन्वङ्गी छाययैव केवलया।
हंसीव ज्योत्स्नायां सा सुभग प्रत्यभिज्ञेया॥ २५१॥

**त्वद्विरहेति**। सा तन्वङ्गी त्वद्विरहापदि पाण्डुः केवलया छाययैव कान्त्यैव। पक्षे यथाश्रुतम्। ज्योत्स्नायां हंसीव। सुभग। यत एतादृश्यपि नायिका त्वद्विरहेण खिद्यत इति भावः। प्रत्यभिज्ञेया ज्ञातुं शक्या। एवं चातिक्षीणत्वमावेद्यते। अत्र केवलपदैवकारान्यतरदनर्थकमाभाति॥

कथमितो गतेयमिति वादिनं नायकं नायिकासखी वक्ति—

त्वयि विनिवेशितचित्ता सुभग गता केवलेन कायेन।
घनजालरुद्धमीना नदीव सा नीरमात्रेण॥ २५२॥

**त्वयीति**। हे सुभग। नायिकासक्तिमत्त्वादिति भावः। त्वयि विनिवेशितम्। बुद्धिपुरःसरं स्थापितमिति भावः। चित्तं यया। केवलशरीरेण गता। अत्र दृष्टान्तमाह—निबिडं यज्जालं तद्रुद्धमत्स्या जलमात्रेण गता नदीव। चेतसश्चाञ्चल्यान्मत्स्यसाम्यम्। एवं च पुनरधुनैवायास्यतीति व्यज्यते॥

त्वय्यासक्तिवशादत्यन्तदुःखभामिनी कामिनी संजातेति सखी नायकं वक्ति—

त्वयि संसक्तं तस्याः कठोरतर हृदयमसमशरतरलम्।
मारुतचलमञ्चलमिव कण्टकसंपर्कतः स्फुटितम्॥ २५३॥

**त्वयीति**। हे कठोरतर। कथमन्यथैतादृशमौदासीन्यं कृतवानिति भावः। त्वयि संसक्तम्। आसक्तिमदिति भावः। 'सं'पदेन निःसारणानर्हत्वं व्यज्यते। मदनचपलं तस्या हृदयं वायुचञ्चलं कण्टकसंलग्नमञ्चलमिव विदीर्णम्। मारुतचलकण्टकसंपर्कार्थान्वययोग्यतावशादञ्चलपदेन चेलाञ्चल एव प्रतीयते। अत्र

कण्टकसाम्येन नायिकाचित्तवेधक्षमत्वं नायके द्योत्यते। अञ्चलसाम्येन नायिकाचित्ते सूक्ष्मत्वं ध्वन्यते। मारुतसाम्येन सर्वगततया निवारणानर्हत्वं ध्वन्यते॥

यद्यपि त्वया भूयसी लज्जा क्रियते तथापि बहुवस्त्वग्र्यासक्ता इति सखी नायिकामन्योक्त्या वक्ति—

त्वमसूर्यंपश्या सखि पदमपि न विनापवारणं भ्रमसि।
छाये किमिह विधेयं मुञ्चन्ति न मूर्तिमन्तस्त्वाम्॥ २५४॥

**त्वमिति**। हे छायारूपे सखि, त्वं सूर्यदर्शनं न करोषि। छायाया अधोमुखत्वान्न सूर्यदर्शनम्। अपवारणमन्तर्धिं विना पदमपि न भ्रमसि छायाप्यन्तर्धिं विना न भवति। मूर्तिमन्तः। सर्वेऽपीत्यर्थः। पक्ष इयत्तावच्छिन्नपरिमाणशालिनः। त्वां न मुञ्चन्ति। इह किं विधेयम्। एवं चात्र न ममापि प्रतीकारस्फुरणमिति भावः। एवं चैतादृशलज्जाकरणमनर्थकमिति द्योत्यते॥

नायिकाविरहदुःखातिशयं सखी नायकं वक्ति—

तव विरहे विस्तारितरजनौ जनितेन्दुचन्दनद्वेषे।
बिसिनीव माघमासे विना हुताशेन सा दग्धा॥ २५५॥

**तवेति**। विस्तारिता रात्रिर्येन तस्मिन्। निद्राविरहादिति भावः। पक्षे रात्रिमानस्याधिक्यादिति भावः। जनितश्चन्द्रचन्दनद्वेषो येन तस्मिन्। उद्दीपकत्वादिति भावः। पक्षे शीतलत्वादिति भावः। तव विरहे माघमासे बिसिनीव सा हुताशेनाग्निं विना दग्धा। हिमेन बिसिनीविनाशनमिति लोकप्रसिद्धिः। एवं चैतादृशैतत्कालीननायिकावस्थास्ति, अतोऽवश्यं भवतानुग्राह्या सेति व्यज्यते॥

सखी नायिकां वक्ति—

तरुणि त्वच्चरणाहतिकुसुमितकङ्केलिकोरकप्रकरम्।
कुटिलचरिता सपत्नी न पिबति बत शोकविकलापि॥२५६॥

**तरुणीति**। हे तरुणि। एवं च नायकासक्तियोग्यत्वं ध्वन्यते। त्वच्चरणहननजातकुसुमाशोककलिकासमूहम्। 'कलिका कोरकः पुमान्' इत्यमरः। कुटिलाचरणा सपत्नी शोकविकलापि न पिबति। अशोककलिकारसपानेन शोकहानिर्भवतीति लौकिकम्। एवं च शोककालेऽप्येतादृशद्वेषवत्त्वेन समीचीनकाले किं किं तया न विधेयम्, अतस्त्वया सर्वप्रकारेण मानाद्यपहाय नायकोऽनुरञ्जनीय इति व्यज्यते॥

कश्चिन्नायिकां स्तौति—

तल्पे प्रभुरिव गुरुरिव मनसिजतन्त्रे श्रमे भुजिष्येव ।
गेहे श्रीरिव गुरुजनपुरतो मूर्तेव सा व्रीडा ॥ २५७ ॥

**तल्प इति** । प्रभुरिव । प्रौढिमत्त्वादिति भावः । तन्त्रं शास्त्रम् । गुरुरिव । मन्मथकलाकलापोपदेशकत्वादिति भावः । भुजिष्या दासी । एवं चैतादृशी नायिका नान्येति ध्वन्यते । तेन च तद्वत्तया स्वाधिक्यम् ॥

नायकः पुष्पितां नायिकां वक्ति—

त्वमलभ्या मम तावन्मोक्तुमशक्तस्य संमुखं व्रजतः ।
छायेवापसरन्ती भित्त्या न निवार्यसे यावत् ॥ २५८ ॥

**त्वमिति** । संमुखं व्रजतः । चुम्बनार्थमिति भावः । मोक्तुमशक्तस्य । आसक्तिविशेषादिति भावः । ममापसरन्ती । स्पर्शानर्हत्वादिति भावः । भित्त्या कुड्यादिना यावन्न निवार्यसेऽपसरणप्रतिबन्धवती न क्रियसे तावत्त्वं छायेवालभ्या । एवं च भित्तिप्रतिबद्धापसरणां त्वां विना चुम्बनदानं न विमोचयामीति व्यज्यते ॥

वसन्ते मदनवेदनासह्येति कश्चिद्वक्ति—

तपसा क्लेशित एष प्रौढबलो न खलु फाल्गुनेऽप्यासीत् ।
मधुना प्रमत्तमधुना को मदनं मिहिरमिव सहते ॥ २५९ ॥

**तपसेति** । तपसा तपश्चर्यया । पक्षे माघमासेन । क्लेशिते । कार्श्यं गमित इत्यर्थः । पक्षे क्लेशिते । निस्तेजस्कत्वादिति भावः । फाल्गुनेऽर्जुने । पक्षे मासि । एष मदनो मिहिरश्च । खलु निश्चयेन प्रौढबलोऽपि । अपिना प्रौढबलफलजनकत्वाभावो द्योत्यते । नासीत् । तपस्याविभेदायेन्द्रप्रहितोर्वश्याद्यप्सरोऽवगणनादिति भावः । पक्ष उत्तरायणारम्भात्प्रौढतेजसोऽभावादिति भावः । अधुना मधुना वसन्तेन । पक्षे चैत्रेण । मधुपदमुन्मादजनकतां व्यञ्जयति । उत्कृष्टोन्मादशालिनं मदनं सूर्यमिव कः सहते । न कोऽपीत्यर्थः । एवं च वसन्तकालीनमदनवेदनात्यन्तमसह्येति ध्वन्यते ॥

सखी नायिकाविरहं नायकं प्रति वक्ति—

त्वद्गमनदिवसगणनावलक्षरेखाभिरङ्किता सुभग ।
गण्डस्थलीव तस्याः पाण्डुरिता भवनभित्तिरपि ॥ २६० ॥

**त्वद्गमनेति** । हे सुभग । एतादृशनायिकाप्रेमसत्त्वादिति भावः । त्वद्गमनदि-

वसानां गणना तया वलक्षा अर्जुनाः। 'वलक्षो धवलोऽर्जुनः' इत्यमरः। या रेखास्ताभिश्चिह्निता । इयन्ति दिनानि जातानीति ज्ञानार्थमिति भावः । तस्या गेहभित्तिरपि । एवं च तद्देहभुवः का वार्तेति व्यज्यते । गण्डस्थलीव पाण्डुरिता । एवं चातःपरं विलम्बो न विधेय इति ध्वन्यते ॥

कथमन्यत्रानुरागं बध्नासीति वादिनीं सखीं प्रति नायिका वक्ति—

तस्याग्राम्यस्याहं सखि वक्रस्निग्धमधुरया दृष्ट्या ।
विद्धा तदेकनेया पोत्रिण इव दंष्ट्रया धरणी ॥ २६१ ॥

**तस्येति** । हे सखि । एवं च रहस्यकथनार्हत्वं ध्वन्यते । तस्याग्राम्यस्य । नागरिकस्येत्यर्थः । एवं चासक्तियोग्यत्वं ध्वन्यते । पक्षे वन्यस्य । वक्रप्रेमार्द्रसुन्दरया । 'तीव्र' इति पाठे वेधजननयोग्यत्वं ध्वन्यते । दृष्ट्या विद्धा । विद्धापदमन्यत्रगमनानर्हत्वं ध्वनयति । पोत्रिणो वराहस्य दंष्ट्रया धरणीवाहं तदेकनेया । एवं चान्यत्र न ममानुराग इति द्योत्यते ॥

बहुतरवसुसत्त्वेऽपि कुग्रामे वसतौ केवलं तव चण्डालानुग्रहादेवाभयं नान्यत इति कश्चित्कंचिदन्योक्त्या वक्ति—

त्वयि कुग्रामवटद्रुम वैश्रवणो वसतु वसतु वा लक्ष्मीः ।
पामरकुठारपातात्कासरशिरसैव ते रक्षा ॥ २६२ ॥

**त्वयीति** । हे कुग्रामवटद्रुम । कुग्रामपदेन निवासानर्हत्वं द्योत्यते । वैश्रवणः कुबेरः । 'किंनरेशो वैश्रवणः' इत्यमरः । वसतु । अथवा लक्ष्मीर्वसतु । पामरस्य मूर्खस्य । एवं च कुबेरादिवसत्या छेदानर्हत्वज्ञानविधुरत्वमिति व्यज्यते । कुठारपातात्ते रक्षणं कासरस्य महिषस्य मस्तकेनैव । चण्डालसदनस्थत्वादिति भावः ॥

नायिकासखी नायकं वक्ति—

तव मुखर वदनदोषं सहमाना मोक्तुमक्षमा सुतनुः ।
सा वहति विट भवन्तं घुणमन्तः शालभञ्जीव ॥ २६३ ॥

**तवेति** । हे मुखर, तव वदनदोषम् । असमीचीनभाषणमिति भावः । यद्वा मुखरं यद्वदनं तद्दोषम् । सहमाना मोक्तुम् । त्वामिति भावः । असमर्था । प्रेमवशादिति भावः । यद्वा कुलीनत्वादिति भावः । सा सुतनुः । विट । न केवलं मौखर्यम्, अपि तु वेश्यासक्तिरिति भावः । एवं चोपदेशाजर्हत्वं ध्वन्यते । भवन्तं

शालभञ्जीं काष्ठपुत्तलिका कीटमिवान्तः स्वान्तेभ्यन्तरे च वहति। एवं चैतादृशान्तर्दुःखशुष्काया अपि तस्यास्त्वासक्तिरिति व्यज्यते॥

निरपराधिनं कमपि कैश्चित्पीड्यमानं कश्चिदन्योक्त्या वक्ति—

तृणमुखमपि न खलु त्वां त्यजन्त्यमी हरिण वैरिणः शबराः।
यशसैव जीवितमिदं त्यज योजितशृङ्गसङ्ग्रामः॥ २६४॥

**तृणेति**। हे हरिण। तृणमुखमपि। एवं च निरपराधित्वं ध्वन्यते। शरणागतत्वं वा। त्वाममी वैरिणः शबरा भिल्लाः खलु न त्यजन्ति। योजितविषाणयुद्धः कीर्त्यैवेदं जीवितं त्यज। एवं च प्रबलदुष्टशत्रुसंबन्धे युद्धेन मरणमेव वरम्, न पुनः पलायनं न वा शरणगमनमिति व्यज्यते॥

कश्चिन्मानिनीचरणकृतमस्तकं तया च केशाकर्षणेन दूरीकृतमात्मानं विज्ञाय तां वक्ति—

त्रिपुररिपोरिव गङ्गा मम मानिनि जनितमदनदाहस्य।
जीवनमर्पितशिरसो ददासि चिकुरग्रहेणैव॥ २६५॥

**त्रिपुरेति**। हे मानिनि। जनितो मदनेन दाहो यस्य। पक्षे जनितो मदनस्य दाहो येन। तस्य। अर्पितमस्तकस्य। चरणयोः प्रणामार्थम्। पक्षे गङ्गाप्रवाहग्रहणार्थमिति भावः। मम त्वं महादेवस्य गङ्गेव चिकुरग्रहेणैव जीवनं जीवितम्। पक्षे जलम्। ददासि। एवं च त्वत्कोपेन जीवननिरपेक्षस्यापि मम क्रोधादपि त्वत्करस्पर्शेन संतापनिवृत्त्या जीवनं किमु प्रसन्नया त्वया कृतकरस्पर्शेन जीवनमिति ध्वन्यते। गौतमप्रार्थितगङ्गाप्रवाहसहनाय शिवेन शिरोऽग्रे कृतमिति पुराणप्रसिद्धिः॥

सर्वसखीगोपनपुरःसरं केनचित्सह संयोगं विधाय स्थितां नायिकां काचित्सखी 'त्वया तेन सह रतं कृतम्' इति वक्ति—

त्वत्संकथासु मुखरः सनिन्दसानन्दसावहित्थ इव।
स खलु सखीनां निभृतं त्वया कृतार्थीकृतः सुभगः॥२६६॥

**त्वदिति**। स सुभगो नायकः। सुभगत्वं च सकलसखीगोपनपुरःसरं नायिकया कृतार्थीकरणात्। खलु निश्चयेन सखीनां निभृतं यथा स्यात्तथा। सखीनामिति वहुवचनेन सर्वप्रतारणकरणसमर्थायास्तव मत्प्रतारणमतिसुकरमित्यावेद्यते। त्वया कृतार्थीकृतः। यतस्त्वदीयसद्वार्तासु। कचिज्जायमानास्विति भावः। सनिन्द इव।

कथमधन्यैरस्मत्सदृशैः सा द्रष्टुं शक्येति लोकगोपनार्थमिति भावः। सानन्द इव। तदानीं त्वत्सांनिध्याभावेऽपि त्वत्संनिधानजनितानन्द इव। सावहित्थ इव। केनाप्यानन्दचिह्नं न विज्ञेयमिति धियाकारगोपनवानिव। एवं चाकारगोपनस्याशक्यत्वं द्योत्यते। मुखरः। वारंवारं त्वत्कथासूत्तरप्रत्युत्तरकारी। एवं च यदि न तव तेन सह संगतिस्तर्हीदृग्व्यवहारस्तस्मिन्कथं भवेत्। अतस्त्वयास्मान्प्रतार्य तेन सह संगतिः कृतेति ध्वन्यते। 'पुरतः' इति पाठे सखीनामस्मद्विधानां पुरतस्त्वद्वदनविनिःसृतमद्गोष्ठीषु सनिन्दसानन्दसावहित्थ इव मुखरो वक्तुं प्रौढः। अतः खलु त्वया कृतार्थीकृतः। एवं च त्वया सहैतत्संगतिरस्ति। कथमन्यथा त्वद्वदनविनिःसृतविचित्रवार्ताविज्ञोऽयमिति ध्वन्यते। यद्वा सखीनां पुरतः सनिन्दसानन्दसावहित्थ इव त्वद्विषयकवार्तासु मुखरः। सुभगः। एवं च संगतियोग्यत्वं ध्वन्यते। कृतार्थीकृत इति काक्वा प्रश्नः। एवं चैतादृशोऽहर्निशमस्मत्समक्षं त्वदेकवार्ताविधानप्रवणः सुभगः कथमद्यापि नानुगृह्यते। अपि तु झटित्यनुग्राह्य इति द्योत्यते।

नायिकासखी नायकं वक्ति—

त्वयि सर्पति पथि दृष्टिः सुन्दर वृतिविवरनिर्गता तस्याः।
दरतरलभिन्नशैवलजाला शफरीव विस्फुरति ॥ २६७ ॥

**त्वयीति**। हे सुन्दर। एवं च स्पृहणीयत्वं ध्वन्यते। त्वयि मार्गे चलति सति वृतिरावरणं तद्रन्ध्रनिर्गता तस्या दृष्टिः शैवालप्राबल्यादीषच्चञ्चला चासौ भिन्नशैवलजाला च शफरीव विस्फुरति। एवं च त्वय्यासक्ता सेति व्यज्यते॥

नायको नायिकां वक्ति—

ते सुतनु शून्यहृदया ये शङ्खं शून्यहृदयमभिदधति।
अङ्गीकृतकरपत्रो यस्तव हस्तग्रहं कुरुते ॥ २६८ ॥

**त इति**। हे सुतनु, ये शङ्खं हृदयविहीनम्। यद्वा शून्यं बिन्दुरूपमवकाशरूपं वा हृदयं यस्य। एवं च प्राणशून्यत्वं व्यज्यते। वदन्ति ते हृदयशून्याः। मूर्खा इत्यर्थः। यः शङ्खोऽङ्गीकृतक्रकचस्तव करग्रहं कुरुते। एवं च यद्ययं हृदयशून्यः स्यात्तर्हि त्वत्करग्रहाय करपत्रविदारणं कथं कुर्यादिति भावः। एवं च प्रयागे करपत्रकर्तनादिना येन शरीरं त्यज्यते तेनैव त्वं प्राप्येति व्यज्यते॥

कंचन महान्तं गुणिनं सीदन्तं कश्चिदन्योक्त्या वक्ति—

ते श्रेष्ठिनः क्व संप्रति शक्रध्वज यैः कृतस्तवोच्छ्रायः।
ईषां वा मेढिं वाधुनातनास्त्वां विधित्सन्ति॥ २६९॥

**ते श्रेष्ठिन इति** । हे शक्रध्वज, यैस्तवोच्छ्रायः कृतस्ते श्रेष्ठिनो वणिजः संप्रति क्व। न सन्तीति भावः। अधुनातनास्त्वामीषां लाङ्गलपद्धतिं मेढिं स्तम्भं वा करिष्यन्ति। एवं चाधुनातनेषु मूर्खत्वं व्यज्यते। एवं च प्राक्तनगुणज्ञसद्वृत्तलोकाभावात्तवैतादृशाः क्लेशा इति व्यज्यते। यद्वा प्राक्तनलोकाभावान्न तव तथाविधप्रतिष्ठादीति कश्चित्कंचिदन्योक्त्या वक्ति॥

प्रेम्णो भङ्गे पुनः संधानं न तथेति काचित्कांचिद्वक्ति—

तानवमेत्य च्छिन्नः परोपहितरागमदनसंघटितः।
कर्ण इव कामिनीनां न शोभते निर्भरः प्रेमा॥ २७०॥

**तानवमिति**। तानवं स्वल्पत्वम्। पक्षे कार्श्यम्। प्राप्य च्छिन्नः। परेणान्येनोपहितः कृतो रागोऽनुरागो यस्य स चासौ मन्मथसंघटितश्च। कस्यचिद्वचनेन मन्मथविकारेण च पुनः कृत इति भावः। पक्षे परेणान्येन द्रव्येणोपहितो रागो रञ्जनं यस्यैतादृङ्मदनेन मधूच्छिष्टेन संधानं नीतः कामिनीनां प्रेमा कर्ण इव निर्भर आधिक्यशून्यः। पक्षे भरासहः। न शोभते। 'विराजते' इति पाठे काकुः। एवं च त्वया तथा न विधेयं यथा प्रेमभङ्गो भवेदिति ध्वन्यते॥

'तथाविधगुणाभाववति महन्नामकरणं विडम्बनमात्रफलकम्' इति कश्चित्कंचिद्वक्ति—

तस्मिन्गतार्द्रभावे वीतरसे शुण्ठिशकल इव पुरुषे।
अपि भूतिभाजि मलिने नागरशब्दो विडम्बाय॥ २७१॥

**तस्मिन्निति**। तस्मिन्गत आर्द्रभावः करुणा। पक्षे आर्द्रत्वम्। तस्मिन्नपि। अपिरप्रेऽप्यन्वेति। वीतो रसः शृङ्गारादिः। पक्षे पुराणत्वाद्गततिक्तादिरसे। 'गतार्द्रभावे इत्यस्य विवरणं वीतरसे' इति ऋजवः। भूतिरैश्वर्यम्। पक्षे भस्मादि। तद्वति। मलिने पापवति। पक्ष उज्ज्वलत्वाभाववति। पुरुषे शुण्ठिशकल इव। शकलपदेनानुपयुक्तत्वं ध्वन्यते। नागरशब्दो विडम्बनाय। नगरे भवो नागरः। पक्षे 'अथ शुण्ठी महौषधम्। स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम्॥' इत्यमरः॥

कश्चिद्विपत्तौ कंचिदुद्दिश्य गतः, तेन च संभाषणादिविषयतामप्यनीतः कंचिदन्योक्त्या वक्ति—

तमसि घने विषमे पथि जम्बुकमुल्कामुखं प्रपन्नाः स्मः ।
किं कुर्मः सोऽपि सखे स्थितो मुखं मुद्रयित्वैव ॥ २७२ ॥

**तमसीति** । निविडेऽन्धकारे, कठिनतरे पथि, उल्का मुखे यस्य तं जम्बुकं प्रपन्नाः स्मः । एतन्मुखप्रकाशेनायं मार्गो विलङ्घनीय इति धियेति भावः । हे सखे । एवं च दुःखकथनार्हत्वं द्योत्यते । सोऽपि मुखं मुद्रयित्वैव स्थितः । किमत्र कुर्मः । एवं चास्माकं दुर्दैववशान्नीचावलम्बनमपि कर्तुमुद्यतानां न तत्र शब्दमात्रावलम्बनं किमुतान्यदिति ध्वन्यते ॥

कश्चित्कांचिदङ्गनां प्रति वक्ति—

त्वामभिलषतो मानिनि मम गरिमगुणोऽपि दोषतां यातः ।
पङ्किलकूलां तटिनीं पिपासतः सिन्धुरस्येव ॥ २७३ ॥

**त्वामिति** । हे मानिनि । मानः प्रतिष्ठा । त्वदभिलाषवतो मम पङ्किलतीरां नदीं गन्तुमिच्छतो गजस्येव गौरवगुणोऽपि दोषत्वं प्राप्तः । एवं च त्वत्सदने ममागमनस्यौचित्येऽपि दुष्टप्रतिवेशिभयात्प्रतिष्ठावतोऽन्यत्स्वल्पजनवदागमनमसंभवीति स्वमहत्त्वं महद्दोषत्वेन गणयामि, अतस्त्वयैव मत्सदने समागन्तव्यमिति प्रार्थयामीति ध्वन्यते । यद्वा पराङ्गनां मानिनीं प्रति कश्चित्संदेशं प्रेषयति । एवं च मम वारंवारागमने दुष्टत्वत्प्रतिवेशिजनैरवश्यं ज्ञातव्यम् । अतो मानं त्यक्त्वा त्वयागन्तव्यमिति व्यज्यते ॥

परपुरुषसंयोगाभिलाषिणीं काचिद्वक्ति—

तिमिरेऽपि दूरदृश्या कठिनाश्लेषे च रहसि मुखरा च ।
शङ्खमयवलयराजी गृहपतिशिरसा सह स्फुटतु ॥ २७४ ॥

**तिमिर इति** । अन्धकारेऽपि दूरतो दृश्या । श्वैत्यादिति भावः । आलिङ्गने कठिना । एकान्ते मुखरा । शङ्खविकारकङ्कणपङ्क्तिः । गृहपतेर्न तु प्रियस्य । मस्तकेन सह स्फुटतु । एवं च पतिमरणोत्तरं सुखेन मया स्वेच्छाविहारो विधेय इति व्यज्यते ॥

सखी नायिकां वक्ति—

तव वृत्तेन गुणेन च समुचितसंपन्नकण्ठलुठनायाः ।
हारस्रज इव सुन्दरि कृतः पुनर्नायकस्तरलः ॥ २७५ ॥

**तवेति** । हे सुन्दरि । एवं चासक्तियोग्यत्वं व्यज्यते । समुचितप्राप्तालिङ्गनायाः । पक्षे समुचितं धनिनः कण्ठलुठनं यस्याः । हारस्रज इव मुक्तमालाया इव तव वृत्तेन शीलेन । पक्षे वर्तुलेन । चातुर्यादिगुणेन । पक्षे सूत्रेण । नायकः कान्तः । पक्षे मुख्यमणिः । तरलश्चञ्चलः । पक्षे हारमध्यगः । पुनर्वारंवारं कृतः । एवं च त्वच्छीलगुणेष्वासक्त्या स्वधैर्यं परित्यज्य नायकस्त्वामेवानुचिन्तयन्नास्त इति व्यज्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता तकारव्रज्या ।

---

## दकारव्रज्या

नायकोऽधुना गृहिणीमानापनोदनाय प्रणामादि करिष्यतीति दुःखितां सपत्नीं तत्सखी वक्ति—

दर्शनविनीतमाना गृहिणी हर्षोल्लसत्कपोलतलम् ।
चुम्बननिषेधमिषतो वदनं पिदधाति पाणिभ्याम् ॥ २७६ ॥

**दर्शनेति** । दर्शनविनीतमाना । एवं च गुणोत्कर्षशून्यत्वं ध्वन्यते । गृहिणी । हर्षेणोल्लसत्कपोलतलं मुखम् । स्वस्येति भावः । चुम्बननिषेधव्याजाद्धस्ताभ्यामाच्छादयति । एवं च त्वां विहायागतं नायकमवलोक्य चिरकालीनबह्वपेक्षितदर्शनसंजातहर्षसमुदितपुलकगोपनेन स्वस्य सौभाग्याविष्करणायैवमकरोन्न वास्तवमानदार्ढ्यं तस्यामिति द्योत्यते । तेन च नायकप्रणामादीति ॥

सखी नायिकां वक्ति—

देहस्तम्भः स्खलनं शैथिल्यं वेपथुः प्रियध्यानम् ।
पथि पथि गगनाश्लेषः कामिनि कस्तेऽभिसारगुणः ॥ २७७ ॥

**देहेति** । हे कामिनि, गतिनिरोधस्खलनशैथिल्यकम्पप्रियतमचिन्तनाशालिङ्गनानि मार्गे मार्गे, अतस्तेऽभिसारगुणः कः । एवं चाभिसारे सर्वमेतद्विघ्नरूपम्, अतस्त्वयैतन्न विधेयमिति ध्वन्यते तेन चात्यन्तासक्तिर्नायके तवास्तीति ॥

नायिकासखी नायकं वक्ति—

द्राघयता दिवसानि त्वदीयविरहेण तीव्रतापेन।
ग्रीष्मेणेव नलिन्या जीवनमल्पीकृतं तस्याः॥ २७८॥

**द्राघयतेति**। दिवसानि। 'वा तु क्लीबे दिवसवारौ' इत्यमरः। महत्कुर्वता। दुःखोद्रेकात्। तद्दिनमानमाहात्म्यादलसत्वादिति भावः। तीव्रस्तापः संतापो यस्य तेन। पक्षे तापो घर्मः। तस्यास्त्वदीयविरहेण नलिन्या ग्रीष्मेणेव जीवनमायुः। पक्षे जलम्। अल्पीकृतम्, न तु नाशितम्। एवं च यथातथैतत्समयोऽतिवाहितस्तया परं तु वर्षासु प्राणाः परित्याज्या इत्यवगत्य त्वयानुग्राह्या सेति व्यज्यते॥

दुष्टसंसर्गादपि साधोः साधुत्वं नापैतीति कश्चिद्वक्ति—

दुर्जनसहवासादपि शीलोत्कर्षं न सज्जनस्त्यजति।
प्रतिपर्वतपनवासी निःसृतमात्रः शशी शीतः॥ २७९॥

**दुर्जनेति**। पर्वामावस्या। अमायां चन्द्रस्य सूर्यान्तर्गतत्वमिति ज्योतिर्वित्प्रवादः॥

सखी नायिकां वक्ति—

दयितप्रहितां दूतीमालम्ब्य करेण तमसि गच्छन्ती।
स्वेदच्युतमृगनाभिर्दूराद्गौराङ्गि दृश्यासि॥ २८०॥

**दयितेति**। प्रियप्रेषितां दूतीं करेणालम्ब्यान्धकारे गच्छन्ती स्वेदगलितकस्तूरिका त्वं गौराङ्गि दूराद्दृश्यासि। दयितदूतीत्वेनातिप्रियतया तत्करस्पर्शमात्रादेव संजातसात्विकभावस्वेदपूरदूरीभूतान्धकाराभिसरणानुकूलमृगमदवत्तया गौरशरीरतया दूरादपि दृश्यासीति भावः। एव च नायकविषयासक्तिविशेषो ध्वन्यते॥

काचित्कांचिद्वक्ति—

दयितागुणः प्रकाशं नीतः स्वस्यैव वदनदोषेण।
प्रतिदिनविदलितवाटीवृतिघटनैः खिद्यसे किमिति॥ २८१॥

**दयितागुण इति**। स्वस्यैव मुखदोषेण नायिकागुणः प्रकटीकृतः। प्रतिदिनं विघटितगृहावरणसंपादनैः किमिति खेदं प्राप्नोषि। एवं च त्वदुक्तनायिकागुणश्रवणेनासक्त्या लोकेनैव रात्रौ वृतिघटनं विधीयत इति व्यज्यते। तेन च त्वदीय एवायमपराध इति। तेन च कदापि नायिकागुणवर्णनं विधेयमिति॥

चातुर्यवशात्साधुतामवलम्बमानं मैनमवगणयन्त्वित्यन्योक्त्या कश्चिदुपदिशति-

दाक्षिण्यान्म्रदिमानं दधतं मा भानुमेनमवमंस्थाः।
रौद्रीमुपागतेऽस्मिन्कः क्षमते दृष्टिमपि दातुम्॥ २८२॥

**दाक्षिण्यादिति**। दाक्षिण्याद्दक्षिणदिक्संबन्धादित्यर्थः। पक्षे चातुर्यात्। मृदुत्वमसंतापकत्वम्। पक्षे साधुत्वम्। भजन्तमेनं भानुम्। पक्षे सूर्यतुल्यतेजस्विनमित्यर्थः। मावगणयेथाः। अस्मिन्रौद्रीमीशानीं दिशम्। पक्षे रोषमित्यर्थः। प्राप्ते दृष्टिमपि दातुं कः क्षमते। न कोऽपीत्यर्थः। एवं चातिसंतापकत्वं द्योत्यते। यद्वा रौद्री मध्याह्नवेला॥

कश्चित्पथिकः पथि व्याधबाणाहतिगच्छत्प्राणां हरिणीमालोक्य सखायं वक्ति—

दृष्ट्यैव विरहकातरतारकया प्रियमुखे समर्पितया।
यान्ति मृगवल्लभायाः पुलिन्दबाणार्दिताः प्राणाः॥ २८३॥

**दृष्ट्यैवेति**। भिल्लशरपीडिताया हरिण्या वियोगभीतनेत्रकनीनिकया। एवं च मरणमीत्यभावो द्योत्यते। अत एव प्रियवदनस्थापितया दृष्ट्यैव न मुखादिद्वारा प्राणाः प्रयान्ति। एवं च पश्वङ्गनाया अपि मरणकारणबाणव्यथातोऽपि विरहव्यथा दुःसहा। किमु मनुष्याङ्गनाया इति व्यज्यते। तेन च यो हि नायिकां विहाय परदेशे गच्छति स मृगतुल्यः पशुरिति। यद्वा नायकादपि नायिकाया विरहभीतिरिति व्यज्यते॥

खलसंगतिर्न विधेयेति कश्चिदुपदिशति—

दूरस्थापितहृदयो गूढरहस्यो निकाममाशङ्कः।
आश्लेषो बालानां भवति खलानां च संभेदः॥ २८४॥

**दूरेति**। दूरे स्थापितं हृदयं वक्षःस्थलम्। पक्षेऽन्तःकरणम्। येन सः। गूढं रहस्यमन्तःकरणविषयीभूतम्। पक्षे मन्त्रादि। यस्य सः। निकाममत्यन्तमाशङ्का भीतिः। पक्षे विश्वासाभावः। यस्य सः। क्वचित् 'गूढरहस्यं निकामसाशङ्कः' इति पाठः। गूढरहस्यमत्यन्तरहस्यम्। बालानां मुग्धाङ्गनानामाश्लेष आलिङ्गनं खलानां च संभेदः सङ्गो भवति। एवं चोभयोः साम्यं व्यज्यते॥

असमयरताभिलाषिणं नायकं नायिका वक्ति—

द्वारे गुरवः कोणे शुकः सकाशे शिशुर्गृहे सख्यः ।
कालासह क्षमस्व प्रिय प्रसीद प्रयातमहः ॥ २८५ ॥

**द्वार इति** । द्वारे गुरवः । एवं च बहिर्गमनानर्हत्वं दर्शनानर्हत्वं च व्यज्यते । कोणे शुकः । एवं च वचनरचनाशीलशुकाधिष्ठानेन कोणदेशेऽपि रतानर्हत्वं ध्वन्यते । सकाशे शिशुः । एवं च बालकापसारण एतत्कोलाहलादिना निकटवर्तिगुरुजनागमनसंभावनया नैतदपि स्थलं रतयोग्यमिति द्योत्यते । गेहे सख्यः । एवं च तासामपि तव लज्जाकरणौचित्येन गृहमपि रतानर्हमिति व्यज्यते । कालासह । सुरतोत्सुकेत्यर्थः । प्रिय । एवं च त्वदाज्ञालङ्घनानर्हाहमित्यावेद्यते । प्रसीद । तत्फलमाह—क्षमस्व । समयाभावादिति भावः । ननु कदा समयो भावीत्यत्राह—अहः प्रयातं गतमेव । एवं चागतप्राया निशैव सुरतयोग्येति ध्वन्यते ॥

सखी नायिकामुपदिशति—

दधिकणमुक्ताभरणश्वासोच्चुङ्गस्तनार्पणमनोज्ञम् ।
प्रियमालिङ्गति गोपी मन्थश्रममन्थरैरङ्गैः ॥ २८६ ॥

**दधीति** । दधिकणरूपमुक्ताफलानामलंकरणं ययोः । श्वासेन । श्रमजन्येनेति भावः । उच्चौ यौ स्तनौ तत्समर्पणाभिरामं यथा स्यात्तथा गोपी दधिमथनश्रमनिश्चलाङ्गैः प्रियमालिङ्गति । एवं च शृङ्गारादिरचनां विनापि श्रममगणयित्वैव तथाविधज्ञानविधुरापि गोपाङ्गना स्वयं प्रियमालिङ्गति, त्वं त्वत्यन्तचतुरापि प्रियालिङ्गने विलम्बमावहसीति भ्रान्ता त्वमिति व्यज्यते । तेन च नैवं विधेयमिति । यद्वा यथैककार्यनियुक्तापि गोपी तत्समयेऽपि प्रियालिङ्गनं करोति तथा त्वयापि विधेयमिति व्यज्यते ॥

नायिका सखीं वक्ति—

दलितोद्वेगेन सखि प्रियेण लग्नेन रागमावहता ।
मोहयता शयनीयं ताम्बूलेनेव नीतास्मि ॥ २८७ ॥

**दलितेति** । हे सखि, भञ्जितक्लेशेन । पक्षे चूर्णीकृतपूगवता । कण्ठलग्नेन रागं प्रीतिम् । पक्षे लौहित्यम् । आवहता । मोहयता विषयान्तरज्ञानाभावं कुर्वता । पक्षे भ्रान्तिं जनयता । प्रियेण ताम्बूलेनेव शयनं नीतास्मि । एवं च प्रियसङ्गे मम न किमप्यन्यविषयकं ज्ञानमिति व्यज्यते ॥

कश्चित्कंचिद्वक्ति—

दृष्टमदृष्टप्रायं दयितं कृत्वा प्रकाशितस्तनया।
हृदयं करेण ताडितमथ मिथ्या व्यञ्जितत्रपया॥ २८८॥

**दृष्टमिति**। अथेत्यनन्तरं हृदयं करेण ताडितम्। अनुचितं मया कृतमिति प्रदर्शनार्थमिति भावः। जातिवर्णनमेतत्॥

सखी नायिकां वक्ति—

दर्शितयमुनोच्छ्राये भ्रूविभ्रमभाजि वलति तव नयने।
क्षिप्तहले हलधर इव सर्वं पुरमर्जितं सुतनु॥ २८९॥

**दर्शितेति**। हे सुतनु, दर्शितो यमुनात उच्छ्राय आधिक्यं यस्य तस्मिन्। श्यामत्वादिति भावः। पक्षे दर्शितयमुनाधिक्ये। मथुरामण्डले रामहलेन प्रवाहस्य विपरीतकरणेन जलाधिक्यादिति भावः। कटाक्षशालिनि। पक्षे कोपवशात्कुटिलभ्रुकुटिमति। तव नयने क्षिप्तहले हलधर इव बलदेव इव वलति सति समग्रं नगरमार्जितं स्वाधीनीकृतम्। पक्षे युधिष्ठिरं प्रति कोपाद्धस्तिनापुरस्य हलेन विपरीतकरणोद्यमादिति भावः। एवं च तव कटाक्षमात्राधीनाः सर्वेऽपि युवान इति नायिकाधिक्यकथनेनान्यनायिकानिन्दा द्योत्यते॥

विरहिणी सखीं वक्ति—

दयितप्रार्थितदुर्लभमुखमदिरासारसेकसुकुमारः।
व्यथयति विरहे बकुलः क परिचयः प्रकृतिकठिनानाम् २९०

**दयितेति**। दयितेन प्रार्थितोऽपि दुर्लभो मुखासवकणसेकस्तेन सुकुमारः संजातपल्लवादिः। 'शोकं जहाति बकुलो मुखसीधुसिक्तः' इति प्रसिद्धिः। प्रकृतिकठिनानाम्। काष्ठत्वादिति भावः। यद्वा 'नायकप्रार्थनावगणनापुरःसरमदिरागण्डूषसंपादितपल्लवादिरयं बकुलो विरहे मां कथं व्यथयति' इति नायिकाप्रश्ने केत्याद्युत्तरं सख्याः॥

सखी नायिकां वक्ति—

द्वित्रैरेष्यामि दिनैरिति किं तद्वचसि सखि तवाश्वासः।
कथयति चिरपथिकं तं दूरनिखातो नखाङ्कस्ते॥ २९१॥

**द्वित्रैरिति**। द्वित्रिसंख्याकैर्दिवसैरहमागमिष्यामीति तस्य नायकस्य वचसि।

तस्येत्यनेन नायकेऽन्यथाभाषित्वं द्योत्यते। कस्तव समाश्वासः। दूरनिखातो नखाङ्कः। दूरप्रवासे गम्भीरनखक्षतस्य कामशास्त्रे विहितत्वादिति भावः। तं नायकं चिरप्रवासिनं कथयति। एवं च सत्वरमयमायास्यतीति ज्ञानेनान्यनायकसंगतिमकुर्वाणा भ्रान्तासि त्वमिति व्यज्यते॥

सखी नायिकां वक्ति—

दयितस्पर्शोन्मीलितघर्मजलस्खलितचरणनखलाक्षे।
गर्वभरमुखरिते सखि तच्चिकुरान्किमपराधयसि॥ २९२॥

**दयितेति।** प्रियस्पर्शप्रसृतस्वेदजलविचलितचरणनखलाक्षे गर्वभरेण मुखरीकृते सखि नायकशिरोरुहान्किमित्यपराधयसि त्वत्सात्त्विकभावरूपस्वेदेनैव चरणनखलाक्षापगमे प्रियप्रणतिसंलग्नशिरोरुहैर्लाक्षापगतेति मिथ्या तमपराधयसीति भावः। एवं च तवैवायमपराध इति व्यज्यते॥

कश्चिद्दुष्टपुत्रदुःखितो गेहिनीं वक्ति—

दुष्टग्रहेण गेहिनि तेन कुपुत्रेण किं प्रजातेन।
भौमेनेव निजं कुलमङ्गारकवत्कृतं येन॥ २९३॥

**दुष्टेति।** हे गेहिनि, तेन। दुष्टो ग्रह आग्रहो यस्य तेन। पक्षे दुष्टश्चासौ ग्रहश्च तेन। प्रजातेनोत्पन्नेन। अत्रोपसर्गस्तथा नोपयोगीत्याभाति। कुत्सितपुत्रेण। पक्षे कुः पृथ्वी। किम्। न किंचित्फलमित्यर्थः। येन मङ्गलेनेव स्वीयं कुलमङ्गारकवत्कृतम्। प्रज्वालितमिति भावः। पक्षे 'अङ्गारकः कुजो भौमः' इत्यमरः। एवं च दुष्टपुत्रवत्त्वापेक्षयाऽपुत्रतैव सम्यगिति व्यज्यते॥

आपद्यपि शूराणां न नीचकार्यकारित्वमिति कश्चिद्वक्ति—

दर्शितचापोच्छ्रायैस्तेजोवद्भिः सुगोत्रसंजातैः।
हीरैरप्स्वपि वीरैरापत्स्वपि गम्यते नाधः॥ २९४॥

**दर्शितेति।** प्रकटीकृत इन्द्रधनुर्वदुच्छ्रायः कान्त्याधिक्यं धनुष औन्नत्यं च। 'ताप' इति पाठे कान्तिः प्रतापश्च। तेजः प्रकाशकत्वं सामर्थ्यं च। गोत्रः पर्वतोऽन्वयश्च। हीरैर्वज्रैः। अप्स्वपि। 'अप्स्विव' इति क्वचित्पाठः। वीरैरापत्स्वपि नाधो गम्यते। जलसाम्यदर्शनेनापदि मान्यसंपादकत्वमावेद्यते। हीरसमताप्रदर्श-

नेन वीरेष्वतिकाठिन्यं द्योत्यते । तेन चान्यजन्यभङ्गानर्हत्वम् । जले हीरका न मज्जन्तीति हीरकपरीक्षा ॥

अतिसलज्जतया छन्नतनुवैभवादन्यदालोकयन्तीं तन्मध्य एव किंचित्कटाक्षविक्षेपेण नायकमप्यवलोकयन्तीं नायको वक्ति—

दरनिद्राणस्यापि स्मरस्य शिल्पेन निर्गतासून्मे ।
मुग्धे तव दृष्टिरसावर्जुनयन्त्रेषुरिव हन्ति ॥ २९५ ॥

**दरेति** । हे मुग्धे, दरेण भयेन । मुग्धास्वभावसुलभेनेति भावः । निद्राणस्यापि । निलीनस्यापीत्यर्थः । निद्राणपदं निलीनत्वं लक्षयदसमर्थत्वं पराज्ञेयत्वं निभृतकार्यकारित्वं च व्यनक्ति । स्मरस्य कलाकौशलेन निर्गतासौ तव दृष्टिरर्जुनयन्त्रवाण इव मे प्राणान्हन्ति । अपिनैतादृशमदनकौशलनिर्गतदृष्टेरेतादृशकार्यकारित्वं तत्र किमु वाच्यमनिद्रमदनकौशलनिर्गतदृष्टेः कार्यकारित्वमित्यावेद्यते । यद्वा 'अपिः' निर्गतेत्यत्रान्वेति । एवं च निर्गतमात्रया दृष्ट्या प्राणापहरणं क्रियते तत्र का वार्ता प्राप्तया क्रियमाणस्येति व्यज्यते । अथवासूनपीति योजनया देहादिसमुच्चयः । पक्षे 'पत्री रोप इषुर्द्वयोः' इत्यभिधानादिषुशब्दस्य स्त्रीलिङ्गतया कौशलेन निर्गतेतीषुविशेषणम् । एवं चैतादृशत्वदीयावलोकनेनाहमतिविकलः, अतो मामालिङ्गनादिना जीवयेति ध्वन्यते । अर्जुनोऽप्यन्यत्र विलोकयन्नन्यलक्ष्यमाजघानेति पुराणप्रसिद्धिः । 'शून्यम्' इति पाठे शून्यमभिसंधिरहितं निर्गता । पक्षे आकाशम् ॥

दारिद्र्यमतिदुःखदमिति कश्चिद्वक्ति—

दुर्गतगृहिणी तनये करुणार्द्रा प्रियतमे च रागमयी ।
मुग्धा रताभियोगं न मन्यते न प्रतिक्षिपति ॥ २९६ ॥

**दुर्गतेति** । दरिद्रकामिनी । दुर्गतपदेन धात्र्यादिकरणसामर्थ्याभावो व्यज्यते । तनये । एवं चातिवात्सल्यमावेद्यते । करुणाशालिनी । नायकसङ्गे स्तन्यहान्या तनयस्य दुःखं भविष्यतीति धियेति भावः । मुग्धा किं विधेयमिति निश्चयशून्या ॥

१. 'सर्वद्रव्याभेद्यं लघ्वम्भसि तरति रश्मिवत्स्निग्धम् । तडिदनलशक्रचापोपमं च वज्रं हितायोक्तम् ॥' इति बृहत्संहिता (८०।१४).

त्वं गेह एव जारोपभोगं मुखेन करोषि नास्माकं स इत्यन्योक्त्या काचित्कांचिद्वक्ति—

दुर्गतगेहिनि जर्जरमन्दिरसुप्तैव वन्दसे चन्द्रम् ।
वयमिन्दुवञ्चितदृशो निचुलितदोलाविहारिण्यः ॥ २९७ ॥

**दुर्गतगेहिनीति** । दरिद्रकामिनि । दुर्गतपदेनोदरदरीभरणायेतस्ततः सर्वदा संचरणशीलत्वं व्यज्यते । तेन च जारानयनसौकर्यम् । जर्जरम् । एवं च कामुकागमनयोग्यत्वं व्यज्यते । यन्मन्दिरं तत्र निद्रितैव । एवं चायासाभावो व्यज्यते । चन्द्रम् । एवं च संतापोपशामकत्वं ध्वन्यते । तेन चावश्यदर्शनीयत्वम् । वञ्चितपदेनातिपश्चात्तापवत्त्वमावेद्यते । निचुलिताच्छादिता या दोला तया यो विहारस्तच्छालिन्यः । विहारिण्य इत्यनेन बहिर्गमनेऽप्यस्माकं निर्बन्ध इति ध्वन्यते । एवं चैतादृशास्मदीयभाग्यात्तव तादृशदारिद्र्यमेव सम्यगिति । तेन चास्माकमेतद्भाग्यं न सुखदमिति व्यज्यते ॥

त्वं न तथा चतुरेति वादिनीं काचित्कांचिद्वक्ति—

दीपदशा कुलयुवतिर्वैदग्ध्येनैव मलिनतामेति ।
दोषा अपि भूषायै गणिकायाः शशिकलायाश्च ॥ २९८ ॥

**दीपेति** । दीपदशा वर्तिः कुलाङ्गना च । विशेषदग्धभावेन चातुर्येण च । मलिनतां कज्जलादिमत्त्वं पापवत्त्वं च । दोषा अनुचितकारित्वादयः, दोषा रात्रिः ॥

सखी नायिकां वक्ति—

दीर्घगवाक्षमुखान्तर्निपातिनस्तरणिरश्मयः शोणाः ।
नृहरिनखा इव दानववक्षः प्रविशन्ति सौधतलम् ॥ २९९ ॥

**दीर्घेति** । दीर्घपदेन प्रकाशसंपादकत्वं ध्वन्यते । गवाक्षो वातायनं तन्मुखनिःसृताः शोणाः । प्रातःकालीनत्वादिति भावः । सूर्यकिरणा नृसिंहनखा हिरण्यकशिपुवक्षःस्थलमिव सौधतलं प्रविशन्ति । नृहरिनखतुल्यताप्रतिपादनेन प्राणापहारसमदुःखदत्वं ध्वन्यते । एवं च सूर्योदयः संवृत्तः, अत इतो निःसारणीयः प्रिय इति व्यज्यते । अत्र नृहरिपदसांनिध्याद्दानवपदं हिरण्यकशिपुं प्रतिपादयति ॥

सखी नायिकां स्तौति—

दरतरलेऽक्षणि वक्षसि दरोन्नते तव मुखे च दरहसिते ।
आस्तां कुसुमं वीरः स्मरोऽधुना चित्रधनुषापि ॥ ३०० ॥

**दरेति** । अक्षणि नेत्रे ईषच्चञ्चले सति, तवेषदुन्नमिते वक्षसि, मुखे च किंचिद्धसितवति सति । एवं चाङ्कुरितयौवनात्वेन मुग्धात्वं द्योत्यते । कुसुमं पुष्पमास्ताम् । न किंचिदित्यर्थः । किं तु स्मरो वीरश्चित्रधनुषापि । अपिना शरसंग्रह आस्ताम् । एवं च कुसुमादेरनर्थकत्वेऽपि त्वदीयदरतरलनेत्रादिभिरेव चित्रधनुष्मानस्तु स्मर इति व्यज्यते । 'दरतरलेक्षिणि' इति पाठे संबुद्धिः । अथवा हे चञ्चलेक्षिणि, तव वक्षसीषदुन्नमिते, वदने चेषद्धसितशालिनि सति पुष्पमास्तां चित्रधनुषाप्यालेख्यगतधनुषापि स्मरोऽधुना तवैतादृशयौवनकाले वीरः । एवं च कुसुमस्य कार्याक्षमत्वेन तद्रूपधनुषा स्मरस्य वीरत्वे न किंचिद्दार्ढ्यमधुना त्वालेख्यागतधनुषापि स्मरस्य जगज्जयः सुकर इति भाव इत्यर्थः । यद्वा वीरोऽपि स्मरश्चित्ररूपधनुषाप्यास्ताम् । एवं चैतादृशरूपवत्या भवत्यैव मदनेन विजयः कर्तुं शक्यः । अतो मदनप्राक्तनधनुर्बाणाश्चित्रन्यस्ता इवानर्थकाः सन्त्विति ध्वन्यते । अथवा कुसुमं रजः । 'अपिः' अवधारणार्थकोऽधुनेत्यत्रान्वेति । एवं च त्वदीयैतादृशयौवनप्रादुर्भाव एव विजयातिशयसाधनभूतया त्वया मदनधनुरनर्थकं जातम्, किमु वाच्यं पुष्पोद्गमोत्तरमिति द्योत्यते ॥

नायकसखी नायकं वक्ति—

दुष्टसखीसहितेयं पूर्णेन्दुमुखी सुखाय नेदानीम् ।
राकेव विष्टियुक्ता भवतोऽभिमताय निशि भवतु ॥ ३०१ ॥

**दुष्टसखीति** । पूर्णेन्दुवन्मुखं यस्याः । पक्षे पूर्णेन्दुरेव वदनं यस्याः । दुष्टसखीसहितेयं नायिका भद्रायुतपौर्णमासीवाधुना । दिन इत्यर्थः । तवाभिप्रायविषयीभूताय सुखाय निशि भवतु । यथा दिन एव भद्राया अतिक्रान्तत्वात्पूर्णिमा निशि कार्यार्हा तथा सख्या अन्यत्र रात्रावासक्तत्वयैतत्सांनिध्याभावेनावश्यं रात्रौ त्वदुपयोगायेयं भविष्यतीति द्योत्यते ॥

काचित्कांचिद्वक्ति—

दलिते पलालपुञ्जे वृषभं परिभवति गृहपतौ कुपिते ।
निभृतनिभालितवदनौ हलिकवधूदेवरौ हसतः ॥ ३०२ ॥

**दलित इति** । दलित इतस्ततः कृते सति कोपवति गृहपतौ हलिके वृषभं

ताडयति सति। अनेनैव पलालं नाशितमिति धियेति भावः। गुप्तपरस्परकृतावलोकनौ। निभृतपदमन्यज्ञानभीतिमावेदयति। हलिकाङ्गनादेवरौ। देवरो भर्तुः कनिष्ठभ्राता। देवरशब्दस्य ससंबन्धिकतया तदीयत्वं लभ्यते। एवं चैतादृक्कार्यकरणानर्हत्वं ध्वन्यते। हसतः। अस्मत्सुरतविमर्दवशात्पलालपुञ्जस्यैतादृश्यवस्थामविज्ञाय निरपराधिनं वृषभमयं ताडयतीति धियेति भावः। 'पथिकवधू–' इति पाठे देवरेण तन्मातृगृहानयनावसर इदं कृतमिति काचित्कंचिद्वक्ति। एवं चैतादृशाह्वानमनुचितमिति व्यज्यते॥

महद्भिरेव स्वप्रतापः प्रदर्शनीयः, न लघुभिरिति कश्चिद्वक्ति—

दीप्यन्तां ये दीप्त्यै घटिता मणयश्च वीरपुरुषाश्च।
तेजः स्वविनाशाय तु नृणां तृणानामिव लघुनाम॥ ३०३॥

**दीप्यन्तामिति**। घटिता विधातृनिष्पादिताः॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता दकारव्रज्या।

---

धकारव्रज्या।

कस्याश्चित्सखी कंचिदन्योक्त्या वक्ति—

धूमैरश्रु निपातय दह शिखया दहन मलिनयाङ्गारैः।
जागरयिष्यति दुर्गतगृहिणी त्वां तदपि शिशिरनिशि॥३०४॥

**धूमैरिति**। हे दहन। अनागमनादिना संतापकत्वात्सामर्थ्यविशेषवत्त्वाद्वेति भावः। दुर्गतगृहिणीत्यनेन सुरतसौख्याभावो द्योत्यते। शिशिरनिशीत्यनेन यथेच्छसुरतयोग्यत्वं निशि ध्वन्यते। एवं च त्वदीयदुष्टव्यवहारेणाश्रुसंतापमालिन्यजननेऽपि त्वां सा न त्यक्ष्यतीति ध्वन्यते॥

सखी नायिकामुपदिशति—

धैर्यं निधेहि गच्छतु रजनी सोऽप्यस्तु सुमुखि सोत्कण्ठः।
प्रविश हृदि तस्य दूरं क्षणधृतमुक्ता स्मरेषुरिव॥ ३०५॥

**धैर्यमिति**। निधेहि कुरु। तस्य हृदि दूरं प्रविश। एवंप्रकारेण सोऽप्यत्यन्तासक्तो भावीति ध्वन्यते। क्षणधृतमुक्तात्वेनातिभेदकत्वं द्योत्यते। 'इषुर्द्वयोः' इत्यमरः॥

धवलनखलक्ष्म दुर्बलमकलितनेपथ्यमलकपिहिताक्ष्याः।
द्रक्ष्यामि मदवलोकद्विगुणाश्रु वपुः पुरद्वारि॥ ३०६॥

**धवलेति**। श्वेतनखचिह्नम्। पुराणत्वादिति भावः। दुर्बलम्। विरहक्षीणत्वादिति भावः। अकलितभूषणम्। असामर्थ्यादिति भावः। चूर्णकुन्तलाच्छादितनयनायाः संस्काराभावादिति भावः। वपुर्मद्विलोकनेन द्विगुणाश्रु। प्रेमभरादिति भावः। पुरद्वारि। अत्यन्तविरहेण धैर्याभावादिति भावः। द्रक्ष्यामीति काकुः। वैदेशिकाशंसनमेतत्॥

असतां धर्मारम्भोऽप्यनर्थहेतुरिति कश्चिद्वक्ति—

धर्मारम्भेऽप्यसतां परहिंसैव प्रयोजिका भवति।
काकानामभिषेकेऽकारणतां वृष्टिरनुभवति॥ ३०७॥

**धर्मेति**। असाधूनां धर्मारम्भेऽपि। अपिनाधर्मारम्भकालीनवार्ता किं वक्तव्येति व्यज्यते। परहिंसैव प्रयोजिका भवति। परहिंसामुद्दिश्यैवासतां धर्मारम्भ इति भावः। अत्र दृष्टान्तमाह—काकानां स्नाने वृष्टिरकारणतां कारणाभावत्वं प्राप्नोति। काकैः स्नाने कृते वृष्टिर्न भवतीति वृद्धव्यवहारः॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता धकारव्रज्या।

---

नकारव्रज्या।

कश्चित्कांचित्संकेतं वक्ति—

नीरावतरणदन्तुरसैकतसंभेदमेदुरैः शिशिरे।
राजन्ति तूलराशिस्थूलपटैरिव तटैः सरितः॥ ३०८॥

**नीरेति**। नद्यो जलन्यूनतयोच्चावचं यत्सैकतं तत्संघटनमांसलैः। तूलस्य कार्पासस्य पङ्क्तयो येषु तादृशस्थूलपटैरिव तीरैः शिशिरे राजन्ति। एवं च शिशिरे शीतबाहुल्येनान्यजनागमनशङ्काभावेनोच्चावचसैकतवत्तयान्यानवलोकनीयत्वेन वायुनिवारकतया स्वस्य शीतबाधाजनकत्वेन च तूल्युतस्थूलपटोत्प्रेक्षया मृदुलस्पर्शवत्ताप्रतिपादनेन स्वतःसिद्धशय्यासत्त्वेन च सरित्तीरमेव संकेतस्थलमिति व्यज्यते॥

कश्चित्कांचिदन्योक्त्या वक्ति—

निजकायच्छायायां विश्रम्य निदाघविपदमपनेतुम्।
बत विविधास्तनुभङ्गीर्मुग्धकुरङ्गीयमाचरति ॥ ३०९ ॥

**निजेति**। स्वशरीरच्छायायां विश्रान्तिमासाद्य घर्मविपत्तिं दूरीकर्तुम्। बतेति। खेदे। इयं मुग्धकुरङ्गी विविधशरीरचेष्टाः करोति। परं तु न तापोपशमनं भावीति भावः। एवं च स्वदेहच्छायारूपस्वाधीननायकमात्रावलम्बनेन मदनसंतापनिवारणाय विविधचेष्टाकरणेऽपि मूढनायिकायास्तव न तन्निवारणम्, अतोऽन्यन्नायकावलम्बनमेव मदनसंतापनिवारकमिति द्योत्यते। यद्वा सख्युपदेशोऽयम्। जातिवर्णनमेतदित्यृजवः॥

कार्येणैव कारणप्रतिष्ठेति काचित्कांचिद्वक्ति—

न हसन्ति जरठ इति यद्बल्लववनिता नमन्ति नन्दमपि।
सखि स यशोदातनयो नित्यं कन्दलितकंदर्पः ॥ ३१० ॥

**न हसन्तीति**। यद्यस्मात्कारणात्स प्रसिद्धो यशोदातनयः कृष्णो नित्यमभिवर्धमानमदनः, अतो हे सखि, बल्लववनिता नन्दं जरठ इति न हसन्ति। न केवलं हास्याभावः, अपि तु प्रणमन्ति। एवं च कृष्णस्य कंदर्पशालित्वावगमेन नन्देऽपि जरठाभावनिर्णयो मूढस्त्रीणामपि तत्र किमु वाच्यं चतुराङ्गनानां कार्येण कारणस्वरूपज्ञानमिति व्यज्यते। यद्वा स्वकार्यमेव साधनीयमिति कांचित्काचिदुपदिशति। एवं च हास्यार्हेऽपि हास्याकरणेन प्रत्युत प्रणामादिना नन्दं परितोष्य मदनातिशयशालिश्रीकृष्णाद्यनुसरणं बल्लववनिता अपि कुर्वन्ति। त्वं त्वत्यन्तचतुरात एवमेव स्वकार्यं साधयेति व्यज्यते। अथवा नायकार्थं श्वशुरादिसमाधानं त्वया विधेयमिति सखी श्वशुरादिदुःखवर्तीं नायिकामन्यनिदर्शनव्याजेनोपदिशति। एवं च परपुरुषीयरतिकलाप्रावीण्यमालक्ष्यैवमाचरन्त्यन्यास्तत्र स्वीयनायकपरितोषाय किं किं न विधेयमिति व्यज्यते॥

सर्वात्मना स्त्रियः संरक्षणीया इति कश्चिद्वक्ति—

नीता स्वभावमर्पितवपुरपि वाम्यं न कामिनी त्यजति।
हरदेहार्धग्रथिता निदर्शनं पार्वती तत्र ॥ ३११ ॥

**नीतेति**। स्वसदृशीकृतापि दत्तस्वशरीरापि। एवं चालंकरणादिदानमेतदग्रेऽकिंचित्करमिति भावः। कामिनी वाम्यं कौटिल्यं वामशरीरभागित्वं च न व्रजति।

अत्र दृष्टान्तमाह—हरेत्यादि । ग्रथितपदेन निःसारणानर्हत्वं ध्वन्यते । एवमन्यासां का वार्तेति ध्वन्यते ॥

काचित्कंचिद्वक्ति—

नागरभोगानुमितस्ववधूसौन्दर्यगर्वतरलस्य ।
निपतति पदं न भूमौ ज्ञातिपुरस्तन्तुवायस्य ॥ ३१२ ॥

**नागरेति** । नगरसंबन्धी । एवं च चातुर्यवत्त्वं ध्वन्यते । तेन च सुरूपाङ्गनासङ्गकारित्वम् । तरलस्य चञ्चलस्य कुविन्दस्य स्वकीयज्ञात्यग्रे भूमौ पदं न निपतति । गर्ववशादिति भावः । एवं चातिमूर्खत्वं व्यज्यते । एवं चैतादृशजातीयानां चतुरपुरुषेण स्वाङ्गनाभोगे क्रियमाणे नेर्ष्या संजायते, अतस्त्वया सुखेनात्रागन्तव्यमिति ध्वन्यते ॥

एतादृशेन सह संगतिर्न कार्येति सखी वक्ति—

निपतति चरणे कोणे प्रविश्य निशि यन्निरीक्षते कस्तत् ।
सखि स खलु लोकपुरतः खलः स्वगरिमाणमुद्गिरति ॥३१३॥

**निपततीति** । कोणे प्रविश्य । एवं चागणनीयत्वं व्यज्यते । रात्रौ चरणे प्रणमति तत्को निरीक्षते । न कोऽपीति भावः । स्वगरिमाणमहमेतादृशो गुणवान्यदियमत्यन्तासक्ता मयीत्यादि । यद्वा नायिकोक्तिरियम् ॥

समीचीनस्य कोपो न भवति । भवति चेत्तदानर्थावह एव स इति कश्चिद्वक्ति—

न विमोचयितुं शक्यः क्षमां महान्मोचितो यदि कथंचित् ।
मन्दरगिरिरिव गरलं निवर्तते ननु समुत्थाप्य ॥ ३१४ ॥

**नेति** । महान्श्रेष्ठः । पक्षे महापरिमाणशाली । क्षमां शान्तिं भूमिं च । ननु निश्चितम् । 'न तु' इति पाठे नञि काकुः । एवं च महतः कोपो नोत्पादनीय इति व्यज्यते ॥

किंचित्समीचीनावलम्बने दुष्प्रभुसेवा न विधेयेति कश्चिदुपदिशति—

नियतैः पदैर्निषेव्यं स्खलितेऽनर्थावहं समाश्रयति ।
संभवदन्यगतिः कः संक्रमकाष्ठं दुरीशं च ॥ ३१५ ॥

**नियतैरिति** । नियतैः पदैर्व्यवहारमार्गैश्चरणविन्यासैश्च । स्खलिते भ्रमे चरणच्युतौ वा । गतिराश्रयो गमनं च । संक्रमकाष्ठं नद्यादौ पारगमनायोभयतीरोपर्यकदारु स्थाप्यते तत् ॥

समीचीनजनं विना कवीनां न शोभा भवतीति कश्चिद्वक्ति—

निजपदगतिगुणरञ्जितजगतां करिणां च सत्कवीनां च।
वहतामपि महिमानं शोभायै सज्जना एव ॥ ३१६ ॥

**निजपदेति।** चरणगतिः सुप्तिङन्तज्ञानं च। तद्रूपो यो गुणः। महिमानं महत्परिमाणं प्रतिष्ठां च। सज्जना भूषणसंपादनाः। 'कल्पनासज्जने समे' इत्यमरः। पक्षे समीचीनजनाः ॥

काचित्कस्यचित्प्रेमाणं स्तौति—

नोत्तपते न स्नेहं हरति न निर्वाति न मलिनो भवति।
तस्योज्ज्वलो निशि निशि प्रेमा रत्नप्रदीप इव ॥ ३१७ ॥

**नोत्तपत इति।** नोत्तपते नाधिकः। सम एवेत्यर्थः। पक्षे न दाहकः। न प्रीतिनाशकः। पक्षे न तैलनाशकश्च। न नश्यति। न मलिनम्। दुःखसंपादकमित्यर्थः। पक्षे न कज्जलं वमति। उज्ज्वलो मालिन्यशून्यः। अत्र मालिन्यजनकत्वाभावप्रतिपादनेनैव वैमल्यार्थसिद्धावेतत्कथनं न तथोचितमित्याभाति। निशीत्येतावता दिवा स्नेहाप्रदर्शनेन लोकगोपनादिचातुर्यवत्तया चिरकालीनसंगतिनिर्वाहकत्वं व्यज्यते ॥

काचित्कस्मिंश्चित्स्वासक्तिं कांचिद्वक्ति—

निहितान्निहितानुज्झति नियतं मम पार्थिवानपि प्रेम।
भ्रामं भ्रामं तिष्ठति तत्रैव कुलालचक्रमिव ॥ ३१८ ॥

**निहितानिति।** निहितान्सख्यादिप्ररोचनया प्रेमारूढान्पार्थिवानपि भूपतीनपि। एवं चासक्त्यर्हत्वं व्यज्यते। पक्षे पृथ्वीविकारान्घटादीन्। मम प्रेम नियतम्। एवं च नान्यथाभाव आशङ्कनीय इति भावः। त्यजति। भ्रान्त्वा कुलालचक्रमिव तस्मिन्नेव तिष्ठति ॥

कश्चिन्नायिकासखीं वक्ति—

निर्भरमपि संभुक्तं दृष्ट्या प्रातः पिबन्न तृप्यामि।
जघनमनंशुकमस्याः कोक इवाशिशिरकरबिम्बम् ॥ ३१९ ॥

**निर्भरमिति।** अत्यन्तं संभुक्तमपि विगतवसनमस्या जघनं सूर्यबिम्बं कोक इव दृष्ट्या प्रातः। एवं च तथाविधरतविरतावप्येवं गतिस्तत्र दिनक्षणवृद्धौ का वाच्येति व्यज्यते। सादरावलोकनं कुर्वन्न तृप्यामि ॥

कश्चिद्वयस्यं वक्ति—

निविडघटितोरुयुगलां श्वासोत्तब्धस्तनार्पितव्यजनाम् ।
तां स्निग्धकुपितदृष्टिं स्मरामि रतनिःसहां सुतनुम् ॥ ३२० ॥

**निविडेति** । अत्यन्तसंघटितोरुद्वयाम् । सुरतक्लेशादिति भावः । निःश्वासस्तब्धस्तनदत्तव्यजनाम् । खेदापनोदार्थं गृहीतव्यजनस्य चालनासामर्थ्यादिति भावः । स्निग्धत्वं च सौख्यात्कुपितत्वं च क्लेशवशादिति भावः । यद्वा रतनिःसहाङ्गत्वाद्वसनाग्रहादूरुघटनं प्रथमगृहीतव्यजनेन स्तनपिधानमिति भावः ॥

गुणेष्वत्यन्तं यत्नो विधेय इति कश्चित्कंचिदुपदिशति—

निर्गुण इति मृत इति च द्वावेकार्थाभिधायिनौ विद्धि ।
पश्य धनुर्गुणशून्यं निर्जीवं तदिह शंसन्ति ॥ ३२१ ॥

**निर्गुण इति** । गुणाश्चातुर्यादयः । एकार्थप्रतिपादकौ । अमुमेवार्थमर्थान्तरन्यासेन द्रढयति—गुणशून्यम् । 'मौर्वी ज्या शिञ्जिनी गुणः' । निर्जीवं निर्गता जीवा यस्मात्तम् । 'जीवा ज्या शिञ्जिनीत्यपि' इत्यभिधानात् । यस्माद्वदन्ति । एवं च निर्गुणजीवनापेक्षया मरणमेव सम्यगिति द्योत्यते ॥

नायिका नायकचित्तं व्याक्षिपति—

निजसूक्ष्मसूत्रलम्बी विलोचनं तरुण ते क्षणं हरतु ।
अयमुद्गृहीतबडिशः कर्कट इव मर्कटः पुरतः ॥ ३२२ ॥

**निजेति** । तरुणेत्यनेन स्वतो दृढत्वेऽप्येतादृशचित्तव्याक्षेपेणातिदार्ढ्यं भावीति व्यज्यते । 'वडिशं मत्स्यवेधनम्' इत्यमरः । कर्कटः । 'स्यात्कुलीरः कर्कटकः' इत्यमरः । मर्कटो लूता । 'लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः' इत्यमरः । यद्वात्रागतं स्थितं मयेति वादिनं नायकं नायिका वक्ति । एवं च सूक्ष्मत्वेन त्रुटनार्हत्वेऽपि तदभावान्न त्वत्संचरणमिति व्यज्यते । अथवा केनाप्यत्र नागम्यत इति संकेतस्थलमिदमिति ध्वन्यते ॥

ग्रामीणवसतिशालितयेयं न तथा गुणशालिनीति विभावयन्तं कंचन नायिकासखी वक्ति—

नागर गीतिरिवासौ ग्रामस्थित्यापि भूषिता सुतनुः ।
कस्तूरी न मृगोदरवासवशाद्विस्रतामेति ॥ ३२३ ॥

**नागरेति** । हे नागर, असौ सुतनुर्गीतिरिव । ग्रामो नगरादिभिर्भिन्नः । पक्षे

'ग्रामः स्वरसमूहः स्यान्मूर्च्छनादेः समाश्रयः' इति लक्षणलक्षितः। तत्र स्थित्यापि। विस्रतां दौर्गन्ध्यम्। एवं चेयमत्यन्तलक्षणशालिनी, अतस्त्वमस्यामासक्तिं कुर्विति व्यज्यते॥

कुरवककुसुमशय्यायां सुरतं विधायागतां नायिकां सखी वक्ति—

नखलिखितस्तनि कुरबकमयपृष्ठे भूमिलुलितविरसाङ्गि।
हृदयविदारणनिःसृतकुसुमास्त्रशरेव हरसि मनः॥ ३२४॥

**नखेति**। कुरवकप्रचुरपृष्ठे। भूमौ लुलितानि विरसान्यङ्गानि यस्यास्तत्संबुद्धिः। निःसृताः। पृष्ठमार्गेणेति भावः। नैतानि पृष्ठलग्नानि कुरवककुसुमानि, किं तु हृदयलग्नाः पृष्ठविनिर्गता मन्मथबाणा इति भावः। एवं च मां प्रत्येतद्गोपनमनुचितमिति द्योत्यते॥

सर्वभार्यासु समयता वर्तितव्यमिति कश्चित्कंचिदुपदिशति—

नीता लघिमानमियं तस्यां गरिमाणमधिकमर्पयसि।
भार इव विषमभार्यः सुदुर्वहो भवति गृहवासः॥ ३२५॥

**नीतेति**। इयं लघुतां प्रापिता तस्यामधिकं गौरवं करोषि। विषमस्त्रीको विषमे परस्परविरुद्धे स्त्रियौ यत्र। विषमभृतश्च भार इव। गृहवासः सुदुर्वहः सुतरां दुर्वहः। 'अर्पयति' इति पाठे लाघवं नीतेयं तस्यामतिगौरवं करोति। एवं च सा लघिमानं नीतैतस्यां गरिमाणमर्पयति। एवमेका गरिमाणं नीतान्यस्यां लाघवमापादयतीति भार इव सुदुर्वहो विषमभार्यो गृहवास इति कश्चित्सखायं वक्ति। एवं च समतासंपादनमशक्यमिति भावः॥

अकस्मादेवानेनागत्य कथमिदमकारीति वादिनीं नायिकां सखी वक्ति—

न च दूती न च याच्ञा न चाञ्जलिर्न च कटाक्षविक्षेपः।
सौभाग्यमानिनां सखि कचग्रहः प्रथममभियोगः॥ ३२६॥

**न चेति**। सुभगाभिमानशालिनायकानां नायिकास्वाधीनतायां न दूतीप्रेषणाद्यपेक्षितम्, किं तु केशग्रह एव प्रथमं वश्यतासंपादनोपाय इति कश्चिद्वक्ति—

मन्मथावस्थायां न किंचित्परिस्फुरतीति कश्चिद्वक्ति—

निशि विषमकुसुमविशिखप्रेरितयोर्मौनलब्धरतिरसयोः।
मानस्तथैव विलसति दंपत्योरशिथिलग्रन्थिः॥ ३२७॥

निशीति। विषमत्वेन दुःसहत्वं ध्वन्यते॥

चारवनितासंगतिरनुचितेति कश्चित्कंचिदुपदिशति—

निजगात्रनिर्विशेषस्थापितमपि सारमखिलमादाय ।
निर्मोकं च भुजंगी मुञ्चति पुरुषं च वारवधूः ॥३२८॥

**निजेति** । स्वशरीरसमतया स्थापितम् । एवं चातिप्रियत्वमावेद्यते । समग्रं सारभूतं वस्तु गृहीत्वा कञ्चुकं सर्पिणीव पुरुषं वाराङ्गना त्यजति । कञ्चुकवन्निःसारतां विधाय त्यजति वेश्या, अतो न तत्संगतिरुचितेति व्यज्यते ॥

सखी नायिकां वक्ति—

नृत्यश्रमघर्मार्द्रं मुञ्चसि कृच्छ्रेण कञ्चुकं सुतनु ।
मकरन्दोदकजुष्टं मदनधनुर्वल्लिरिव चोलम् ॥ ३२९ ॥

**नृत्येति** । नर्तनश्रमेण यः स्वेदस्तेनार्द्रं कञ्चुकं क्लेशेन त्यजसि । पुष्परसप्रादुर्भावाक्रान्तं चोलं मदनधनुर्वल्लिरिव । एवं च सुरतश्रमे किं त्वया विधेयमिति परिहासो व्यज्यते ॥

नायिकादुश्चरितं विज्ञाय सखी वक्ति—

नाहं वदामि सुतनु त्वमशीला वा प्रचण्डचरिता वा ।
प्रेमस्वभावसुलभं भयमुदयति मम तु हृदयस्य ॥ ३३० ॥

**नाहमिति** । हे सुतनु, त्वं शीलशून्या प्रचण्डचरिता वेति नाहं वदामि । तु पुनर्मम हृदयस्य प्रीतिस्वभावसुलभं भयमुदेति । एवं च कदाचित्केनचिदितीदं ज्ञातं चेत्तदा कथं भविष्यतीति त्वद्विषयकप्रीतिमत्तया मम तु भयमुत्पद्यत इति भावः । एवं च प्रीत्यभावेऽन्यस्य जाताप्यसमीचीनता न दुःखदेति ध्वन्यते । तेन चैवं न विधेयमिति ॥

दूती कयाचन संगमयितुं कंचन नायकं वक्ति—

न निरूपितोऽसि सख्या नियतं नेत्रत्रिभागमात्रेण ।
हारयति येन कुसुमं विमुखे त्वयि कण्ठ इव देवे ॥ ३३१ ॥

**नेति** । सख्या नायिकया नेत्रत्रिभागमात्रेण कटाक्षमात्रेण न निरूपितोऽसि न विलोकितोऽसि । एवं चान्तःकरणेन सा त्वय्यत्यन्तमनुरागभागिनी संवृत्तेति ध्वन्यते । तेन च दैवादवलोकितोऽहं तयेति त्वया सर्वात्मना न मन्तव्यमिति तदनुरागमेव विवृणोति । येन कारणेन देव इव त्वयि विमुखे कृतपरावृत्तौ सहोपमेयम् । एवं च त्वद्वैमुख्ये देववैमुख्यं जातमिति भावः । एवं च त्वद्वैमुख्यसंपा-

दनद्वारैव देवप्रातिकूल्यमिति देवाधिकस्त्वं तस्या इति ध्वन्यते। कण्ठे। स्थितमिति भावः। कुसुमं हारयति दूरीकारयति। एवं च त्वत्पराङ्मुखताविचारसमयसंजातविरहवशात्परित्यक्तहारस्य दैवादवस्थितैककुसुमस्य न स्वतो दूरीकरणमसामर्थ्यात्, अतोऽतिविरहक्षीणतातिशयवत्तयातिदूयमाना नोपेक्षणीयेयं त्वयेति ध्वन्यते। एवं च मुखपरावृत्तिमात्रादेवमवस्था तस्याः का वाच्या दिवसपरिकलनायामिति कुसुमं कण्ठे हारत्वेन करोति। एवं च त्वत्परावृत्तिसमयमेवं कार्श्यं तस्याः संवृत्तमित्यावेद्यत इत्यप्याहुः॥

कथमनया त्वं ताडित इति वादिनं कश्चित्समाधत्ते—

नखदशनमुष्टिपातैरदयैरालिङ्गनैश्च सुभगस्य।
अपराधं शंसन्त्यः शान्तिं रचयन्ति रागिण्यः॥ ३३२॥

**नखेति**। अत्र पातशब्देन संयोगो लक्ष्यते। एवं च दन्तनखक्षताभिपातैरित्यर्थः। अदयैः। गाढैरित्यर्थः। आलिङ्गनैः। सुभगस्य, न त्वभाग्यस्य। अपराधम्। एवं चैकापराध एतादृशम्, किं पुनर्बह्वपराध इति भावः। शंसन्त्यः। एवं च न वास्तवापराधस्थापनमिति भावः। अनुरागवत्यः। एवं चान्यासामन्यादृशी रीतिरिति भावः। शान्तिं क्रोधोपशमं रचयन्ति। एवं च नायककर्तृककोपपरिहारापेक्षापि नेति भावः। एवं च यस्यैवात्यन्तमासक्ता नायिका तस्यैवैतादृशी रीतिः, नान्यस्येति व्यज्यते॥

कस्यचिदासक्त्या गर्वितां कांचित्काचिदन्योक्त्या वक्ति—

न गुणे न लक्षणेऽपि च वयसि च रूपे च नादरो विहितः।
त्वयि सौरभेयि घण्टा कपिलापुत्रीति बद्धेयम्॥ ३३३॥

**नेति**। गुणे बहुदोग्धृत्वादौ कलाकौशले च। लक्षणे सामुद्रिकोक्तादौ। तारुण्ये। रूपे शुक्लादौ सौन्दर्ये च। आदरो न विहितः। सौरभेयि, त्वयि कपिलायाः पुत्रीति हेतोरियं घण्टा निबद्धा। एवं च त्वन्मातुर्गुणवत्त्वादिना प्रसिद्ध्या तज्जन्यत्वमात्रेणैवं वृत्तमिति किं गर्वमावहसीति व्यज्यते॥

निष्कारणमेव कलहादिकं भवति भवद्गेहे किमिदमिति वादिनं कश्चिद्वक्ति—

निष्कारणापराधं निष्कारणकलहरोषपरितोषम्।
सामान्यमरणजीवनसुखदुःखं जयति दांपत्यम्॥ ३३४॥

**निरिति**। कारणं विनैवापराधो यस्य। कारणं विनैव कलहक्रोधसंतोषा यस्य।

साधारणं मरणं जीवनं सुखं दुःखं वा यस्य। जायापतिभावो दांपत्यं सर्वोत्कर्षेण वर्तते। एवं चैतादृग्यत्र भवति दांपत्यं तदपकृष्टमिति व्यज्यते। तेन च स्वस्मिन्नाधिक्यम्। एवं चातिशयितप्रेमवत्तया क्षणक्षण एवापराधसंभावना तद्विलयश्चेति ध्वन्यते। सामान्यमित्यादिनैकात्म्यमभिव्यज्यते॥

कश्चिदेकदा प्राप्तसङ्गां तदुत्तरं च किंचिन्निमित्तविच्युतसङ्गां कांचिद्वक्ति—

न प्राप्यसे कराभ्यां हृदयान्नापैषि वितनुषे बाधाम्।
त्वं मम भग्नावस्थितकुसुमायुधविशिखफलिकेव॥ ३३५॥

**नेति**। भग्ना सत्यवस्थिता या मदनशराग्रलोहशलाका तद्वत्त्वं हस्तगता न भवसि। हृदयान्न निःसरसि। पीडां च विस्तारयसि। भग्नावस्थितेत्यनेन करग्रहोद्यमे भीतिरावेद्यते। कुसुमायुधपदेन कोमलाङ्गीत्वं तेन चासक्तियोग्यत्वं ध्वन्यते। विशिखफलिकेत्यनेन तीक्ष्णप्रतापशालित्वं व्यज्यते। एवं च त्वदप्राप्त्याहमतिदुःखित इति ध्वन्यते॥

ममाज्ञाकारी मन्नायक इति वादिनीं कांचित्काचिद्वक्ति—

नाथेति परुषमुचितं प्रियेति दासेत्यनुग्रहो यत्र।
तद्दांपत्यमितोऽन्यन्नारी रज्जुः पशुः पुरुषः॥ ३३६॥

**नाथेति**। यत्र नाथेति संबोधनमतिनिष्ठुरम्। प्रियेत्युचितम्। यथा कस्यचिदागतस्य किंचिदुचितं क्रियते तथा प्रियेति संबोधनमुचितमित्यर्थः। दासेत्यनुग्रहः। आत्मत्वेनाङ्गीकार इत्यर्थः। एवं चाभिन्नप्रायतया नोपचारादिर्यत्रेति भावः। तद्दांपत्यं जायापतिभावः। इतोऽन्यन्नारी रज्जुः। एवं चाकर्षणयोग्यत्वं ध्वन्यते। पुरुषः पशुः। एवं च रसानभिज्ञत्वं ध्वन्यते। यद्वा नायकस्येयमुक्तिः॥

पूर्वनायिकासखीं प्रति नायको वक्ति—

निहितायामस्यामपि सैवैका मनसि मे स्फुरति।
रेखान्तरोपधानात्पत्राक्षरराजिरिव दयिता॥ ३३७॥

निहितायामिति। अस्यां पुरोवर्तिन्यां मनसि निहितायामपि सैव त्वन्नायिकैवैका दयिता मे मनसि स्फुरति। एवं च तस्यामेव ममासक्तिरिति व्यज्यते। रेखान्तरविधानात्पत्ररूपाक्षरपङ्क्तिरिव। एवं च स्थिरत्वं ध्वन्यते॥

कयाचन किंचिदवलोकितः कश्चित्तां सपरिहासं वक्ति—

निधिनिक्षेपस्थानस्योपरि चिह्नार्थमिव लता निहिता।
लोभयति तव तनूदरि जघनतटादुपरि रोमाली॥ ३३८॥

**निधीति**। निधेः। 'निधिर्ना शेवधिर्भेदाः' इत्यमरः। निक्षेपस्थानं तदुपरि चिह्नार्थम्। विस्मरणाभावायेति भावः। निहिता लतेव। हे तनूदरि। एवं च निधिनिक्षेपयोग्यत्वं ध्वन्यते। तव जघनस्य तटात्प्रान्तात्। तटपदेन लतारोपणयोग्यत्वं ध्वन्यते। रोमराजिर्लोभयति। निधिस्थानस्थिताया लोभजनकत्वौचित्यमिति भावः। एवं च जघनाधो निधिनिक्षेपस्थानमस्तीति परिहासो व्यज्यते। यद्वा सगर्भासीति। यत्र हि निधिः स्थाप्यते तच्चिह्नार्थं लतादि क्रियत इति लौकिकम्॥

तस्याः सखी तं वक्ति—

निहितार्धलोचनायास्त्वं तस्या हरसि हृदयपर्यन्तम्।
न सुभग समुचितमीदृशमङ्गुलिदाने भुजं गिलसि॥ ३३९॥

**निहितेति**। निहितार्धलोचनायास्त्वयि किंचित्कटाक्षं कुर्वाणायास्तस्यास्त्वं हृदयपर्यन्तं हरसि। कथमन्यथैतादृशं वचनमिति भावः। सुभग। एवं चान्यादृशवचनानौचित्यं व्यज्यते। ईदृशं समुचितं न। यदङ्गुलिदाने भुजं गिलसि॥

बहवस्तरुणा ममापेक्षां कुर्वन्तीति गर्वशालिनीं कांचित्काचिद्वक्ति—

नीत्वागारं रजनीजागरमेकं च सादरं दत्त्वा।
अचिरेण कैर्न तरुणैर्दुर्गापत्रीव मुक्तासि॥ ३४०॥

**नीत्वेति**। अगारं गृहं नीत्वा। एवं चान्यगृहगमनेन लघुत्वमावेद्यते। आदरसहितमेकं न बहुरात्रिजागरम्। दत्वा तरुणैर्दुर्गापत्रीव शीघ्रं कैर्न मुक्तासि। एवं चैकदिनोत्तरमेव सर्वेषां न तवासक्तिरिति व्यज्यते। तेन च त्वं गुणरहितैव। एवं चैकमात्रासक्तिमत्येव समीचीनेति ध्वन्यते। नवरात्रे बिल्वशाखामष्टम्यामानीय रात्रौ संपूज्य जागरादि विधाय नवम्यां परित्यज्यत इति देशविशेषरीतिः॥

यत्र यत्र यद्यत्सामर्थ्यं तत्र तत्र तवैवेत्यन्योक्त्या कश्चित्कंचिद्वक्ति—

नक्षत्रेऽग्नाविन्दावुदरे कनके मणौ दृशि समुद्रे।
यत्खलु तेजस्तदखिलमोजायितमब्जमित्रस्य॥ ३४१॥

**नक्षत्र इति**। अग्नावग्न्याश्रये। उदरे। अन्नादिपाकतेजसः सत्त्वादिति

भावः । कनके । तैजसत्वादिति भावः । मणौ । प्रकाशकत्वादिति भावः । समुद्रे । वडवानलस्य सत्त्वादिति भावः । यत्तेजस्तदखिलमब्जमित्रस्य । एवं च येन सह विरोधस्तेनैव सह तत्करणमुचितं न त्वन्येनापि सह तत्करणमुचितमिति ज्ञानविशेषशालित्वं ध्वन्यते । ओजायितम् । सामर्थ्यमित्यर्थः ॥

नायिकादूती नायकं वक्ति—

न सवर्णो न च रूपं न संस्क्रिया कापि नैव सा प्रकृतिः ।
बाला त्वद्विरहापदि जातापभ्रंशभाषेव ॥ ३४२ ॥

**न सवर्ण इति** । स पूर्वानुभूतो वर्णः कान्तिः । पक्षे सवर्णकार्यम् । न । न केवलं पूर्वकान्तिहानिः, अपि तु न तत्स्वरूपमपीत्याह—न च रूपम् । पक्षे प्रकृतिप्रत्ययनिष्पाद्यशब्दस्वरूपम् । ननूद्वर्तनादिसंस्कारेण कान्तिर्भविष्यतीत्यत्राह—संस्क्रिया न । पक्षे साधुत्वम् । ननु संस्क्रिया कार्येत्युपदिश्यते न कुतो भवत्येत्यत आह—सा पूर्वानुभूता कापि स्वल्पापि प्रकृतिः स्वभावो नैव । एवं चोपदेशकरणे भीतिरावेद्यते । पक्षे प्रातिपदिकम् । बाला । एवं चाज्ञत्वं तेन च नायके शठत्वं द्योत्यते । त्वत्संबन्धिवियोगविपत्तौ । एवं च विपन्नस्य पूर्वकान्त्याद्यपगच्छतीति भावः । अपभ्रंशभाषाऽसाधुवाक्यम् । यद्वा इवशब्दोऽवधारणार्थकः । अपगतो भ्रंशोऽसमीचीनत्वं यस्या एतादृशी भाषा यस्यास्तादृश्येव संवृत्ता । एवं च त्वद्विरहजनितदुःखेन पूर्वकान्त्याद्यपगमेऽपि त्वद्विषये न कदाप्यसम्यग्वदतीति न तादृशी काप्यन्या सहनशीलेति व्यज्यते । तेन चैतादृश्यामौदासीन्यमत्यन्तानुचितमिति ॥

अलंकारादिकरणेन विलम्बकारिणीं नायिकां संकेतं प्रति सत्वरनिर्गमनाय सखी वक्ति—

न विभूषणे तवास्था वपुर्गुणेनैव जयसि सखि यूनः ।
अवधीरितास्त्रशस्त्रा कुसुमेषोर्मल्लविद्येव ॥ ३४३ ॥

**नेति** । हे सखि । एवं च यथार्हवादार्हत्वं ध्वन्यते । तव । एवं चान्यादृशी गतिरन्यासामिति भावः । एवं चान्याभिर्यद्विधीयते तत्त्वयमपि विधेयमिति मनसि न विधेयमिति व्यज्यते । विशिष्टभूषणे । एवं च सामान्यतो भूषणानि सन्त्येवेति भावः । 'न च' इति तु युक्तः पाठः । आस्थासक्तिः । न । उचितेति शेषः । तत्कार्यस्य नायकवशत्वसंपादनादेः साहजिकवपुर्गुणेनैव संपादनादिति भावः । इद-

मेव द्रढयति—वपुःकान्त्यैव तरुणान्स्वाधीनीकरोषि । अत्र दृष्टान्तमाह—मदनस्य तिरस्कृतास्त्रशस्त्रा मल्लविद्येव । सापि शारीरकर्तव्यतैव जयकर्त्रीति भावः । एवं च मा विलम्बं कुर्विति व्यज्यते ॥

काचिन्नायिका सखीं प्रत्याह—

नेत्राकृष्टो भ्रामं भ्रामं प्रेयान्यथा यथास्ति तथा ।
सखि मन्थयति मनो मम दधिभाण्डं मन्थदण्ड इव ॥३४४॥

**नेत्रेति**। नेत्रेण चक्षुषाकृष्टः। पक्षे गुणेन। 'नेत्रमक्ष्णि गुणेऽपि च' इत्यभिधानात्। भ्रान्त्वा भ्रान्त्वा प्रेयान्। एवं च मनःसंलग्नतायोग्यत्वं व्यज्यते। यथा यथास्ति तथा मन्थदण्डो दधिपात्रमिव मम मनो मन्थयति। एवं च मया कटाक्षित इतस्ततो मत्सविधभ्रममाणस्त्वया सत्वरं संगमनीयो येन मनोदुःखं दूरीभविष्यतीति व्यज्यते ॥

दूती नायकं प्रत्याह—

नानावर्णकरूपं प्रकल्पयन्ती मनोहरं तन्वी ।
चित्रकरतूलिकेव त्वां सा प्रतिभित्ति भावयति ॥ ३४५ ॥

**नानेति**। चित्रलेखकहस्तगतलेखनीवत्सा तन्वी कृशाङ्गी सूक्ष्मा च भित्तौ भित्तौ मनोज्ञं नानाप्रतिमारूपम् । पक्षे नानावर्णा एव नानावर्णकानि तैः कृत्वा रूपं यस्यैतादृशं चित्रं प्रकल्पयन्ती भावयन्ती । एवं च चित्रविलोकनव्याजेन त्वामेव भावयतीति भावः ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता नकारव्रज्या ।

---

पकारव्रज्या ।

कस्याश्चिद्वचनमात्रादेव भीतान्प्रति कश्चिदन्योक्त्या वक्ति—

पथिकासक्ता किंचिन्न वेद घनकलमगोपिता गोपी ।
केलिकलाहुंकारैः कीरावलि मोघमपसरसि ॥ ३४६ ॥

**पथिकेति**। पथिके आसक्ता। घनाः कलमाः श्वेतशालयस्तैर्गोपिता। घनपदेन किंचिद्रक्षणेऽपि ज्ञानायोग्यत्वं व्यज्यते। गोपीत्यनेन स्वतो मौर्ख्यं द्योत्यते। अतः केलिकलासंबन्धिहुंकारैः। एवं च न भवन्निवारणार्थमेते शब्दा इति भावः। कीरावलीत्यनेन वचनपटुत्वं व्यज्यते। वृथापसरसि। एवं च भवद्भिः कलम-

भक्षणं विधेयमिति भावः । एवं चैतस्याः प्रचुरधनवत्याः सापराधत्वाच्च वचनमात्रभीतिमुत्सृज्य किंचिदेतस्याः सकाशाद्ग्राह्यमिति व्यज्यते ॥

नायिकासखी दूतीं प्रत्याह—

प्रणमति पश्यति चुम्बति संश्लिष्यति पुलकमुकुलितैरङ्गैः ।
प्रियसङ्गाय स्फुरितां वियोगिनी वामबाहुलताम् ॥ ३४७ ॥

**प्रणमतीति** । प्रियसंगमसूचकस्फुरणशालिनीं वामबाहुलतां वियोगिनी प्रणमतीत्यादि योजना । एवं च यत्र प्रियसंगमसूचकस्फुरणवदचेतनवामबाहुलतायाः किं किं न क्रियते विरहवत्या तत्र किमु वाच्यं सद्यः प्रियसमागमकारिण्या दूत्या इति भावः । अत एव प्रणामानर्हत्वव्यञ्जकं वामपदमर्थवत् ॥

काचन कंचित्प्रति वक्ति—

प्रविशसि न च निर्गन्तुं जानासि व्याकुलत्वमातनुषे ।
बालक चेतसि तस्याश्चक्रव्यूहेऽभिमन्युरिव ॥ ३४८ ॥

**प्रविशसीति** । हे बालक । एवं च ज्ञानशून्यत्वं व्यज्यते । चक्रव्यूहेऽभिमन्युरिव तस्याश्चेतसि त्वं प्रविशसि । व्याकुलत्वं पीडामातनुषे । निर्गन्तुं न च जानासि । एवं च सा त्वय्यत्यन्तमासक्ता त्वमेवाज्ञत्वमाचरसीति व्यज्यते । यद्वा त्वं व्याकुलतां कुरुषे । एवं चैतस्या हस्तात्तव न निर्गम इत्यावेद्यते ॥

समीचीनानां समीचीनोऽसमीचीनानामसमीचीन एवाश्रय इति कश्चिदन्योक्त्या वक्ति—

पश्यानुरूपमिन्दिन्दिरेण माकन्दशेखरो मुखरः ।
अपि च पिचुमन्दमुकुले मौकुलिकुलमाकुलं मिलति ॥ ३४९ ॥

**पश्येति** । हे सखि, इन्दिन्दिरेण भ्रमरेण । एकत्वमविवक्षितम् । माकन्दस्य । 'माकन्दः सहकारोऽस्त्री' इत्यनुशासनाच्चूतस्य मस्तको मुखरः । अन्यच्च पिचुमन्दस्य । 'पिचुमन्दश्च निम्बः' इत्यमरः । तन्मुकुले मौकुलीनाम् । 'एकदृष्टिश्चिरंजीवी मौकुलिर्द्धिक इत्यपि' इति क्षीरस्वामी । काकानां समूहः । आकुलमिति क्रियाविशेषणम् । मिलति । इदमनुरूपं त्वं पश्य । एवं च यथायोग्य एवाश्रयो भवतीति भावः । यद्वा समीचीनानामन्यादृशरीत्यार्जनमसमीचीनानामन्यादृशरीत्या भवतीति कश्चिदन्योक्त्या वक्ति । माकन्दत्वेन परिमलबहुलत्वं तेन च गमनयोग्यत्वं ध्वन्यते । शेखरो मुखर इत्यनेन संनिधिसंस्थित्या पाण्डित्यप्रदर्शनद्वारार्जन-

कारित्वमावेद्यते। यद्वा शिखरस्थितिप्रतिपादनेन प्रतिष्ठावत्त्वं द्योत्यते। मुकुल इत्येकवचनेनातिस्वल्पत्वमाकुल इत्यनेनाधैर्यवत्त्वप्रतिपादनेन प्रतिष्ठावैधुर्यवत्त्वं ध्वन्यते। एवं च यथा भ्रमरकाकयोरर्जने भेदस्तथा समीचीनासमीचीनयोरिति ध्वन्यते। अथवा समुदायसंपादनपुरःसरातिलौल्येऽपि न किंचित्फलं नीचानामेकस्य समीचीनस्यापि फलं भवतीत्यन्योक्त्या कश्चिद्वक्ति॥

सखी नायकसमक्षं नायिकां कयाचन भङ्ग्या स्तौति—

प्रतिबिम्बसंभृताननमादर्शं सुमुख मम सखीहस्तात्।
आदातुमिच्छसि मुधा किं लीलाकमलमोहेन॥ ३५०॥

**प्रतीति**। हे सुमुख, प्रतिबिम्बेन संभृतं व्याप्तमाननं यस्मिंस्तमादर्शम्। एवं च प्रतिबिम्बभवनयोग्यत्वं ध्वन्यते। लीलाकमलभ्रान्त्या मम सखीकराद्वृथा। लीलाकमलाभावादिति भावः। ग्रहीतुं किमितीच्छसि। सुमुखेत्यनेन बुद्धिशालित्वमावेद्यते। एवं च बुद्धिविशेषवतोऽपि तव यत्र मत्सखीकरतलाकलितललितप्रतिबिम्बितवदनारविन्दादर्शे लीलाकमलभ्रमः, तत्रास्मद्विधानामीदृशभ्रमवत्तायां किमपूर्वमिति व्यज्यते। तेन च नायिकासौन्दर्यम्। अत्र च नायिकावदनप्रतिबिम्बभरितत्वादादर्श एव लीलाकमलभ्रमः। 'सुमुखि' इति पाठे नायको नायिकां वक्ति। सुमुखीत्यनेन कमलभ्रान्तिजनकत्वमावेद्यते॥

सखी मानवतीं नायिकां वक्ति—

प्राचीनाचलमौलेर्यथा शशी गगनमध्यमधिवसति।
त्वां सखि पश्यामि तथा छायामिव संकुचन्मानाम्॥ ३५१॥

**प्राचीनेति**। हे सखि, प्राक्प्राच्यां भवो योऽचलः। पूर्वाचल इत्यर्थः। तन्मस्तकाद्यथा चन्द्रो गगनमध्यमधिवसति तथा छायामिव त्वाम्। संकुचन्मानः प्रियापराधजन्यचेष्टारूपः। पक्षे परिमाणं यस्या एतादृशीम्। पश्यामि। अत्रोभयत्र वीप्सा युक्तेत्याभाति। एवं च यथा यथा चन्द्रप्रकाशातिशयस्तथा तथोद्दीपनातिशयेन मानक्षीणता भवतीत्यत इदानीं तव समयो गतः पुनर्नायास्यतीत्यत इदानीमेव त्वं तं परित्यज्य यथेच्छं नायकेन सह रमस्वेति व्यज्यते। यथा यथा शशी गगनमध्यमधिवसतिं करोति तथा तथा छायापि संकुचिता भवति॥

कथमागतेन तेन सह संगतिः स्थलाभावान्न वृत्तेति वादिनीं सखीं प्रति नायिका वक्ति—

प्राङ्गणकोणेऽपि निशापतिः स तापं सुधामयो हरति ।
यदि मां रजनिज्वर इव सखि स न निरुणद्धि गेहपतिः ॥३५२

**प्राङ्गणेति** । हे सखि, प्रकृष्टमङ्गणं तत्कोणेऽपि । एवं च स्थलसत्त्वमावेद्यते । स तद्वारकसंकेतशाली । सुधामृतं तत्प्रचुरः । संतापापनोदकत्वादिति भावः । निशापतिश्चन्द्रः । अथ च निशायां पतिः । उपपतिरित्यर्थः । तापं हरति । यदि मां रात्रिज्वर इव स दुष्टत्वेन प्रसिद्धो गेहपतिः, न तु प्रियः । न निरुणद्धि । एवं च यदि न तेन रात्रौ निरोधः कृतः स्यात्तदा क्वचिदङ्गणकोणेऽपि मया तेन सह रतं कृतं स्यादित्यावेद्यते । एवं च ममापराध इति । तेन चैतत्क्षन्तव्यमिति प्रार्थना । ज्वर इवेत्युपमया नायकं प्रति स्वस्यासामर्थ्यं व्यज्यते । ज्वरवतो वहिर्निःसरणं निशि निषिद्धमिति वैद्यकम् । यद्वा गेहपतिरित्यनेन गेहस्थितवस्तुसंरक्षणकर्तृत्वं न मद्रक्षणकर्तृत्वम् । अतो दैवादद्य गृहवस्तुसंरक्षणप्रवृत्तेन द्रुतमेव गृहकपाटादिदानेन ममापि रक्षणं जातम् । अतः श्वस्तथा यतिष्ये यथावश्यं तेन सह संगमो भविष्यतीति ध्वन्यते । 'साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके' इतिवदुत्तरवाक्यान्तर्गतस्य यच्छब्दस्य तच्छब्दापेक्षेति बोध्यमत्र ॥

सखी नायकं प्रति नायिकाप्रेमाधिक्यं वक्ति—

पतिपुलकदूनगात्री स्वच्छायावीक्षणेऽपि या सभया ।
अभिसरति सुभग सा त्वां विदलन्ती कण्टकं तमसि ॥३५३

**पतीति** । पतिः, न तु प्रियः । तत्पुलकैः प्रेमजन्यसात्त्विकभावरूपैः खिन्नानि गात्राणि यस्याः सा । एवं चातिकोमलाङ्गीत्वं व्यज्यते । स्वस्य छायाया वीक्षणे सभयापि या । अपिः प्रागप्यन्वेति । सा कण्टकं दलयन्ती । कण्टकमित्येकत्वमविवक्षितम् । अन्धकारे त्वामभिसरति । हे सुभग । एतादृशनायिकाया एतादृशाभिसरणवत्त्वादिति भावः । स्वच्छायेत्यनेन परसंसर्गराहित्येनातिप्रामाणिकत्वं द्योत्यते । तेन चैतादृश्यपि त्वय्यासक्तेत्यतस्त्वया न कदापीयं परित्याज्येति ॥

अक्षक्रीडनं विधेयमधुनेति वादिनीं नायिकां नायको वक्ति—

प्रतिभूः शुको विपक्षे दण्डः शृङ्गारसंकथा गुरुषु ।
पुरुषायितं पणस्तद्बाले परिभाव्यतां दायः ॥ ३५४ ॥

**प्रतिभूरिति** । शुकः । एवं चान्यथाकरणशीलभावो व्यज्यते । प्रतिभू-

लम्भकः । गुरुषु शृङ्गारस्य कथनमेव विपक्षे उक्ताकरणेऽयमेव दण्डः । पुरुषायितं विपरीतरतं पणः पराजये देयं वस्तु । तर्हि बाले दायः पाशपातनं परिभाव्यतां क्रियताम् । एवं चाक्षक्रीडने यदि तवास्ति रतिस्तर्ह्यनया रीत्या अक्षक्रीडनं विधेयमिति भावः । एवं च रत्युत्कण्ठा ध्वन्यते । अत्र बालापदेन मुग्धा न विवक्षिता । तस्यास्त्वेवंविधप्रागल्भ्याभावात् ॥

कयाचन विलोकितः कश्चित्तां प्रत्याह—

परमोहनाय मुक्तो निष्करुणे तरुणि तव कटाक्षोऽयम् ।
विशिख इव कलितकर्णः प्रविशति हृदयं न निःसरति ॥ ३५५॥

**परेति** । उत्कृष्टसुरताय । 'मोहनं नारभेत्तावत्' इत्यादि कामतन्त्रे मोहनशब्दस्य सुरतार्थकत्वेन कथनात् । यद्वोत्कृष्टभ्रान्त्यै । अथवान्यस्य वश्यतासंपादनाय । पक्षे शत्रुमूर्च्छायै मरणायेति वा । मुक्तः । कलितः कर्णो येन । आकर्णशाल इत्यर्थः । पक्षे कर्णान्ताकृष्ट इत्यर्थः । तव कटाक्षो बाण इव हृदयं प्रविशति । न निःसरति । हे तरुणि, एवं च बलवत्प्रेरितत्वेन दुःसहत्वं ध्वन्यते । अत एव निर्गतकरुणे । कलितकर्ण इत्यनेन संपूर्णाकर्षणेन भेदविशेषकर्तृत्वं द्योत्यते । एवं चाहं त्वदायत्त इति व्यज्यते ॥

सखी नायकं प्रति वक्ति—

प्रपदालम्बितभूमिश्चुम्बन्ती प्रीतिभीतिमधुराक्षी ।
प्राचीराग्रनिवेशितचिबुकतया न पतिता सुतनुः ॥ ३५६ ॥

**प्रपदेति** । पदाग्रावलम्बितभूमिः । प्रीतिभयाभ्यां मनोज्ञनयना । त्वां चुम्बन्ती सुतनुः । एवं च सङ्गयोग्यत्वं ध्वन्यते । वृत्यग्रस्थापितचिबुकभावेन न पतिता । एवं च साहसकारित्वमावेद्यते ॥

नायिका सखीं वक्ति—

प्रातरुपागत्य मृषा वदतः सखि नास्य विद्यते व्रीडा ।
मुखलग्नयापि योऽयं न लज्जते दग्धकालिकया ॥ ३५७ ॥

**प्रातरिति** । प्रातः समीपमागत्य मृषाभाषिणः । नाहमन्यत्र गत इति । अस्य । प्रियस्येत्यनुपादानादत्यन्तदुःखवत्त्वं ध्वन्यते । लज्जा न विद्यते । ननु वास्तवं न गत एव भविष्यतीत्यत आह—योऽयं वदनलग्नया दग्धकालिकया ।

नयनचुम्बनजन्ययेति भावः । दग्धपदेन तस्या द्वेषविशेषवत्तावेद्यते । न लज्जते । एवं च प्रात्यक्षिकरतचिह्नवत्त्वान्मिथ्याभाषित्वं दृढीक्रियते । अथ च श्याममुखत्वेऽपि परिहारकारकतया निर्लज्जत्वं द्योत्यते ॥

सखी नायिकां वक्ति—

पश्योत्तरस्तनूदरि फाल्गुनमासाद्य निर्जितविपक्षः ।
वैराटिरिव पतङ्गः प्रत्यानयनं करोति गवाम् ॥ ३५८ ॥

**पश्येति** । हे कृशोदरि, उत्तरा दिगस्त्यस्य । अर्शआदित्वादच् । उत्तरदिक्संबन्धी । पक्ष उत्तर इति तन्नाम । निर्जितहिमादिविपक्षः । पक्षे विपक्षः सुयोधनादिः । पतङ्गः सूर्यः । फाल्गुनं मासम् । पक्षेऽर्जुनम् । प्राप्य विराटापत्यमिव गवां किरणानाम् । पक्षे धेनूनाम् । परावृत्तिं करोति । हेमन्तापगमात्तेजोविशेषशालितया किरणप्रत्यायनोक्तिः । एवं च हेमन्ते गतेऽपि वसन्तादाववश्यं मदनमहत्तरशरसंत्रस्तस्तव प्रियः समायास्यतीति व्यज्यते । यद्वा यथा फाल्गुनसाहाय्येन वैराटिना गावः परावृत्त्यानीताः पतङ्गेन किरणाः, तथा त्वमपीदानींतनैतादृशसमयसाहाय्येन नायकचित्तस्याङ्गनातः परावृत्तिं विधेहीति ध्वन्यते । श्लेषमात्रमत्रेति ऋजवः । केनचित्कस्यचित्साहाय्येन स्वकीयं गतं वस्त्वानीयत इत्यन्योक्तिरपि ॥

नायको नायिकां वक्ति—

प्रमदवनं तव च स्तनशैलं मूलं गभीरसरसां च ।
जगति निदाघनिरस्तं शैत्यं दुर्गत्रयं श्रयति ॥ ३५९ ॥

**प्रमदेति** । अन्तःपुरसमीपवनं प्रकृष्टमदकारि वनं वा । त्वदीयस्तनशैलम्, गभीरसरसां मूलमिति दुर्गत्रयं निदाघेन ग्रीष्मेण जगति निरस्तं शैत्यं श्रयति । एवं च नितरां दाघो यस्मादिति व्युत्पत्त्या मदनसंतापसंतप्तस्य मम त्वत्कुचावेव शरणाविति व्यज्यते । तेन च त्वं मदङ्गीकारं कुर्विति । अन्योऽपि केनचित्पराभूतो वनशैलजलदुर्गाश्रयेण जीवतीति लौकिकम् । अत्र किं किं दुर्गमिति विशेषकर्माकाङ्क्षायां प्रमदेत्यादि । एवं च निदाघकाले शैत्यं स्थलत्रयेऽधिवसतीति भावः ॥

नायिकासखी नायकं वक्ति—

प्रोञ्छति तवापराधं मानं मर्दयति निर्वृतिं हरति ।
स्वकृतान्निहन्ति शपथाञ्जागरदीर्घा निशा सुभग ॥ ३६० ॥

**प्रोञ्छतीति** । त्वत्कृतापराधम् । एकत्वमविवक्षितम् । प्रोञ्छति । एवं च

निःशेषतो दूरीकरोति । मानम् । नायिकया कृतमिति भावः । मर्दयति । निर्वृर्तिं हरति । दुःखं जनयतीत्यर्थः । नायिकाया एवेति भावः । नायिकाकृताञ्शपथान् । यद्यहमधुनानेन सह संभाषणमपि करिष्ये तर्हि विरचितातनुचरणपरिचरणं विफलीकरिष्य इत्येवमादीन् । निहन्ति । उपसर्गेण स्वकृतशपथस्मृतिबीजसंस्काराभावो व्यज्यते । जागरेण दीर्घा रात्रिः । हे सुभग । अचेतनयापि निशयानुकूल्यसंपादनादिति भावः । जागरेण दीर्घा निशा यस्या इति वा ॥

सखी नायिकावृत्तमपरसखीं वक्ति—

प्रिय आयाते दूरादभूत इव संगमोऽभवत्पूर्वः ।
मानरुदितप्रसादाः पुनरासन्नपरसुरतादौ ॥ ३६१ ॥

**प्रिय इति ।** प्रिये, न तु पत्यौ । दूरादायाते । एवं च विरहवत्त्वमावेद्यते । प्रथमः सङ्गोऽसंजातप्राय इवाभवत् । द्वितीयसुरतारम्भे मानरुदितप्रसादाः । पुनस्त्वर्थे । अभवत् । एवं च संगमस्याप्यज्ञानादत्यन्तमन्मथविकारशालित्वमावेद्यते । स्वभाववर्णनमेतत् ॥

सखी नायिकां वक्ति—

पूर्वमहीधरशिखरे तमः समासन्नमिहिरकरकलितम् ।
शूलप्रोतं सरुधिरमिदमन्धकवपुरिवाभाति ॥ ३६२ ॥

**पूर्वेति ।** उदयाचलमस्तके निकटवर्त्यरुणकिरणकवलितमिदं तमः शूलाग्रप्रोतसरुधिरान्धकनामकदैत्यशरीरमिव शोभते । एवं च प्रातःकालः संवृत्तः, अत उपपतिर्निःसार्यतामिति द्योत्यते । नायकसहचरवचनमिदं वा । एवं चाधुना निर्गन्तव्यमिति भीतिप्रदर्शनपुरःसरं व्यज्यते । अथवा नायिकायाः पद्मिनीत्वात्सूर्योदयोत्तरं सुरतविधानस्यौचित्येन सूर्योदयः सत्वरमेव भविष्यतीति ज्ञापकमिदं नायिकासहचरीवाक्यम् । यद्वा नायको नायिकां वक्ति । अक्षरच्युतकालंकारवदक्षरपूर्वकस्यापि युक्तितौल्यादलंकारतया पूर्वमहीधरशिखर इत्यस्याभिनवस्तनाग्र इत्यर्थः । संलग्नकाश्मीरदीप्तिकलितमिदं केशजातं शूलाग्रप्रोतरुधिराक्तान्धकासुरवपुरिव । तस्य श्यामत्वादिति भावः । आभाति । एवं च विपरीतरतसमग्रसंजातमुक्तिमुखचुम्बननमनकुचशिखरनिपतितकेशकलापवत्तयातिशयितशोभास्ति, अत एवमेव केशकलापावस्थितिरास्तामिति व्यज्यते । तेन च विपरीतरतान्न विरतिर्विधेयेति । ननु शृङ्गारबीभत्सयोर्विरोधात्कथमत्रोभयनिबन्धनमिति चेत् 'स्मर्यमाणो विरु-

द्धोऽपि साम्येनाथ विवक्षितः । अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥' इत्युक्त्या यथा तथाविधान्धकवपुश्चमत्करोति तथैवंविधकेशकलाप इति साम्यप्रतिपादनेन दोषाभावात् ॥

सखी नायिकां शिक्षयति—

परिवृत्तनाभि लुप्तत्रिवलि श्यामस्तनाग्रमलसाक्षि ।
बहुधवलजघनरेखं वपुर्न पुरुषायितं सहते ॥ ३६३ ॥

**परीति** । हे अलसाक्षि । गर्भभरालसत्वादिति भावः । परिवृत्तनाभिः । लुप्तत्रिवलि । श्यामचूचुकम् । बह्वयो धवला जघने नखरेखा यस्मिंस्तत् । गर्भे जघने कण्डूतेर्जायमानत्वादिति भावः । सर्वमेतत्परिपक्वगर्भचिह्नम् । ते एवंविधं शरीरं पुरुषायितं विपरीतरतम् । तत्करणसमर्थं न । एवं चाधुना प्राग्वद्विपरीतरतं न विधेयमिति व्यज्यते ॥

सखी नायकोत्साहवर्धनाय नायिकां वक्ति—

प्रारब्धनिधुवनैव स्वेदजलं कोमलाङ्गि किं वहसि ।
ज्यामर्पयितुं नमिता कुसुमास्त्रधनुर्लतेव मधु ॥ ३६४ ॥

**प्रारब्धेति** । आरब्धसुरतैव । अत्रोपसर्गोऽनुचितः । हे कोमलाङ्गि, स्वेदजलम् । जलपदमाधिक्यं द्योतयति । वहसि । इदं तत्किम् । नोचितमित्यर्थः । सज्जीकर्तुं नमिता कुसुमास्त्रस्य मदनस्य धनुर्लतेव मधु । एवं च सुरतारम्भ एवैतादृशः श्रमः, तत्राग्रे कथं भविष्यतीति नायिकायां सौकुमार्यमावेद्यते । तेन चैतादृशी नायिका दुर्लभतरेति । मदनधनुर्लतासमताप्रतिपादनेनानयैव मदनस्य जगज्जय इति प्रतिपादनेनेतरनायिकाव्यतिरेको ध्वन्यते । यद्वारब्धनिधुवनैवेत्यनेनैतस्या अयं स्वभावो यत्सुरतादावेव श्रमो नोत्तरकालमिति ज्ञापनेन यथेच्छं भीतिमपहाय सुरतसंगमो विधेय इति नायकं प्रति व्यज्यते । नायकोक्तिरियं वा ॥

जायाजितोऽयमित्यपकीर्तिभाषिसर्वलोकावगणनां विधायापि मया त्वदधीनतयैव स्थीयत इति ज्ञापयितुं भङ्ग्यन्तरेण नायको नायिकां वक्ति—

पुंसां दर्शय सुन्दरि मुखेन्दुमीषत्त्रपामपाकृत्य ।
जायाजित इति रूढा जनश्रुतिर्मे यशो भवतु ॥ ३६५ ॥

**पुंसामिति** । हे सुन्दरि, लज्जां दूरीकृत्य स्वमुखचन्द्रमितरनायकानामीषद्दर्शय । एवं च लज्जापरित्यागस्यैतत्फलं यदीषन्मुखदर्शनमित्यत्यन्तलज्जावत्त्वमावे-

द्यते । ईषत्त्रपामपाकुर्वेत्यपि योजना । चन्द्रपदेन दर्शनीयत्वमावेद्यते । तत्फलमाह—जायया जित इति ख्यातो जनवादो मे यशो भवतु । एवं च त्वदीयतादृशसौन्दर्योत्कर्षं दृष्ट्वैतादृशनायिकाजितत्वमत्यन्तपुण्योद्रेकलभ्यमिति यशसे भवत्विति भावः । एवं च त्वमेतादृशसौन्दर्यशालिनीति ध्वन्यते । एवं चैतादृशे मयि कोपकरणमनुचितमित्यावेद्यते ॥

यद्यपि घटनाविधाननिपुणा दूती, संतापापनोदको नायकश्च वर्वर्ति, तथापि निर्बन्धशालितयास्माकं न किंचिदपि फलमिति काचिद्वक्ति—

प्रसरतु शरत्त्रियामा जगन्ति धवलयतु धाम तुहिनांशोः ।
पञ्जरचकोरिकाणां कणिकाकल्पोऽपि न विशेषः ॥ ३६६ ॥

**प्रसरत्विति ।** शरत्कालीना रात्रिः प्रसरतु । तुहिनांशोर्धाम जगन्ति धवलयतु । संतापजन्यमालिन्यनिवारकतयेति भावः पञ्जरस्थचकोरिकाणाम् । चकोरीपदेन तदेकाधीनजीवनवत्त्वमावेद्यते । कणिकातो न्यूनोऽपि न विशेषः ॥

कथमनयातिविलम्बितमिति वादिनं नायकं नायिकासखी समाधत्ते—

प्रथमागत सोत्कण्ठा चिरचलितेयं विलम्बदोषे तु ।
वक्ष्यन्ति साङ्गरागाः पथि तरवस्तव समाधानम् ॥ ३६७ ॥

**प्रथमेति ।** हे प्रथमागत । एवं च कोपौचित्यमिति व्यज्यते । उत्कण्ठासहितेयम् । अत एव चिरकालं चलिता । स्वसदनादिति भावः । ननु विलम्बः किमित्यत आह—विलम्बदोषे तु । दोषपदेन करणानर्हत्वं ध्वन्यते । समाधानं सहाङ्गरागेण वर्तन्त एतादृशा मार्गस्थतरवो वक्ष्यन्ति । एवं च किमर्थमत्रास्माभिः समाधानं विधेयमिति भावः । पथिपदमवश्यंभाविदर्शनवत्तामावेदयति । एवं च त्वद्विरहाद्भ्रान्तिवशात्त्वद्भ्रमेण प्रतिपदपद्धतिपादपालिङ्गनेन विलम्बः संवृत्त इति व्यज्यते । तेन च क्षणमपि त्वद्विरहमसहमानेयमिति । 'विलम्बदोषेण' इति पाठे संकेते बहुकालं नायकं प्रतीक्ष्य स्वगृहं प्रति गतायां नायिकायां समागतनायकं प्रति प्रथममागता नायिकासखी वक्ति । यतः सोत्कण्ठेयं नायिका । विलम्बदोषेण । तवेति भावः । पथि । स्वगृहस्येति भावः । अचिरम् । अधुनेत्यर्थः । चलिता । ननु मिथ्यैव त्वं वदसीत्यत्राह—तव समाधानं साङ्गरागाः । स्वगमनज्ञानाय चिह्नवन्तः कृता इत्यर्थः । तरवो वक्ष्यन्ति । एवं च न तस्या अपराध इति भावः । नकारपाठे पदच्छेदेन काक्वा व्याख्येयमाद्यव्याख्यावत् ॥

पतिते॑ऽशुके स्तनार्पितहस्तां तां निविडजघनपिहितोरुम् ।
रदपदविकलितफूत्कृतिशतधुतदीपां मनः स्मरति ॥ ३६८ ॥

**पतितेति** । अंशुके पतिते सति स्तनस्थापितहस्ताम् । अत्यन्तं जघनाच्छादितोरुम् । ओष्ठयोर्विकलतामाप्ता या फूत्कृतिः । अत एव तच्छतेन कम्पितः, न तु निर्वापितः, दीपो यया ताम् । लज्जाभयवशादिति भावः । तां पूर्वानुभूतां नायिकां मनः स्मरति । एवमेव किमिति स्थितोऽसीति वादिनं कंचित्प्रति कस्यचिदुक्तिरियम् ॥

संकेतितक्रीडाचलमौलिकुञ्जे नायकः समधिवसतीत्यतस्त्वरया तत्र गन्तव्यमिति ज्ञापयितुमन्येषां च गमने भीतिमुपदर्शयन्ती दूती नायिकां वक्ति—

परितः स्फुरितमहौषधिमणिनिकरे केलितल्प इव शैले ।
काञ्चीगुण इव पतितः स्थितैकरत्नः फणी स्फुरति ॥ ३६९ ॥

**परित इति** । हे सखि, केलिशयनीय इव समन्तात्सप्रकाशौषधिमणिसमूहवति शैले। पक्षे महौषधितुल्यमणिसमूहवतीत्यर्थः । काञ्चीसूत्रमिव पतितश्चासौ स्थितैकरत्नश्च फणी स्फुरति । एवं च दीपादिस्थानाभिषिक्तौषधिसप्रकाशे विविधपल्लवादिमृदुशय्याशालिनि क्रीडाशैले निरन्तरजघनसङ्गयोग्यश्चिरागमनतया त्वदनागमनेन सालस इव सकलनायकशिरोरत्नरूपः प्रबलतरतयान्यजननिर्भयः खिन्नविद्याविशारदो नायकः समधिवसतीत्यतस्त्वरस्व गमनायेति ध्वन्यते । महत्तरसर्पाक्रान्ततया शैलस्य गमनानर्हत्वमन्येषामावेद्यते । केलितल्पसादृश्येन नायिकायाः सुखगमनयोग्यत्वं ध्वन्यते । काञ्चीगुणसादृश्येन निरन्तरजघनसंगतिशालित्वप्रतिपादनेनातिमदनशालित्वं व्यज्यते । पतित इत्यनेन दैववशाल्लब्ध इति ध्वन्यते । यद्वा सखी नायिकां वक्ति—समन्तान्महौषधिमणिसमुदायवति । पक्षे प्रकाशातिशयशालिमणिनिकरवति । निर्भरतातिशयविधानान्मणिमुक्तादिग्रीवाद्याभरणभ्रंशादिति भावः । शैल इव केलितल्पे । शैलसमताप्रतिपादनेनातिदृढत्वं तल्प आवेद्यते । तेन चैतादृशरतविमर्दसहनयोग्यत्वम् । पतितः । प्रसुप्त इति यावत् । स्थितमेकरत्नं यस्मिन्सः । फणायामिति भावः । पक्षे पतितः । त्रुटितत्वादिति

१. पतितेत्यार्या केषुचित्पुस्तकेषु नास्ति.

भावः । स्थितं मुख्यं रत्नं यस्मिन्सः फणीव काञ्चीगुणः स्फुरति । तवेति भावः । फणिपदेन स्पर्शायोग्यत्वं ध्वन्यते । एवं च तथाशयितरतसंविधानजन्यालसतया निकटस्थकाञ्चीगुणोऽपि स्प्रष्टुं न शक्यते त्वयेत्यतो मामाज्ञापयसि तदानयनार्थमित्यावेद्यते ॥

अन्याङ्गनासक्त्येतस्ततः परिभ्रमन्तं नायकं नायिकान्योक्त्या वक्ति—

प्रावृषि शैलश्रेणीनितम्बमुज्झन्दिगन्तरे भ्रमसि ।
चपलान्तर घन किं तव वचनीयं पवनवश्योऽसि ॥ ३७० ॥

**प्रावृषीति** । वर्षासमये । एवं च वहिर्गमनानर्हत्वं व्यज्यते । पर्वतश्रेणीनितम्बम् । 'नितम्बः कटकोऽस्त्रियाम्' । अथ च स्वनितम्बिनीस्तननितम्बम् । उज्झंस्त्यजन् । दिगन्तरे । इतस्तत इत्यर्थः । भ्रमसि । चपला विद्युत्सान्तरे मध्ये यस्य । अथ च चपलेतस्ततो गमनस्वभावा पराङ्गनान्तरे चित्ते यस्य । यद्वा चञ्चलस्वभाव चलचित्त । घन तव किं वचनीयम् । वाच्यमित्यर्थः । यतः पवनवश्योऽसि वाय्वधीनोऽसि । अथ च वातूलोऽसि । पिशाच इति यावत् । एवं च यतो यतो वायुना नीयसे तत्र तत्र गच्छसीति न तवापराध इति व्यजते । एवं च सुन्दरीं नवयौवनलालसां मादृशीं विहायेतस्ततो व्यभिचरणशीलामन्तःकरणे विधाय पिशाचवदितस्ततो भ्रमसि तत्र न तवापराधः किं तु मौढ्यस्येति व्यज्यते ॥

सर्वदा मानवत्यैव त्वया स्थीयत इदमनुचितमिति भङ्ग्यन्तरेण सखी नायिकां वक्ति—

प्रतिदिवसक्षीणदशस्तवैष वसनाञ्चलोऽतिकरकृष्टः ।
निजनायकमतिकृपणं कथयति कुग्राम इव विरलः ॥ ३७१ ॥

**प्रतीति** । प्रतिदिनं क्षीणा दशा प्रान्तभागो यस्य । पक्षे क्षीणावस्थः । अत्यन्तं करेण हस्तेनाकृष्टः । पक्षेऽत्यन्तराजदण्डपीडितः । विरलः शिथिलतन्तुसंयोगवान् । पक्षे स्वल्पजनवसतिः । तव एष वसनाञ्चलो निजस्वामिनं कुग्राम इव कृपणम् । वसनान्तरग्रहणासामर्थ्यादिति भावः । पक्षे द्रव्यलोभकरणेनेति भावः । कथयति । एवं चैतादृशमानसंपादनेन नायकस्य वारं वारं प्रार्थनादिसंपादनावगणनेन नायं नायिकासुखप्रदो यतः सर्वदेयं क्लेशवत्येव लक्ष्यत इत्ययशस्त्वदीयं भवति । तदियं स्वस्यैवानौचितीमाविष्करोति, अतो नैतादृशं विधेयमित्यावेद्यते ॥

काचित्पथिकं वक्ति—

पथिक कथं चपलोज्ज्वलमम्बुदजलबिन्दुनिवहमविषह्यम्।
मयपुरकनकद्रवमिव शिवशरशिखिभावितं सहसे॥ ३७२॥

**पथिकेति**। हे पथिक। एवं च वसत्यभाववत्त्वमावेद्यते। चपलाभिर्विद्युद्भिरुज्ज्वलम्। पक्षे चपलावदुज्ज्वलम्। अविपह्यम्। उद्दीपकत्वादिति भावः। पक्ष उष्णत्वादिति भावः। मेघजलसमुदायबिन्दुसमुदायम्। न तु कतिपयजलबिन्दवः। शंकरबाणानलसंतापितम्। अत्र शिवपदं प्रकृताननुगुणम्। मयनामकदैत्यनगरकनकद्रवमिव कथं सहसे। एवं च कथं वृष्टिमध्य एव स्थीयते कुतो नागम्यते वृष्टिबाधोपशमनस्थल इति भावः। एवं चैतादृशोद्दीपनविभाववति समये कथमेकाकितया स्थातुं शक्यम्, अतो मत्सविधमागत्यैनं समयमतिवाहयेति व्यज्यते॥

काचित्कांचिद्वदति—

पथिकं श्रमेण सुप्तं दरतरला तरुणि सुमधुरच्छाया।
व्यालम्बमानवेणिः सुखयसि शाखेव सारोहा॥ ३७३॥

**पथिकमिति**। हे तरुणि। ईषच्चञ्चला। सुष्ठु मधुरा छाया यस्याः। व्यालम्बमाना वेणिर्यस्याः। विपरीतरतसंविधानादिति भावः। सारोहा सशिफा। 'शाखा शिफावरोहः स्यात्' इत्यमरः। पक्ष आरोहणमारोहः। शाखेव सुखयसि। मदनानलतापनिवारकत्वादिति भावः। श्रमेण सुप्तं पथिकम्। पथिकपदेन सुखसंपादनयोग्यत्वं ध्वन्यते। शाखापि किंचिचञ्चला शीतलच्छाया लम्बमानजटा श्रमसुप्तपथिकसुखहेतुर्भवति। एवं चानेन सह त्वया विपरीतरतं विहितमिति ध्वन्यते। यद्वा पथिकं सुखयसीति सुखयिष्यसीति प्रश्नः। पथिकमित्यनेनातिकामुकत्वं तत्सुखदानेन पुण्यवत्त्वमन्यापरिचेयत्वं च व्यज्यते॥

निगूढमन्याङ्गनासक्तचित्तं नायकं नायिकासखी वक्ति—

प्रददाति नापरासां प्रवेशमपि पीनतुङ्गजघनोरूः।
या लुप्तकीलभावं याता हृदि बहिरदृश्यापि॥ ३७४॥

**प्रददातीति**। या तव हृदि बहिरदृश्यापि लुप्तकीलधर्मं याता सा तुङ्गपीनजघनोरूरपरासां प्रवेशमपि न प्रददाति। लुप्तकीलभावे बहिरदृश्यत्वं हेतुः। अन्यासां प्रवेशाप्रदाने तुङ्गपीनजघनोरुत्वं हेतुः। अपिनावस्थितिव्यवच्छेदः।

एवं च काचित्त्वान्तःकरणेऽस्ति ययान्यत्र चित्तं न ददासीति व्यज्यते । भूमावन्तर एकस्मिन्कीले सत्यन्यकीलस्य न तत्र प्रवेश इति लौकिकम् । यद्वा कथमन्याङ्गनालम्पटस्त्वमसीति वादिनीं नायिकासखीं नायको वक्ति । तुङ्गेत्यादिनान्याङ्गव्यतिरेको ध्वन्यते । एवं च यद्यपि न मया मुखतस्तथा चाटुवचनादि विधीयते परंतु मम हृदयमियमेवाधिवसति न काचिदन्या हृदयविषयापीति व्यज्यते । अथवा नायिकोक्तिरियम् ॥

कथमस्मासु श्वश्रूर्न स्निह्यतीति वादिनमनभिज्ञनायकं नायिकासखी वक्ति—

प्रातर्निद्राति यथा यथात्मा लुलितनिःसहैरङ्गैः ।<br>
जामातरि मुदितमनास्तथा तथा सादरा श्वश्रूः ॥ ३७५ ॥

**प्रातरिति** । यथा यथा । लुलितानि ग्लानान्यत एव निःसहानि । सालस्यानीत्यर्थः । एवंविधैरङ्गैः प्रातरात्मजा निद्राति, मुदितमनाः श्वश्रूर्जामातरि तथा तथा सादरा भवति । लुलितनिःसहैरित्यनेन रतातिशयशालित्वमावेद्यते । आत्मजेत्यनेन तत्सुखवत्त्वेन तस्याः सुखवत्त्वमिति ध्वन्यते । एवं च त्वयाद्य रात्रौ तथा रतातिशयो विधेयो यथेयं मत्सखी प्रातरत्यन्तनिःसहाङ्गतया स्वापं करिष्यतीति व्यजते ॥

नायिका सखीं वक्ति—

प्रणयचलितोऽपि सकपटकोपकटाक्षैर्मयाहितस्तम्भः ।<br>
त्रासतरलो गृहीतः सहासरभसं प्रियः कण्ठे ॥ ३७६ ॥

**प्रणयेति** । हे सखि, प्रणयात्प्रीतेश्चलितोऽपि, प्रणयेन वा चलितः । सकपटा ये कोपकटाक्षास्तैराहितस्तम्भः संपादितस्थैर्यः । त्रासेन तरलः । मत्कृतकोपकटाक्षादिति भावः । प्रियो मया सहासरभसं कण्ठे कृतः । एवं च नायकेऽतिसरलत्वमावेद्यते ॥

काचिन्नायका कस्मिंश्चिदासक्ता तदीयान्याङ्गनासक्तिं विज्ञायात्यन्तदुःखिता स्वहृदयं प्रति वक्ति—

प्रियदुर्नयेन हृदय स्फुटसि यदि स्फुटनमपि तव श्लाघ्यम् ।<br>
तत्केलिसमरतल्पीकृतस्य वसनाञ्चलस्येव ॥ ३७७ ॥

**प्रियेति** । हे हृदय । एवं चोपदेशयोग्यत्वं ध्वन्यते । प्रियस्य दुर्नयेन । एवं चातिदुःखवत्त्वमावेद्यते । यदि स्फुटसि विदीर्णतामाप्नोषि तर्हि तव स्फुटनमपि

श्लाघ्यम्। तस्य केलिरूपसङ्ग्रामे तल्पीकृतवस्त्रप्रान्तस्येव। समरपदेनातिदुःसहत्वं रत आवेद्यते। एवं च शय्यादिविरहवत्यपि देशेऽत्यन्तसाहसेन चिरतरसुरतसुखसंपादनेन यः प्रियत्वात्परितोषितस्तदीयैतादृशदुश्चेष्टितस्यातिदुःसहतया 'विरमति कथनं विना न खेदः' इत्यादिवचनात्कस्यचित्कथनानर्हत्वेऽपि स्वस्यैवैतादृशाविचारितकार्यकारितयातिमौर्ख्यावहतया कथनीयत्वेन तद्भराद्विदीर्णतापि समुचिता न पुनरन्यत्र तत्कथनमिति ध्वन्यते। तेन चैतादृशप्रियानुचिताचरणस्य कथने स्वस्यैव लज्जाजनकत्वमिति। यद्वा येनैतादृशसंभोगसुखमुत्पादितं तदीयैतादृशौदासीन्ये मरणमेव वरं न पुनर्दूत्यादिप्रेषणं मानादिधारणं वेति व्यज्यते। अपिरवधारणार्थः। 'प्रियदुर्नयेनात्यन्तं दुःखं भवतीति भावः' इति ऋजवः॥

कश्चिदन्योक्त्या कस्यचित्कर्तव्यतामालोक्य स्वयमपि तथा कर्तुमुद्यतं कंचन वक्ति—

पवनोपनीतसौरभदूरोदकपूरपद्मिनीलुब्धः।
अपरीक्षितस्वपक्षो गन्ता हन्तापदं मधुपः॥ ३७८॥

**पवनेति**। समीरणाहृतसौरभा, उदकपूरवर्तिनी या पद्मिनी तस्यामासक्तोऽविचारितस्वपक्षबलो मधुपः। हन्त इति खेदे। आपदं गन्ता। पवनपदेन चञ्चलस्वभावेन केनचिदेतस्याः कीर्तिः कृतेति व्यज्यते। दूरोदकपूरेत्यनेन प्राप्तावपि काठिन्यमावेद्यते। अपरीक्षितेत्यनेन यथाकथंचित्स्वसहायवचनमात्रादेव नोद्योगः कर्तव्य इति ध्वन्यते। आपदमित्येकत्वमविवक्षितम्। मधुप इत्यनेनाविवेकित्वं ध्वन्यते। एवं यथाकथंचित्कस्यचिन्मुखान्नायिकागुणश्रवणमात्रेण दुष्प्रापायां तस्यामासक्तिर्येयनेन क्रियते तर्ह्यनेनावश्यं क्लेशाः प्राप्या एवेति भावः। एवं च त्वयैतादृगनुचितं नाचरणीयमिति व्यज्यते॥

प्रेमवशान्नायके लघुतामङ्गीकुर्वत्यपि स्वयं नावगणना विधेयेति सखी नायिकां भङ्ग्यन्तरेण शिक्षयति—

प्रेमलघूकृतकेशववक्षोभरविपुलपुलककुचकलशा।
गोवर्धनगिरिगुरुतां मुग्धवधूर्निभृतमुपहसति॥ ३७९॥

**प्रेमलघूकृतेति**। प्रेम्णा। नायिकाविषयकेणेत्यर्थः। लघूकृतः। वास्तवतया तस्य चतुर्दशभुवनाधारतयातिगुरुत्वादिति भावः। एवं च प्रियाप्रणयात्किं किं न क्रियत इति ध्वन्यते। यः केशवस्तस्य वक्षसि धारणे विपुलपुलकौ कुचकलशौ

यस्या एतादृशी मुग्धा सुन्दरी । अथ च मूढा । वधूः । यद्वा मुग्धस्य वधूः । एवं च प्रियस्य चातुर्यवत्त्वे नायिकाया अपि तद्वत्त्वं भवतीति ध्वन्यते । गोवर्धननामधेयमहीधरस्य गुरुतां गुप्तं हसति । येन गोवर्धनोद्धारणं कृतं सोऽपि मया लघुतया वक्षसि धृत इति न किंचिद्गौरवमिति धियेति भावः । एवं च केशवस्याप्युपहासो व्यज्यते । एवं चैतादृशमौर्ख्यं न कदापि विधेयं त्वयेति ध्वन्यते ॥

प्रियप्रीतौ सत्यां न केनापि किमपि कर्तुं शक्यमिति काचित्कांचिद्वक्ति—

प्रियविरहनिःसहायाः सहजविवक्षाभिरपि सपत्नीभिः ।
रक्ष्यन्ते हरिणाक्ष्याः प्राणा गृहभङ्गभीताभिः ॥ ३८० ॥

**प्रियेति** । दयितविरहक्षीणायाः । एवं च प्रकारान्तरमरणे समाधेः सत्त्वादिति भावः । सहजशत्रुभूताभिरपि । एवं चावश्यापकारकरणयोग्यत्वं द्योत्यते । अपिनान्येषां का वार्तेति व्यज्यते । गृहभङ्गभीताभिः । एतस्या मरणे प्रियमरणस्यावश्यं भावित्वादिति भावः । एवं च प्रियानुरागातिशयवत्त्वमावेद्यते । मृगाक्ष्याः प्राणा रक्ष्यन्ते । एवं च यथा नायकः स्निह्यति तथावश्यं विधेयं त्वयेति ध्वन्यते ॥

नायिका दूतीं वक्ति—

प्रकटयति रागमधिकं लपनमिदं वक्रिमाणमावहति ।
प्रीणयति च प्रतिपदं दूति शुकस्येव दयितस्य ॥ ३८१ ॥

**प्रकटयतीति** । हे दूति । एवं च तद्योगसंपादनं त्वदधीनमित्यावेद्यते । शुकस्येव दयितस्य लपनं संभाषणम् । पक्षे वदनम् । अधिकं रागं प्रीतिम् । पक्षे लौहित्यम् । प्रकटयति । वक्रिमाणं वक्रोक्तिमत्त्वम् । पक्षे वक्रत्वम् । आवहति । आङा नैकमपि वक्रोक्तिरहितं पदं तत्रेत्यावेद्यते । तेन च नायके चातुर्यातिशयशालित्वम् । प्रतिपदं प्रतिशब्दम् । पक्षे प्रतिक्षणम् । प्रीणयति च । यच्चाधिकरागशालि न तद्वक्रतामावहति । यच्च वक्रतामावहति न तत्प्रीतिजनकम् । इदं चैकमेतत्त्रितयजनकमित्याश्चर्यमिति भावः । केचित्तूभयत्रापि लपनं मुखमेवेत्याहुः । एवं चैतादृशनायकं सपदि संयोजय मया सहेति ध्वन्यते ॥

स्वकटाक्षविक्षेपादिना नायकः स्वाधीनताभाजनं विधेय इति काचित्कांचिच्छिक्षयति—

प्रविशन्त्याः प्रियहृदयं बालायाः प्रबलयौवतव्याप्तम् ।
नवनिशितदरतरङ्गितनयनमयेनासिना पन्थाः ॥ ३८२ ॥

**प्रविशन्त्या इति** । प्रबला रूपादिसंपत्तिशालिन्यः । प्रबलपदमन्य-

स्याजेयत्वमावेदयति। या युवत्यस्तत्समुदायव्याप्तम्। एवं च स्वस्थिलर्थमवकाशाभावो व्यज्यते। प्रियहृदयम्। एवं चावश्यप्रवेशसंपादनौचित्यं ध्वन्यते। प्रविशन्त्या बालायाः। नूतनस्तीक्ष्णः। दरमीषत्। किंचिल्लज्जावत्त्वादिति भावः। तरङ्गितमुत्तरोत्तराधिक्यं तच्छालि यः कटाक्षस्तद्रूपेणासिना खड्गेन पन्था मार्गः। एवं च त्वयैतादृशकटाक्षेण विलोकितेऽवश्यं नायकस्ता अपहृत्य त्वय्यासक्तो भविष्यतीति ध्वन्यते। अन्योऽपि प्रबलव्याप्तस्थलादौ केवलं खड्गसहायेन प्रवेशं करोतीति लौकिकम्॥

नायिकासखी नायकं वक्ति—

प्रणयापराधरोषप्रसादविश्वासकेलिपाण्डित्यैः।
रूढप्रेमा ह्रियते किं बालाकुतुकमात्रेण॥ ३८३॥

**प्रणयेति**। प्रणयापराधेन रोषः, प्रसादः, विश्वासः, क्रीडाविषयकपाण्डित्यमेतै रूढं प्रेम यस्या एतादृशी नायिका। यद्वा प्रवृद्धप्रेमा। अर्थान्नायिकायाः। एवं च भाविसुखसंभावनया स्वतःसिद्धसुखपरिहारकर्तव्यता नोचितेति ध्वन्यते। तेन च भवतामीदृशकर्तव्यतया नायिका खिन्ना भवतीत्यावेद्यते। यद्वा नायको नायिकासखीं वक्ति। रूढप्रेमा अर्थान्नायिकया सह बालायाः कुतुकमात्रेण किं ह्रियते। काक्वा न ह्रियत इत्यर्थः। एवं च बालायाः कौतूहलमात्रमेतत्। वास्तवानुरागो मम तस्यामेवेति ध्वन्यते॥

काचिदन्योक्त्या पूर्वं स्वस्मिन्सक्तं वार्धक्यात्सुरतादावुपेक्षितमन्यविटद्वेषिणं कंचन वक्ति—

पूर्वैरेव चरित्रैश्चरितैर्जरतोऽपि पूज्यता भवतः।
मुञ्च मदमस्य गन्धाद्युवभिर्गज गञ्जनीयोऽसि॥ ३८४॥

पूर्वैरिति। हे गज, मदं मुञ्च। नन्वेतत्त्यागे किमित्यत आह—प्राक्तनैरेवाद्भुतैराचरितैर्जरतोऽपि वृद्धस्यापि। 'जीनो जीर्णो जरन्' इत्यमरः। भवतः। पूज्यता। एवं च मदाभावेऽपि पूज्यतायाः सत्त्वान्मदकरणमनर्थकमिति भावः। न केवलं मदकरणमनर्थकम्, अपि तु दुरर्थकमित्याह—अस्य मदस्य गन्धाद्युवभिर्गञ्जनीयोऽसि। एवं च पूर्ववत्सामर्थ्याभावादस्मत्कृतमानवत्त्वेऽपि विधीयमाने मदो युवभिर्न सोढव्य इति ध्वन्यते। तेन च भीतिः॥

यावत्पर्यन्तं नायकाङ्गसुखं नानुभूतं तावदेव गमने नकारः क्रियते, तदुत्तरं तु स्वयमत्यन्तासक्ता नायके भविष्यसीत्यत इदानीं मद्वाक्यं न तिरस्कुर्विति काचित्कांचिद्वक्ति—

प्रथमं प्रवेशिता या वासागारं कथंचन सखीभिः ।
न शृणोतीव प्रातः सा निर्गमनस्य संकेतम् ॥ ३८५ ॥

**प्रथममिति** । प्रथमतः सखीभिः । न तु सख्या । महता क्लेशेन शयनसदनं या प्रवेशिता सा प्रातः । एवं च चिरपरिचयाभावो व्यज्यते । निर्गमसंकेतं न शृणोतीव । एवं च न निर्गच्छतीति किमु वाच्यमिति भावः । एवं च तथैव त्वमपि करिष्यसीति व्यज्यते । 'प्रसभम्' इत्यपि क्वचित्पाठः ॥

मन्त्रवत्त्वमावश्यकमिति कश्चिद्वक्ति—

पूजा विना प्रतिष्ठां नास्ति न मन्त्रं विना प्रतिष्ठा च ।
तदुभयविप्रतिपन्नः पश्यतु गीर्वाणपाषाणम् ॥ ३८६ ॥

**पूजेति** । प्रतिष्ठां विना पूजा नास्ति । मन्त्रं विना प्रतिष्ठा नास्ति । तदुभयविप्रतिपन्नः । मन्त्रं विनापि प्रतिष्ठा, प्रतिष्ठां विना पूजेतिवादीत्यर्थः । देवतायाः पाषाणं प्रतिमां पश्यतु । एवं च देवताप्रतिमायामेवैतन्निर्णय इति भावः । यद्वा केनचित्कस्यचित्पूजायां क्रियमाणायामीर्ष्यावशात् 'किमस्य ज्ञानं का वास्य प्रतिष्ठा येनेदृशी पूजेयमस्य विधीयते' इति वादिनं कश्चिद्ब्रह्मण्यन्तरेण वक्ति—प्रतिष्ठां देवतासंनिधिरूपां विना पूजा नास्ति । 'प्रतिष्ठितं पूजयेत्' इति वचनात् । पक्षे प्रतिष्ठा विख्यातिः । मन्त्र उत्तमपुरुषामन्त्रणास्यजत्वं तत्त्वम्(?) । मन्त्रप्रसिद्ध्यन्यतमवन्तम् । पक्षे विचारं विना प्रतिष्ठा च नास्ति । मन्त्रसाध्यत्वात्प्रतिष्ठायाः । प्रतिष्ठामन्त्रोभयाप्रामाण्यवादी । पक्षे प्रतिष्ठामन्त्रोभयाभाववादी । देवतापाषाणं पश्यतु । एवं च वेदाप्रामाण्यवादिना नास्तिककक्षाधिरूढेन केनचिद्विष्ण्वादिप्रतिमादौ [विष्ण्वादि]प्रस्तरबुद्धौ कृतायां न किंचित्समीचीनस्य दुःखमिति भावः । एवं च नास्तिककल्पेन भवता मात्सर्यात्पाण्डित्यप्रतिष्ठादिकमेतेषां नास्तीत्युक्तं चेत्तावता न काचित्क्षतिरिति ध्वन्यते ॥

नायिकासखी नायिकायां मानाद्युपचारप्रदर्शकं नायकं वक्ति—

पूर्वाधिको गृहिण्यां बहुमानः प्रेमनर्मविश्वासः ।
भीरधिकेयं कथयति रागं बालाविभक्तमिव ॥ ३८७ ॥

**पूर्वाधिक इति** । गृहिण्यां पूर्वापेक्षयाधिकः । बहुनेकप्रकारः । इदं च लिङ्ग-

विपरिणामादग्रेऽप्यन्वेति। मानः। प्रेम। नर्म क्रीडा। विश्वासः। इयमधिका भीः। एवं च भीतेः पूर्वमभावो ध्वन्यते। रागं बालाविभक्तमिव कथयति। एवं च यावत्पर्यन्तं तस्यामेवानुरागः स्थितस्तावत्पर्यन्तं नैतादृशमानादिकं न भीतिः। तद्धेत्वभावात्। इदानीं तु मानादिनैतत्समाधानेनेयं मां न पीडयिष्यतीति धियै-तादृशाचरणं तवेति भावः। एवं च यत्रासाधारणं प्रेम न तत्र किमपि मानादि बाह्योपचारकरणमपेक्षितमिति ध्वन्यते॥

स्वपीडाभयेन स्वप्रभोरप्यनिष्टं चिन्त्यत एवेति कश्चित् 'कथं स्वप्रभोरनुचिताशंसनं करोषि' इति वादिनं वक्ति—

पुलकितकठोरपीवरकुचकलशाश्लेषवेदनाभिज्ञः।
शंभोरुपवीतफणी वाञ्छति मानग्रहं देव्याः॥ ३८८॥

**पुलकितेति**। संजातपुलकौ। नायकस्पर्शजसुखाविर्भावादिति भावः। यौ कठोरपीवरकुचकलशौ तदाश्लेषपीडाभिज्ञः शंभोरुपवीतरूपफणी पार्वत्या मानग्रहं वाञ्छति। एवं चालिङ्गनाद्यभावेन स्वपीडानुत्पत्तिर्भविष्यतीति धियेति भावः। कठोरेत्यनेन वेदनायामाधिक्यं ध्वन्यते। एवं च शंभोरित्यनेन सुखजनकत्वप्रतिपादनादुपवीतपदेनातिनिकटतयातिप्रेमवत्त्वव्यञ्जनात्फणीत्यनेन भारसहनसामर्थ्यद्योतनादीदृशस्यापि क्लेशविशेषासहिष्णुत्वं किमुतान्यस्येति द्योत्यते। यद्वा यो हि स्वयं दुःखाभिज्ञः स एव परस्य दुःखनिवृत्तिं वाञ्छतीति कश्चित्कंचिद्वक्ति। एवं च फणेर्वेदनाभिज्ञत्वेन शंभोः कठोरकुचवेदना मा भवत्विति बुद्धिरुदेतीति ध्वन्यते। अथवात्यन्तमानवती सा नायातीति दुष्टदूतीवचनाच्छिथिलयत्नं नायकं नायिकासखी वक्ति। फणीत्यनेन दुष्टत्वं द्योत्यते। यद्वा नायकं प्रति स्वयातायातभयान्नायिकादुःस्वभावेति कथयन्तीं नायकसखीं ज्ञात्वा नायिकासखी नायकं प्रति वक्ति। एवं चेयं त्वदीयदुष्टसखी स्वयातायातादिपीडाभयेन तस्या एतादृशस्वभावशालित्वं त्वय्यावेदयति, न वास्तवं सा तथेति ध्वन्यते। तेन च त्वरस्व तद्दर्शनयत्न इति॥

काचित्कांचित्कस्याश्चिद्वार्तां वक्ति—

प्रिय आयातो दूरादिति या प्रीतिर्बभूव गेहिन्याः।
पथिकेभ्यः पूर्वागत इति गर्वात्सापि शतशिखरा॥ ३८९॥

**प्रिय इति**। दूरादायात इति हेतोर्गेहिन्या या प्रीतिर्बभूव सा पथिकेभ्योऽपि

पूर्वमागत इति गर्वादत्यधिका जाता। अन्येषां न तथा स्वप्रियासु प्रीतिर्यथा मत्प्रियस्येति धियेति भावः। प्रियपदमागमनेन प्रीतिजनकत्वमावेदयति। दूरादित्यनेन चिरविरहशालित्वं द्योत्यते। गेहिनीपदेन गृहव्यासङ्गप्रवणाया अप्येतादृशावस्थावत्त्वं तत्रेतरस्याः किं वक्तव्यमिति ध्वन्यते। पथिकपदं प्रियात्पूर्वं प्रचलितत्वं व्यञ्जयति। बहुवचनेन सर्वेषामपि पश्चात्परित्यागेनोत्कण्ठातिशयशालित्वं नायके व्यज्यते। एवं चान्येषां त्वरयानागमनेन स्वप्रियस्यागमनेन नायिकायां गुणातिशयो द्योत्यते। तेन चेतरनायिकाव्यतिरेको ध्वन्यते। शिखरस्य पर्वतसंबन्धित्वात्प्रीतौ चात्युत्कटत्वं लक्ष्यते। प्रयोजनं चेतरगर्वव्यतिरेकः॥

नायिकासखी नायकमन्योक्त्या नायिकाप्रेम वक्ति—

पृष्ठं प्रयच्छ मा स्पृश दूरादपसर्प विहितवैमुख्य।
त्वामनुधावति तरणिस्तदपि गुणाकर्षतरलेयम्॥ ३९०॥

**पृष्ठमिति**। हे विहितवैमुख्य। पक्षे कृतौदासीन्य। वैमुख्यकार्यमाह—पृष्ठं प्रयच्छ। तीरस्थिततरणेः पृष्ठेनैव गभीरजलनिरसनमिति कैवर्तकसंप्रदायः। यद्वा गुणाकर्षकस्य नौकासांमुख्याभावादिति भावः। अत एव मा स्पृश। करेणेति भावः। पक्षे विलोकनाभावं कुरु, आलिङ्गनं च मा कुरु। दूरादपसर्प। पक्षे निकटवर्तित्वाभावं कुरु। तथापि गुणैस्तृणरचितैः। पक्षे चातुर्यादिभिः। आकर्षणं तेन चञ्चलेयं तरणिस्त्वामनुधावति। एवं च यद्यपि त्वमुदासीनस्तथापि त्वदीयचातुर्यादिगुणलुब्धः त्वामेवानुसरतीति ध्वन्यते। तेन च नैतादृगाचरणमुचितं तवेति। नौरपि पृष्ठप्रदानादिकारिणमनुलक्षीकृत्य निषादकर्तृकगुणकरणकाकर्षणेनागच्छतीति भावः॥

नायकः सखायं वक्ति—

प्रियया कुङ्कुमपिञ्जरपाणिद्वययोजनाङ्कितं वासः।
प्रहितं मां याच्ञाञ्जलिसहस्रकरणाय शिक्षयति॥ ३९१॥

**प्रिययेति**। प्रियया, न तु नायिकया। कुङ्कुमेन पिञ्जरं यत्करयुगलं तद्विधानचिह्नितं प्रेषितं वासोऽनेकप्रार्थनाञ्जलिसंपादनाय मां शिक्षयति। कुङ्कुमपिञ्जरत्वेनारक्तत्वम्, तेन च कोपवत्त्वं द्योत्यते। पाणिद्वययोजनाङ्कितमित्यनेन मत्प्रणतिरावेद्यते। एवं च प्रणामोऽयं भवतामास्तामत्रागमनं भवतामिति द्योत्यते। तेन कुपितत्वे ज्ञातेऽनेकप्रार्थनाञ्जलिकरणं मम प्राप्तमिति ध्वन्यते। यद्वा प्रियैकप्रणामग्रहणजन्यौद्धत्यनिवारणकारणानेकप्रणामकरणं मम प्राप्तमिति ध्वन्यते। तेन च

नायिकायामाधिक्यम् । यद्वा यथा मया त्वत्प्राप्त्यर्थमञ्जलिः क्रियते तथा त्वया मदर्थं मदीयगुरुष्वञ्जल्यो विधेया इति शिक्षा । माङ्गलिकत्वेन कुङ्कुमसंबन्धः । अथवाहं रजःशालिनीत्यतः क्षन्तव्यो मदनागमनापराध इति ज्ञापनायैकाञ्जलिकरणे मयाञ्जलिसहस्रकरणेनेदानीमेव रतमभ्यर्थनीयमिति भावः ॥

दूती कस्याश्चित्साहसकथनेन नायिकायाः साहसकर्तृत्वमुपदिशति—

प्राचीरान्तरितेयं प्रियस्य वदनेऽधरं समर्पयति ।
प्राग्गिरिपिहिता रात्रिः संध्यारागं दिनस्येव ॥ ३९२ ॥

**प्राचीरेति** । इयं तव प्रतिवेशिनी प्राचीरेण व्यवहिता । 'प्राचीरं प्रान्ततो वृतिः' इत्यमरः । प्रियस्य वदनेऽधरं समर्पयति । प्राचीनाचलाच्छादिता रात्रिः संध्यारागं दिवसस्येव वदने । प्राग्गिरिसमताप्रतिपादनेन प्राचीरेऽतितुङ्गत्वं ध्वन्यते । तेन चोल्लङ्घनानर्हत्वम् । रात्रिसमताप्रतिपादनेन तमःप्रधानतयान्यजनावलोकनभीतिशून्यत्वं नायिकायामावेद्यते । तेन चात्यन्तानुरागवत्त्वम् । संध्यारागमित्यनेनात्यन्तर्लौहित्यवत्त्वमधरे व्यज्यते । दिनस्येत्यनेन बहिर्वर्तितया नायके लोकदृश्यत्वं ध्वन्यते । समर्पयतीत्यनेन स्वयं चुम्बनविरामासंपादनेन रागोद्धुरत्वं नायिकायां द्योत्यते । एवं च त्वयापि भीतिमुत्सृज्यैवंविधाचरणमाचरणीयमिति ध्वन्यते ॥

नायिका नायकं वक्ति—

परपतिनिर्दयकुलटाशोषित शठ नेर्ष्यया न कोपेन ।
दग्धममतोपतप्ता रोदिमि तव तानवं वीक्ष्य ॥ ३९३ ॥

**परेति** । परस्याः पत्यौ निर्दया या अनेकगामिन्यस्ताभिर्हृतशरीरसार । सर्वस्वपरत्वेन कादाचित्कलाभवत्त्वम्, तेन चात्यन्तसुरतसंपादनार्हत्वं ध्वन्यते । शठ । एवं च विश्वासाभाववत्त्वमन्यवचनप्रामाण्यानभ्युपगन्तृत्वं च व्यज्यते । नेर्ष्यया । तासामिति भावः । न कोपेन । किमिति तत्र गम्यत इति हेतोरिति भावः । दग्धममतोपतप्ताहं तव कार्श्यं वीक्ष्य रोदिमि । दग्धपदेन ममताया निवारणानर्हतयात्यन्तदुःखदत्वं ध्वन्यते । एवं चैतादृशेऽपि त्वयि मम ममतेति स्वस्मिन्नाधिक्यमावेद्यते । अन्योऽपि संतप्तो रोदितीति लौकिकम् ॥

प्राङ्गण एव कदा मां श्लिष्यन्ती मन्युकम्पिकुचकलशा ।
अंसनिषण्णमुखी सा स्नपयति बाष्पेण मम पृष्ठम् ॥ ३९४ ॥

**प्राङ्गण इति** । प्राङ्गण एव । एवं च प्रेमाधिक्यमावेद्यते । मां श्लिष्यन्ती ।

कोपेन । कथमियन्ति दिनान्यतिवाहितानि विदेश इति धियेति भावः । कम्पितस्तनकलशा । स्कन्धस्थितवदना सा पूर्वानुभूता बाष्पेण मम पृष्ठं कदा स्नपयति । स्नपयिष्यतीत्यर्थः । पथिकाशंसनमेतत् ॥

कथमीदृशभयानकावसरे प्रियसविधे समभिसरणमिति वादिनीं नायिकां दूती कस्याश्चिद्वृत्तकथनव्याजेन सति प्रेम्णि न कस्यापि भीतिरिति वक्ति—

प्रेतैः प्रशस्तसत्त्वा साश्रु वृकैर्वीक्षिता स्खलद्ग्रासैः ।
चुम्बति मृतस्य वदनं भूतमुखोल्केक्षितं बाला ॥ ३९५ ॥

**प्रेतैरिति** । प्रेतैः स्तुतसामर्थ्या । स्खलद्ग्रासैः । विस्मयादिति भावः । साश्रु । क्रियाविशेषणमेतत् । कथमीदृश्या अपि प्रियः प्रपेदे पञ्चत्वमिति शोकोद्रेकादिति भावः । वीक्षिता बाला । एवं च भीतियोग्यत्वं ध्वन्यते । भूतमुखसंबन्धिनी योल्का तयेक्षितम् । एवं चान्धकारबाहुल्यं ध्वन्यते । मृतस्य । अर्थात्स्वप्रियस्य । वदनं चुम्बति । एवं चैतादृशसमयेऽपि भीत्यनुदयेन जुगुप्साद्यभावेन च प्रेम्णि दृढत्वमावेद्यते । अत्र प्रेतैः प्रशस्तसत्त्वेत्यादिकथनं भयानकाङ्गमपि शृङ्गारपरिपोषकत्वादथवा बाध्यत्वेनोक्तत्वाद्वा 'स्मर्यमाणो विरुद्धोऽपि' इत्युक्तदिशा 'अयं स रशनोत्कर्षी' इत्यादाविव 'संचार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा' इत्युक्तदिशा 'क्वाकार्यं शशलक्ष्मणः' इत्यादाविव भयानकशृङ्गारयोरविरोधान्नासमञ्जसम् ॥

कश्चित्कंचिदुपदिशति—

पिशुनः खलु सुजनानां खलमेव पुरो विधाय जेतव्यः ।
कृत्वा ज्वरमात्मीयं जिगाय बाणं रणे विष्णुः ॥ ३९६ ॥

**पिशुन इति** । सुजनानां यदि पिशुनो जेतव्यः । एवं च सतां पिशुनजयेन न क्वापि श्लाघ्यतेति भावः । तदा निश्चयेन खलमेव पुरो विधाय । एवकारेण स्वातिरिक्तसुजनस्य निरासः । अमुमेवार्थं द्रढयितुमितिहासमाह—विष्णुः । एवं च स्वतः सामर्थ्यसत्त्वमावेद्यते । ज्वरं स्वीयत्वेन संपाद्य । एवं च दुष्टे यद्यपि स्वीयत्वसंपादनमनुचितं तथापि स्वकार्यकाल एव तत्र तद्विधेयमिति ध्वन्यते । सङ्ग्रामे बाणासुरं जितवान् । एवं च स्वस्य सामर्थ्येऽपि न दुष्टनिबर्हणं स्वयं विधेयमिति ध्वन्यते । तेन च क्लेशेऽपि दुष्टसंभाषणमनुचितमिति ॥

नायिकेयमत्यन्तमप्रगल्भेत्यतः शनैरेव किंचिदुपभोग्येति सखी नायकमन्योक्त्या वक्ति—

पिब मधुप बकुलकलिकां दूरे रसनाग्रमात्रमाधाय ।
अधरविलेपसमाप्ये मधुनि मुधा वदनमर्पयसि ॥ ३९७ ॥

**पिबेति** । हे मधुप । एवं च रसलम्पटत्वमावेद्यते । तेन च तूष्णीमवस्थित्यनर्हत्वम् । दूरे जिह्वाग्रमात्रं संस्थाप्य बकुलकलिकां पिब । अधरस्य विलेपेन समाप्तियोग्ये । अत्र लेपनेत्येव युक्तम् । मकरन्दे वृथा वदनमर्पयसि । एवं च बकुलकलिकाया अतिसूक्ष्मत्वात्तन्मधुनोऽतिस्वल्पतया वदनसंपर्के समाप्तिरेव भविष्यतीत्यतो रसनाग्रेणैव तद्ग्राह्यमिति भावः । एवं च नेयमत्यन्तसुरतविमर्दसहेति ध्वन्यते ॥

कश्चित्कंचिद्वक्ति—

प्रायेणैव हि मलिना मलिनानामाश्रयत्वमुपयान्ति ।
कालिन्दीपुटभेदः कालियपुटभेदनं भवति ॥ ३९८ ॥

**प्रायेणेति** । बाहुल्येन मलिनानामाश्रयत्वं प्राप्नुवन्ति । अर्थान्तरन्यासेनामुमेवार्थं द्रढयति—यमुनायाः पुटभेदश्चक्राणि । 'चक्राणि पुटभेदाः स्युः' इत्यमरः । कालियनामसर्पस्य पुटभेदनं पत्तनम् । 'पत्तनं पुटभेदनम्' इत्यमरः । भवति । एवं चामलिनाभिर्गङ्गादिभिर्न कालियस्याश्रयो दत्तः, किं तु कलिन्दतनययैवेति भावः । एवं च सद्भिरसतामाश्रयो न देय इति ध्वन्यते ॥

प्रियप्रीतिनिमित्तं सपत्नीसंमाननमपि विधेयमिति काचित्कांचिच्छिक्षयति—

पश्य प्रियतनुविघटनभयेन शशिमौलिदेहसंलग्ना ।
सुभगैकदैवतमुमा शिरसा भागीरथीं वहति ॥ ३९९ ॥

**पश्येति** । चन्द्रशेखरशरीरसंलग्ना उमा पार्वती । उमापदेन 'उमेति मात्रा तपसे निषिद्धा' इत्यादि कालिदासोक्तरीत्या प्रियप्रीतिस्तपोरूपक्लेशविशेषलभ्येति ध्वन्यते । प्रियशरीरविश्लेषभीत्या भागीरथीम् । भगीरथक्षत्रियसंबन्धोत्कीर्तनेन तीक्ष्णप्रतापतयातिदुःसहत्वं व्यज्यते । शिरसा वहति । इदं त्वं पश्य । एवं च त्वयाप्यनयैव रीत्या स्थेयमिति भावः । एवं च यत्र भगवत्या पार्वत्याप्येवंरीत्यावस्थीयते तत्र का वार्तान्यासामिति भावः ॥

काचिद्वक्ति—

पथिकवधूजनलोचननीरनदीमातृकप्रदेशेषु।

घनमण्डलमाखण्डलधनुषा कुण्डलितमिव विधिना॥ ४०० ॥

**पथिकेति**। पथिकाङ्गनानयनबाष्पैर्नदीमातृका नद्यम्बुपालिताः प्रदेशास्तेषु वेधसा कर्तृभूतेनेन्द्रधनुषा करणभूतेन मेघमण्डलं कुण्डलितमिव। पथिकाङ्गनाश्रुभिरेव सस्योत्पत्तेर्मेघमण्डलस्यानर्थक्यादिति भावः। एवं च पथिकाङ्गनानयननीराधिक्यप्रतिपादनेन तासामत्यन्तदुःखमावेद्यते॥

काचित्कस्याश्चिद्वृत्तं वक्ति—

प्रतिवेशिमित्रबन्धुषु दूरात्कृच्छ्रागतोऽपि गेहिन्या।

अतिकेलिलम्पटतया दिनमेकमगोपि गेहपतिः॥ ४०१ ॥

**प्रतिवेशीति**। गेहिन्या। एवं च सर्वसामर्थ्यमावेद्यते। क्लेशागतोऽपि। एवं च झटिति सर्वग्राह्यदर्शनयोग्यत्वं ध्वन्यते। गेहपतिः। एवं च बहुतरदिनोत्तरागमनतया सर्वकार्यस्य स्वमात्रकर्तृकतया सर्वदर्शनयोग्यत्वं व्यज्यते। अत्यन्तं या क्रीडासक्तिस्तया प्रतिवेशिमित्रबन्धुषु। एवं च गोपनानर्हत्वमावेद्यते। एकं दिनमगोपि। यद्वा गेहिन्या अप्येतादृशी गतिस्तत्र का वार्तान्यस्या इति काचित् 'कथमीदृशक्रीडालम्पटा त्वम्' इति वादिनीं प्रति वक्ति॥

नायिका नायकं प्रति वक्ति—

परपट इव रजकीभिर्मलिनो भुक्त्वापि निर्दयं ताभिः।

अर्थग्रहणेन विना जघन्य मुक्तोऽसि कुलटाभिः॥ ४०२ ॥

**परेति**। हे निन्द्य। निन्द्यकार्यकारित्वादिति भावः। रजकीभिः परपट इव ताभिः प्रसिद्धाभिः कुलटाभिः मलिनस्त्वं निर्दयं भुक्त्वा। परकीयत्वादिति भावः। द्रव्यग्रहणेन विना परित्यक्तोऽसि। एवं च कुलटात्वेन बहुनायकविषयरतिमत्तया तद्रतेराभासतया 'अर्थादोषधवत्कामः' इत्युक्तदिशा च तत्र न रस इति ध्वन्यते। अत्रान्यद्विचारजातमस्मत्कृतरसमञ्जरीटिप्पणे द्रष्टव्यम्॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता पकारव्रज्या।

---

वकारव्रज्या ।

काचित्कस्याश्चिद्वृत्तं वक्ति—

बहुयोषिति लाक्षारुणशिरसि वयस्येन दयित उपहसिते ।
तत्कालकलितलज्जा पिशुनयति सखीषु सौभाग्यम् ॥ ४०३ ॥

**बह्विति** । बहुतरनायिकाशालिनि लाक्षयारुणमस्तके प्रियतमे वयस्येनोपहसिते । कथं स्त्रीप्रणाममकरोदिति । तत्कालकृतलज्जा नायिका सखीषु सौभाग्यं सूचयति । बहुतराङ्गनाजातमपहाय मय्येवासक्त्या मच्चरणप्रणतिजन्यैवेयमरुणतैतच्छिरसीति द्योतनेनेति भावः । यद्वा यद्यपि नायको न तथा प्रेमादि विदधाति तथापि सख्यादिषु तु मय्येव प्रेमवानिति प्रदर्शनेन स्वगौरवं रक्षणीयमिति तत्प्रदर्शनप्रकारं काचित्कांचिदुपदिशति । बहुयोषितीत्यनेनानेकनायिकाचिन्तया किमीयचरणालक्तक इति संदेहयोग्यत्वं ध्वन्यते । तत्कालं वयस्योपहासैककालम् । अङ्गीकृतलज्जैव सखीषु सौभाग्यं सूचयति । एवं चैतादृशसमयेऽनया रीत्या स्वसौभाग्यप्रदर्शनं विधेयमित्यावेद्यते । तेन चैतादृशेऽपि समये न मनसि खेदो विधेयः, किंतु हर्ष एवाविष्करणीय इति ॥

कश्चिन्नायिकाकेशकलापं स्तौति—

बन्धनभाजोऽमुष्याश्चिकुरकलापस्य मुक्तमानस्य ।
सिन्दूरितसीमन्तच्छलेन हृदयं विदीर्णमिव ॥ ४०४ ॥

**बन्धनेति** । बन्धनवतः । गतपरिमाणस्य । अतिदीर्घस्येत्यर्थः । पक्षे गताभिमानस्य । अस्याः केशकलापस्य सिन्दूरयुक्तो यः सीमन्तस्तन्मिषेण हृदयं विदीर्णमिव । बन्धनवतो गताभिमानस्यापि विदीर्णहृदयता भवतीति लौकिकम् ॥

काचित्कंचिद्वक्ति—

बलमपि वसति मयीति श्रेष्ठिनि गुरुगर्वगद्गदं वदति ।
तज्जायया जनानां मुखमीक्षितमावृतस्मितया ॥ ४०५ ॥

**बलमिति** । सामर्थ्यमपि । अपिना गुणादिसमुच्चयः । मयि वसति । वसतीत्यनेन यो हि यदधिकं स्थलं जानाति तत्रैव वसतीत्यतोऽन्यनायकव्यतिरेकः स्वस्मिन्नावेद्यते । इत्यतिगर्वगद्गदं यथा स्यात्तथा वदति सति संकुचितस्मितया । एवं च किंचित्सलज्जत्वमावेद्यते । तदङ्गनया लोकानाम् । तद्वार्तादत्तावधानानामिति भावः ॥

वदनमीक्षितम् । मत्समाधानलेशमपि कर्तुं न शक्नोति वदति त्वेतादृशमपीति विस्मयेनेति भावः । एवं च वणिजः पुंस्त्वहीनतया तदङ्गनायाश्च समृद्धमन्मथत्वेन तत्र त्वद्गमनेन तस्या आसक्तिस्त्वयि भविष्यतीति ध्वन्यते ॥

कस्याश्चिद्गुणादिकं कस्यचिद्वदनादाकर्ण्य कश्चित्तस्यामासक्त इति मधुपनलिनीवृत्तान्तव्याजेन काचिद्वक्ति—

**बलवदनिलोपनीतस्फुटितनवाम्भोजसौरभो मधुपः ।**
**आकृष्यते नलिन्या नासानिक्षिप्तबडिशरज्जुरिव ॥ ४०६ ॥**

**बलवदिति ।** बलवान्यो वायुस्तेन समीपानीतं विकसितनवकमलसौगन्ध्यं यस्य स मधुपो भ्रमरः कमलिन्या नासायां निक्षिप्ता बडिशस्य मत्स्यवेधनस्य । 'बडिशं मत्स्यवेधनम्' इत्यमरः । रज्जुर्यस्यैतादृश इवाकृष्यते । क्वचिद्बडिशपदरहितः पाठः ॥

गुणमात्रग्राहकत्वं सुजनत्वम्, दोषमात्रग्राहकत्वं पिशुनत्वमिति कश्चित्कंचिद्वक्ति—

**बाणं हरिरिव कुरुते सुजनो बहुदोषमप्यदोषमिव ।**
**यावद्दोषं जाग्रति मलिम्लुचा इव पुनः पिशुनाः ॥ ४०७ ॥**

**बाणमिति ।** हरिर्विष्णुर्बाणासुरमिव सुजनो बहुदोषमपि । गुणभिन्नो दोषः । पक्षे बहुतरबाहुशालिनम् । दोषशून्यमिव । पक्षे बाहुरहितम् । कुरुते । मलिम्लुचा इव तस्करा इव पिशुनाः । पुनःशब्दोऽन्यदित्यर्थे । यावद्दोषम् । समग्रदोषमित्यर्थः । पक्षे यावद्रात्रिम् । जाग्रति । तद्विषयकगवेषणावन्तो भवन्तीत्यर्थः । पक्षे निद्राभाववन्त इत्यर्थः । परस्वापहरणार्थमिति भावः । एवं च सुजनान्न भीतिः, किं तु दुर्जनादेवेत्यतस्त्वं ततः सावधानतया तिष्ठेति ध्वन्यते ॥

नायिकादूती नायकं वक्ति—

**बौद्धस्येव क्षणिको यद्यपि बहुवल्लभस्य तव भावः ।**
**भग्ना भग्ना भ्रूरिव न तु तस्या विघटते मैत्री ॥ ४०८ ॥**

**बौद्धस्येति ।** बौद्धस्येव बह्व्यो वल्लभा नायिका यस्य । पक्षे बहूनां वल्लभस्य भक्तिविषयस्य । तव यद्यपि भावश्चित्ताभिप्रायः, प्रेम वा । पक्षे पदार्थः । क्षणिकोऽस्थिरः । बौद्धमते तु पदार्थस्य क्षणिकत्वादस्थिरत्वम् । तथापि भग्ना भग्ना

भ्रूरिव तस्या मैत्री न तु विघटते । एवं च भग्नभ्रुवोर्यथा चमत्काराधायकत्वं तथा तदीयकलहस्य प्रीतिजन्यतया तत्त्वमित्यवेहीति ध्वन्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता बकारव्रज्या ।

---

भकारव्रज्या ।

कश्चन दैन्यकारिणं महाकायमन्योक्त्या निन्दति—

**भ्रमसि प्रकटयसि रदं करं प्रसारयसि तृणमपि श्रयसि ।**
**धिङ्मानं तव कुञ्जर जीवं न जुहोषि जठराग्नौ ॥ ४०९ ॥**

**भ्रमसीति** । हे कुञ्जर, भ्रमसि । दन्तं प्रकटयसि । रदमित्येकत्वमविवक्षितम् । करं शुण्डां हस्तं च प्रसारयसि । तृणमपि । अपिनानाश्रयणीयत्वमावेद्यते । आश्रयसि । अतस्तव मानं महापरिमाणं धिक् । उदरानले जीवं न जुहोषि । एवं चोदरपूर्त्यर्थमेतादृक्करणमत्यन्तानुचितमिति व्यज्यते । अन्योऽप्युदरपूरणार्थं नीचत्वमुपगत इतस्ततो भ्रमणादि करोतीति लौकिकम् ॥

लघोर्झटित्यपकारः कर्तुं शक्योऽनेन न गौरववत इति कश्चित्कंचिद्वक्ति—

**भूतिमयं कुरुतेऽग्निस्तृणमपि संलग्नमेनमपि भजतः ।**
**सैव सुवर्ण दशा ते शङ्के गरिमोपरोधेन ॥ ४१० ॥**

**भूतीति** । संलग्नमपि । एवं च न चिरकालस्तद्विनाश इति भावः । तृणमग्निर्भस्मरूपं कुरुते । विनाशयतीत्यर्थः । हे सुवर्ण, एनं भजतोऽपि चिरसंबन्धवतोऽपि ते सैव दशा गुरुत्वानुरोधेनेति तर्कयामि । एवं चायमपकारकारक एव परं तु त्वं स्वगौरवबलादेव यथावस्थितोऽतिष्टस्यतो नैनं सेवेयेति ध्वन्यते । यद्वौद्धत्यविहीनैतत्सेवाकरणेऽत्यन्तमर्थावाप्तिरिति कश्चिदन्योक्त्या वक्ति । तृणमित्यनेन दीनमित्यावेद्यते । अत्र समित्युपसर्गो नोचितः । ऐश्वर्यप्रचुरं कुरुते । सुवर्ण, एनं भजतस्ते गुरुत्ववत्त्वात्सैव दशा । एवं च त्वयौद्धत्येन नैतस्मात्किंचिदवाप्तमित्यावेद्यते ॥

कश्चित्कांचित्प्रति संकेतं वक्ति—

**भवति निदाघे दीर्घे यथेह यमुनेव यामिनी तन्वी ।**
**द्वीपा इव दिवसा अपि तथा क्रमेण प्रथीयांसः ॥ ४११ ॥**

**भवतीति** । इहैतस्मिन्निदाघे महत्तरे सति । 'दीर्घो' इति पाठे पूर्वकाला-

भिप्रायेण यामिनीविशेषणम् । यमुनेव रात्रिः स्वल्पा भवति । तथा क्रमेण द्वीपा इव । 'द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्' इत्यमरः । दिवसा महत्तरा भवन्ति । यमुनायास्तन्वीत्वकथनेन चरणसंचरणयोग्यत्वं व्यज्यते । द्वीपानां प्रथीयस्त्वकथनेनानेककुञ्जवत्त्वम्, तेन च तत्र क्रीडाविशेषसंपादनयोग्यत्वं ध्वन्यते । एवं च रात्रेरतितनीयस्तया रतविशेषानर्हत्वेन, दिवसानामतिदीर्घतया दिवैव यमुनाद्वीप एव संकेतयोग्यस्तन्निश्चय एव विधेय इति द्योत्यते ॥

नायिकासखी नायकं वक्ति—

भवता महति स्नेहानलेऽर्पिता पथिक हेमगुटिकेव ।
तन्वी हस्तेनापि स्प्रष्टुमशुद्धैर्न सा शक्या ॥ ४१२ ॥

**भवतेति** । भवता महति प्रीतिरूपवह्नौ । एवं च त्वत्प्रीतेर्दुःखदत्वं ध्वन्यते । पक्षे तैलसंबन्धिवह्नौ यार्पिता सुवर्णगुटिकेव । एवं च नायिकायां गौराङ्गीत्वमावेद्यते । सा तन्वी हे पथिक प्रवासशालिन् । एवं चान्यथाबुद्धियोग्यत्वं द्योत्यते अशुद्धैर्हस्तेन स्प्रष्टुमपि । एवं च हस्ते स्थापयितुं न शक्येति किं वक्तव्यामिति भावः । न शक्या । एवं चेयं त्वदासक्त्या नान्यं कमपि चित्तपथे करोतीति ध्वन्यते । तप्ततैले प्रक्षिप्ता सुवर्णादिगुटिका सदोषैर्न स्प्रष्टुं शक्येति दिव्यादिव्यवहारः॥

कश्चित्सखायं वक्ति—

भूमिलुलितैककुण्डलमुत्तंसितकाण्डपटमियं मुग्धा ।
पश्यन्ती निःश्वासैः क्षिपति मनोरेणुपूरमपि ॥ ४१३ ॥

**भूमीति** । भूमौ लुलितं संलग्नमेकं कुण्डलं यत्र । उत्तंसीकृतः काण्डपटो यत्र । पश्यन्तीयं मुग्धा निःश्वासैः । क्लेशजन्यैरिति भावः । मनोरेणुसमूहमपि क्षिपति । एवं चैतस्या एतादृशावलोकनेन मम मनोऽवतिष्ठते मयीति ध्वन्यते ॥

मूर्खाङ्गनाभिलाषिणं कंचन काचिदन्योक्त्या वदति—

भवतालिङ्गि भुजंगी जातः किल भोगिचक्रवर्ती त्वम् ।
कञ्चुक वनेचरीस्तनमभिलषतः स्फुरति लघिमा ते ॥ ४१४ ॥

**भवतेति** । हे कञ्चुक, येन भवता भुजंगी उरगी । पक्षे वेश्या । आलिङ्गिता, यस्त्वं निश्चयेन भोगिनामुरगाणाम् । पक्षे भोगोपचारशालिनाम् । समूहवर्ती, यद्वा तेषु राजा जातः । तस्य ते वनेचरी भिल्लकान्ता । पक्षे वनेचरीत्वेन मूर्खताशालित्वं

ध्वन्यते। स्तनमित्येकत्वमविवक्षितम्। इच्छतो लाघवं स्फुरति। एवं च चतुराया: संगतिं परित्यज्याचतुरासंगतीच्छा लाघवकारिणीति ध्वन्यते॥

केनचित्कस्याश्चित्संकेतः कृत इति कश्चित्कंचिद्वक्ति—

भैक्षभुजा पल्लीपतिरिति स्तुतस्तद्वधूसुदृष्टेन।

रक्षक जयसि यदेकः शून्ये सुरसदसि सुखमस्मि॥ ४१५॥

**भैक्षेति**। तस्य पल्लीपतेर्वध्वा सुदृष्टेन। सकामदृष्ट्यावलोकितेनेत्यर्थः। भिक्षा-संबन्ध्यन्नभोजनवता। एवं च प्रयासशून्यत्वेन पुष्टत्वाद्यभिव्यज्यते। पल्लीपतिः। एवं च चातुर्यविशेषाशालित्वं ध्वन्यते। इति स्तुतः स्तुतिविषयीकृतः। तामेवाह— रक्षक, सर्वोत्कर्षेण तिष्ठसि। यस्मादेक इतरशून्यः शून्ये मदतिरिक्तजनरहिते देवालये सुखमस्मि। एवं च त्वद्रक्षणसामर्थ्यान्न क्वापि कस्यापि भीतिरिति भावः। एवं च देवालये मयैकाकिना स्थीयते तत्र त्वयागन्तव्यमिति ध्वन्यते॥

वृद्धेन स्त्रीसंग्रहो वसुसंग्रहो वा न विधेय इति कश्चित्कंचिद्वक्ति—

भोगाक्षमस्य रक्षां दृङ्मात्रेणैव कुर्वतोऽनभिमुखस्य।

वृद्धस्य प्रमदापि श्रीरपि भृत्यस्य भोगाय॥ ४१६॥

**भोगेति**। भोगो रतम्, स्रक्चन्दनादिकं च। तत्रासमर्थस्य। दृष्टिमात्रेण रक्षणं कुर्वतः। मात्रपदेन शरीरसामर्थ्याभावो ध्वन्यते। 'वाङ्मात्रेण' इत्यपि पाठः। अनभिमुखस्य, असामर्थ्यात्तत्कटाक्षनिरीक्षणासमर्थस्य, अर्थिपराङ्मुखस्य च। वृद्धस्य प्रकृष्टमदशालिनी नायिकापि लक्ष्मीरपि सेवकस्य भोगाय। एवं चैतदुभय-संग्रहोऽनर्थक एव तस्येति द्योत्यते॥

भवितासि रजनि यस्यामध्वश्रमशान्तये पदं दधतीम्।

स बलाद्वलयितजङ्घाबद्धां मामुरसि पातयति॥ ४१७॥

**भवितेति**। हे रजनि, यस्यां त्वयि श्रमापनोदाय पदं दधतीम्। वलयिता या जङ्घा तया बद्धां मामुरसि पातयिष्यति, एतादृशी त्वं भवितासि। श्रमापनोद-नाय श्रान्तस्य चरणाद्युपरि चरणदानादि विधीयत इति लौकिकम्। पथिकाङ्गना-शंसनमेतत्॥

किमित्यस्य गौरवादि न विधीयते त्वयेति वादिनीं सखीं नायिका वक्ति—

भूषणतां भजतः सखि कषणविशुद्धस्य जातरूपस्य।
पुरुषस्य च कनकस्य च युक्तो गरिमा सरागस्य॥ ४१८॥

**भूषणतामिति**। हे सखि, भूषणतां सर्वोत्कृष्टतां कटकादिरूपतां च भजतः। कषणेन चिरकालीनसंगत्या निकषोपलेन च विशुद्धस्य विज्ञातसकलस्वभावस्य विज्ञातशुद्धेश्च। जातरूपस्य सुरूपस्य। यद्वा यतो रूपादिकमित्यर्थः। पक्षे सुवर्णस्य। 'चामीकरं जातरूपम्' इत्यमरः। सरागस्य प्रीतिमतः। पक्षे रागो लौहित्यम्। पुरुषस्य च, कनकस्य च, गरिमा गौरवम्। पक्षे परिमाणम्। युक्तम्। एवं चैतादृशस्यैव गौरवमुचितम्, अन्यादृशस्य नेति भावः॥

स्वगुणैः प्रियवश्यताविधानदक्षाम् 'कार्मणेनाऽनया पतिः स्वाधीनतामानीतः' इति सपत्नीभिः प्रोच्यमानां नायिकां काचिदन्योक्त्या वक्ति—

भस्मपरुषेऽपि गिरिशे स्नेहमयी त्वमुचितेन सुभगासि।
मोघस्त्वयि जनवादो यदोषधिप्रस्थदुहितेति॥ ४१९॥

**भस्मेति**। भस्ममलिनेऽपि गिरिशे। एवमपि काठिन्यमावेद्यतेऽज्ञत्वं वा। तेन दुराराध्यत्वम्। स्नेहः प्रीतिस्तत्स्वरूपा, न तु प्रीतिकर्त्री। प्रीतिप्रचुरेति कश्चित्। इत्युचितेन सुभगासि। परं तु यत्, ओषधीनां प्रस्थानि सानूनि यस्मिंस्तस्य दुहितेति। 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः। एवं चानया कार्मणबलेन पतिर्वश्यतामानीत इति जनवादः। जनपदमनिवारणीयतां ध्वनयति। मोघोऽलीकः। एवं च त्वया नायकः स्वगुणैरेव स्वाधीनतां नीतः, न तु कार्मणबलेनेति व्यज्यते। तेन च लोकस्य भ्रान्तत्वम्। तेन च तद्वचनस्याप्रामाण्यम्॥

निकटस्थाया अपि नवोढाया उपभोगो दुःसाध्य इति कश्चिद्वक्ति—

भयपिहितं बालायाः पीवरमूरुद्वयं स्मरोन्निद्रः।
निद्रायां प्रेमार्द्रः पश्यति निःश्वस्य निःश्वस्य॥ ४२०॥

**भयेति**। बालाया भयेन। नवोढास्वभावसुलभेनेति भावः। आच्छादितं पीवरं जङ्घाद्वयं प्रेमार्द्रः। प्रेमयुक्त इति यावत्। मदनोद्गतनिद्रो नायको निद्रायाम्। नायिकाया इति भावः। निःश्वस्य निःश्वस्य। संभोगाभावादिति भावः। पश्यति। यद्वा यस्य यत्र मनस्तदेव तेन निद्रायामपि दृश्यत इति कश्चित्कंचिद्वक्ति। निद्रायां

स्वस्येति भावः । एवं च जाग्रद्दशायां यादृग्दृष्टं बालाया ऊरुद्वयं तादृगेव निद्रायां पश्यतीति भावः ॥

नायिकासखी नायकं वक्ति—

**भ्रमरीव कोषगर्भे गन्धहृता कुसुममनुसरन्ती त्वाम् ।**
**अव्यक्तं कूजन्ती संकेतं तमसि सा भ्रमति ॥ ४२१ ॥**

**भ्रमरीति** । गन्धेन परिमलेन स्वाधीनीकृतचित्ता कुसुममनुसरन्ती कोषगर्भे भ्रमरीव त्वामनुसरन्ती । अव्यक्तम् । लोकभयादिति भावः । पक्षे कोषैराच्छादितत्वात् । कूजन्ती सा तमसि संकेतं भ्रमति । नायिकाया भ्रमरीसाम्येन नायके च कुसुमसाम्येन यथा कुसुमानुसरणं विना न गतिर्भ्रमर्यास्तथा त्वदनुसरणं विना न गतिर्नायिकाया इति द्योत्यते ॥

एतस्या मय्यनुरागश्चिरं स्थास्यति न वेति संशयानं नायकं नायिकासखी वक्ति—

**भ्रामं भ्रामं स्थितया स्नेहे तव पयसि तत्र तत्रैव ।**
**आवर्तपतितनौकायितमनया विनयमपनीय ॥ ४२२ ॥**

**भ्राममिति** । तत्र तत्र तद्विधानशालिनि । लोकोत्तर इति यावत् । तव स्नेहरूपे पयसि । पयःपदेन माधुर्याद्यभिव्यज्यते । पक्षे स्नेहयुक्ते जले । भ्रान्त्वा भ्रान्त्वा स्थितयानया विनयं नम्रतां विशिष्टनीतिं वा । पक्षे विशिष्टनयनम् । अपनीय । आवर्तेऽम्भसां भ्रमे पतिता या नौका तद्वदाचरितमेव । एवं च नान्यथा शङ्कनीयमिति भावः । एवं च यथा जले स्थिता नौकावर्तपतिता ततोऽन्यत्र न गच्छति, तथेयं तव स्नेहे स्थिता नान्यत्र चित्तं करिष्यतीति व्यज्यते । तेन च सर्वथैवेयमनुग्राह्येति ॥

काचित्कांचिद्वक्ति—

**[1]भ्रमयसि गुणमयि कण्ठग्रहयोग्यानात्ममन्दिरोपान्ते ।**
**हालिकनन्दिनि तरुणान्ककुद्मिनो मेढिरज्जुरिव ॥ ४२३ ॥**

---

१. अस्या आर्यायाः पुस्तकान्तरे तु व्याख्याभेदो यथा—'काचिदन्योक्त्या हलिकवधूं प्रत्याह—भ्रमयसीति । सौन्दर्यशालिनि । पक्षे तन्तुप्रचुरे । कण्ठग्रहयोग्यानालिङ्गनयोग्यान् । पक्षे ताडनयोग्यान् । स्वगृहसमीपे नूतनान् । पक्षे यूनः । उक्षांसान् । पक्षे बलीवर्दान् । मेढिरज्जुरिवेतस्ततः संचारयसि । सुरतस्थलाप्राप्त्येति भावः । 'गुणमय–' इति पाठे गुणप्रचुराश्च ते कण्ठग्रहयोग्याश्च तानित्यर्थः ॥'

**भ्रमयसीति** । हे हालिकनन्दिनि । हालिकपदेन जातिशून्यत्वम्, तेन च कामुकागमनसौकर्यम्, विवाहयोग्येयं जातेति ज्ञानवैधुर्येण कंचित्कालं यथेच्छपरपुरुषभोगसंपादनयोग्यत्वं ध्वन्यते । गुणाः सौन्दर्यादयः । पक्षे तन्तवः । स्वसदननिकटे कण्ठग्रहयोग्यानालिङ्गनयोग्यान् । पक्षे कण्ठबन्धनयोग्यान् । तरुणान् । मेढिरज्जुः । 'पुंसि मेढिः खले दारु न्यस्तं यत्पशुबन्धने' इत्यमरः । वृषभानिव भ्रमयसि । एवं चैते गृहमध्य एव कुतो नानीयन्ते भीतेरभावादिति भावः । 'गुणमय–' इति पाठे गुणप्रचुराश्च ते कण्ठग्रहयोग्याश्च तानित्यर्थः ॥

कश्चित्कंचित्प्रत्यन्योक्त्या वक्ति—

भालनयनेऽग्निरिन्दुर्मौलौ गात्रे भुजंगमणिदीपाः ।
तदपि तमोमय एव त्वमीश कः प्रकृतिमतिशेते ॥ ४२४ ॥

**भालेति** । हे ईश । एवं चोक्तदोषदानानर्हत्वं ध्वन्यते । यद्यपि तव ललाटनेत्रे वह्निः, मस्तके चन्द्रः, शरीरे सर्पमणिरूपा दीपास्तथापि त्वं तमोमय एव । एनमर्थमर्थान्तरोपन्यासेन द्रढयति । स्वभावं कोऽतिक्रमते । न कोऽपीत्यर्थः । प्रकाशकवस्तुबाहुल्येऽप्यन्धकारप्रचुरत्वमिति विरोधः । तदभावस्तु तमःपदस्य गुणविशेषवाचित्वात् । एवं च यद्यपि समीचीनसात्त्विकसंगतिस्तवास्ति, तथापि त्वदीयं स्वाभाविकं तमोगुणप्रकृतित्वं नापगच्छतीति व्यज्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता भकारव्रज्या ।

---

मकारव्रज्या ।

आसक्तचित्तेनाङ्गनौद्धत्यमपि न गण्यत इति काचित्कंचिद्वक्ति—

मधुमदवीतव्रीडा यथा यथा लपति संमुखं बाला ।
तन्मुखमजाततृप्तिस्तथा तथा वल्लभः पिबति ॥ ४२५ ॥

**मध्विति** । मद्यमदा । अत एव गतलज्जेति विग्रहः । मधुमदेन वीतव्रीडेति

---

१. अत्रापि पुस्तकान्तरे व्याख्याभेदो यथा—'कश्चन भक्तः शिवं प्रति वक्ति—भालेति । एतादृशप्रकाशकसामग्रीसत्त्वेऽपि तमोरूपगुणमय एव । अमुमेवार्थं द्रढयति—कः स्वभावमतिशेते । त्यजतीत्यर्थः । एवं चाज्ञेयोऽसीति व्यज्यते । अथवा नायकीयपराङ्गनासक्तज्ञानोत्तरं विमनस्कां नायिकां सखी दृष्टान्तद्वारा समाधत्ते—तथा च यत्रेश्वरास्याप्येतादृश्यवस्था तत्र का वार्ता वाच्या त्वदीयनायकस्येति भावः ॥'

करणे मदपदमधिकमिवाभाति । बाला एवं च लज्जौचित्यमावेद्यते । यथा यथा संमुखम् । अर्थान्नायकस्य । वक्ति । वल्लभोऽजाततृप्तिः सन्बालामुखं तथा तथा सादरमवलोकयति । एवं च रसिकानां नायिकौद्धत्यकृतवचनरचनादिकं न दुःखदम्, अतस्त्वयैतादृशैतद्वचनादिना कोपो न विधेय इति ध्वन्यते ॥

सखी नायिकां वक्ति—

मित्त्रैरालोच्य समं गुरु कृत्वा कदनमपि समारब्धः ।
अर्थः सतामिव हतो मुखवैलक्ष्येण मानोऽयम् ॥ ४२६ ॥

**मित्त्रैरिति** । मित्त्रैः समं विचार्य, महत्तरं कलहमपि कृत्वा, सम्यक् । आटोपपुरःसरमिति भावः । प्रारब्धः । अर्थ इव सतां सभ्यानां मुखवैलक्ष्येण । असम्यगिदमिति धियेति भावः । अयं मानस्तव मुखवैलक्ष्येण । प्रसादजन्येनेति भावः । हतः । एवं च यथा मित्त्रैः समं विचार्य महत्तरकलहं विधायारब्धोऽर्थः सतां मुखवैलक्ष्यमात्रकरणेन विनष्टो भवति, तथा ते मानः प्रसादजन्यमुखवैलक्षण्यतया विनष्टः । एवं च प्रसादचिह्नं कंचित्कालं गोपयेति ध्वन्यते । यद्वा यथा विचार्य कलहादिकं च विधायारब्धः समीचीनानामर्थो मुखवैलक्ष्येण । स्वतः कृत्रिमत्वेन ज्ञानादिति भावः । अत एव सतामिति पदमुपयोगि । हतो भवति । लोकैर्मुखवैलक्ष्येणान्यथानिर्णयादिति भावः । तथा ते मानः 'कथं समाधेयो दयितः' इत्यादिचिन्ताजन्यमुखमालिन्येन हत इत्यर्थः । अथवा मित्त्रैः समं मित्त्रतुल्यतया विचार्य । उपकारकत्वादिति भावः । मुखवैलक्ष्येणादैन्यादिवशादिति भावः । गुरु महत्तरं कदनं क्लेशादि कृत्वा सम्यगर्जितोऽप्यर्थो द्रव्यं सतां विवेकिनां दुःखदत्वादनादरणीयो भवति । तथा मित्त्रत्वेन विभाव्यैवं चास्माकमनादरकरणं न तवोचितमिति व्यज्यते । मुखवैलक्षण्येन महत्तरं कलहं कृत्वा । एवं चान्यासां दुर्वचनादिरूपः कलहः, तव तु मुखवैलक्षण्यकरणमात्ररूप इत्यन्यनायिकाव्यतिरेकः सूच्यते । कृतोऽपि तवायं मानो हतो भवति दुःखदत्वादनादरणीयो भवति । एवं चैतादृशमानविधानं तवानुचितमिति द्योत्यते ॥

कश्चिल्लज्जावशात्स्वकटाक्षविक्षेपसमयेऽन्यप्रदेशाभिमुखीं कांचिद्वक्ति—

मम रागिणो मनस्विनि करमर्पयतो ददासि पृष्ठमपि ।
यदि तदपि कमलबन्धोरिव मन्ये स्वस्य सौभाग्यम् ॥ ४२७ ॥

**ममेति** । हे मनस्विनि प्रशस्तान्तःकरणे । एवं च कौटिल्याभावो व्यज्यते ।

रागिणोऽनुरागवतः। पक्षे लौहित्यवतः। करं हस्तम्। पक्षे किरणम्। समर्पयतो मम पृष्ठमपि यदि ददासि। लज्जावशान्मुखपरावर्तनादिति भावः। पक्षे 'पृष्ठतः सेवयेदर्कम्' इत्युक्तत्वादिति भावः। तदपि कमलवन्धोरिव स्वस्याहं सौभाग्यं मन्ये। एवं चैतावताप्यहमात्मानं कृतार्थं मन्ये, किमु संमुखावलोकन इति भावः। एवं यथाकथंचित्कुचस्पर्शार्थं करमर्पयतो मम पृष्ठदाने कूर्पासग्रन्थिमोचनानुमितिदानेनात्यन्तानुकूल्यं विहितं त्वयेति व्यज्यते॥

पुष्पवतीवृत्तं कश्चित्सखायं वक्ति—

मा स्पृश मामिति सकुपितमिव भणितं व्यञ्जिता न च व्रीडा।
आलिङ्गितया सस्मितमुक्तमनाचार किं कुरुषे॥ ४२८॥

**मेति**। मा मां स्पृशेति सकुपितमिव। न वास्तवमिति भावः। भणितम्। लज्जा न च व्यञ्जिता। पुष्पवत्त्वे ज्ञाते स्पर्शमयं न करिष्यतीति भावः। आलिङ्गितया। औत्कण्ठ्यादिति भावः। आचारहीन, किं कुरुषे इति सस्मितम्। सुखोद्रेकादिति भावः। उक्तम्। एवं च कामिनीनां सुरते सर्वदा सौख्यमिति ध्वन्यते॥

कश्चित्कांचिदन्योक्त्या वक्ति—

मूलानि च निचुलानां हृदयानि च कूलवसतिकुलटानाम्।
मुदिरमदिरा प्रमत्ता गोदावरि किं विदारयसि॥ ४२९॥

**मूलेति**। हे गोदावरि, मेघरूपा या मदिरा तयोत्कृष्टमदवती। एवं च कर्तव्याकर्तव्यविवेकविधुरत्वं ध्वन्यते। वृक्षाणाम्। निकटस्थानामिति भावः। मूलानि च, तीरवसतिशालिकुलटानां हृदयानि च विदारयसि। वीचीभिः शिथिलकरणेन संकेतिततरून्मूलनेनेति भावः। कूलवसतिपदेन कुलटानामनन्यगतिकत्वं तद्धृदयविदारकत्वानौचित्यं च ध्वन्यते। इदं किं नूचितमिति भावः। एवं चास्थिरद्रव्याद्युन्मादवशात्परोपकारप्रवणानां निकटवसतिमात्रशालिनामितस्ततः समानीतान्नोपजीविनां दुःखदानमनुचितं तवेति ध्वन्यते॥

पाण्डित्यादिगुणशालित्वेऽपि जडाचाराभिरतं कश्चिदुपदिशति—

मलयद्रुमसाराणामिव धीराणां गुणप्रकर्षोऽपि।
जडसमयनिपतितानामनादरायैव न गुणाय॥ ४३०॥

**मलयेति**। मूर्खाचारपतितानाम्। 'समयाः शपथाचार—' इत्यमरः। पक्षे

शीतकालप्राप्तानाम्। चन्दनसाराणामिव धीराणां गुणानां पाण्डित्यादीनाम्। पक्षे सौगन्ध्यादीनाम्। आधिक्यमपि। अपिरनादरानर्हत्वं गमयति। अनादरायैव न गुणाय। एवं च समीचीनस्याप्यसमीचीनाचारप्रविष्टस्य गुणाद्यपि निन्दाकरमेवेत्यतस्त्वया नैवमाचरितव्यमिति व्यज्यते॥

कस्याश्चिन्नायिकायाः साम्यं स्वस्मिन्कुर्वाणां कांचित्काचिदन्योक्त्या वक्ति—

मधुमथनमौलिमाले सखि तुलयसि तुलसि किं मुधा राधाम्।
यत्तव पदमदसीयं सुरभयितुं सौरभोद्भेदः॥ ४३१॥

**मध्विति**। मधुमथनस्य श्रीकृष्णस्य मौलिसंबन्धशालिनि माले सखि। एवं च यथार्थवादार्हत्वं ध्वन्यते। राधां वृथा किमिति तुल्यसि स्वसमानां मन्यसे। यद्यस्मात्तव परिमलोद्रेकोऽदसीयं पदं राधासंबन्धिचरणं सुरभीकर्तुम्। श्रीकृष्णेन सर्वदा राधाचरणप्रणामकरणादिति भावः। एवं यथा तस्यां गौरवम्, न तथा त्वयीति ध्वन्यते। सौरभोद्भेद इत्यस्य प्राक्तवेति पदमुचितम्॥

कश्चित्सखायं वक्ति—

मयि यास्यति कृत्वावधिदिनसंख्यं चुम्बनं तथाश्लेषम्।
प्रिययानुशोचिता सा तावत्सुरताक्षमा रजनी॥ ४३२॥

**मयीति**। गन्तुकामे मय्यवधिदिनसमसंख्यं चुम्बनं तथालिङ्गनं कृत्वा प्रियया तावत्संख्याकसुरतसंपादनासमर्था रात्रिरनुशोचिता। एवं च स्त्रीणां रतेऽत्यन्तं प्रीतिरिति भावः॥

कश्चिद्वेश्यां स्तौति—

मृगमदनिदानमटवी कुङ्कुममपि कृषकवाटिका वहति।
हट्टविलासिनि भवती परमेका पौरसर्वस्वम्॥ ४३३॥

**मृगेति**। अटवी कस्तूरिकोत्पत्तिस्थानम्। कुङ्कुममपि कृषकवाटिका वहति। एवं च मृगमदकेसरयोर्वनवासशालितया न नागरिकजनसुखदत्वमिति भावः। हे वाराङ्गने, एका भवती उत्कृष्टं पुरसंबन्धिलोकसर्वस्वम्। सुखविशेषप्रदत्वादिति भावः। यद्वा कस्तूरीकुङ्कुमयोरन्यत्रापि सत्त्वेन साधारणतया, वारविलासिन्यास्तु नगरमात्रवसतिशालितयाऽसाधारण्येन नागरिकात्यन्तस्पृहणीयत्वमिति भावः॥

वसन्तसमयेषूद्दीपनोद्रेकात्तूष्णीमवस्थातुं न शक्यत इति काचित्कांचिद्वक्ति—

मधुदिवसेषु भ्राम्यन्यथा यथा विशति मानसं भ्रमरः ।
सखि लोहकण्टकनिभस्तथा तथा मदनविशिखोऽपि ॥४३४॥

**मध्विति** । हे सखि, वसन्तसमयेषु भ्राम्यन्सन् । मधुपदेन दुष्परिहरत्वं ध्वन्यते । यथा यथा चित्तं लोहकण्टकसदृशो भ्रमरो विशति तथा तथा मदनबाणोऽपि । एवं च केनचित्सह मां योजयेति ध्वन्यते । यद्वेतस्ततो मदर्थमेव परिभ्रमन्भ्रमर इव भ्रमरः । सारग्राहकत्वेनातिचतुरत्वादिति भावः । नायको यथा यथा मनसि समायाति तथा तथा लोहकण्टकसदृशः । एवं च व्यथकत्वम् । मदनबाणोऽपि हृदयं प्रविशति । एवं चैतद्दर्शनेनाहं मदनशरविद्धा तद्योगं विनावस्थातुं न शक्नोमीति तेन सह मां योजयेति ध्वन्यते ॥

नायको नायिकां वक्ति—

मयि चलिते तव मुक्ता दृशः स्वभावात्प्रिये सपानीयाः ।
सत्यममूल्याः सद्यः प्रयान्ति मम हृदयहारत्वम् ॥ ४३५ ॥

**मयीति** । हे प्रिये, मयि प्रस्थिते मुक्ताः परित्यक्ताः । पक्षे मुक्ताफलानि । स्वभावात्स्त्रीस्वभावात् । पक्षे साहसिकतया । सपानीया अश्रुजलवत्यः । पक्षे तेजोविशेषशालिन्यः । अमूल्या उत्कृष्टाः । पक्षे बहुतरद्रव्यलभ्याः । दृष्टयो मम हृदयस्य चेतसः । पक्षे वक्षसः । हारत्वमपहारकत्वम् । पक्षे हारभावं प्रयान्ति । इदं सत्यम् । एवं चैतादृशत्वद्विलोकनेनाहं गमनपराङ्मुखः संवृत्तोऽस्मीति व्यज्यते ॥

अहमत्यन्तमदनबाधाक्रान्तः संवृत्त इति कश्चित्कांचिदाह—

मुग्धे मम मनसि शराः स्मरस्य पञ्चापि संततं लग्नाः ।
शङ्के स्तनगुटिकाद्वयमर्पितमेतेन तव हृदये ॥ ४३६ ॥

**मुग्ध इति** । हे मुग्धे, स्मरस्य पञ्चापि बाणाः । अपिनान्यसत्त्वाभावो व्यज्यते । मम मनसि निरन्तरम् । एवं च सर्वमपि मनो विद्धमिति भावः । लग्नाः, न तु निर्गताः । अत एतेन मदनेन तव हृदये स्तनरूपगुटिकाद्वयमर्पितमित्यहं संभावयामि । शराभावादिति भावः । एवं च गुटिकावेदनायाः स्वल्पतया धैर्यम्, मयि नेति ध्वन्यते ॥

कश्चित्कांचिद्वक्ति—

मधुमथनवदनविनिहितवंशीसुषिरानुसारिणो रागाः ।
हन्त हरन्ति मनो मम नलिकाविशिखाः स्मरस्येव ॥ ४३७ ॥

**मध्विति** । श्रीकृष्णवदनविनिहिता या वंशी तद्रन्ध्रानुसारिणः शब्दा मदनस्य नलिकाबाणा इव मम मनः । हन्त खेदे । हरन्ति । एवं च वेणुध्वनिं श्रुत्वावस्थातुं न शक्यते, अतो द्रुतं प्रयाहीति ध्वन्यते ॥

कयोश्चिन्मित्रयोरन्यतरं संगमयितुं दूती नायिकां वक्ति—

महतोः सुवृत्तयोः सखि हृदयग्रहयोग्ययोः समुच्छ्रितयोः ।
सज्जनयोः स्तनयोरिव निरन्तरं संगतं भवति ॥ ४३८ ॥

**महतोरिति** । श्रेष्ठयोः । एवं च परच्छिद्रप्रेक्षणानर्हत्वं ध्वन्यते । पक्षे महापरिमाणशालिनोः । समीचीनाचरणयोः । एवं च लौकिकदुष्टशङ्काशून्यत्वमावेद्यते । पक्षे समीचीनवर्तुलयोः । हे सखि, हृदयग्रहयोग्ययोः चित्ते स्थापयितुं योग्ययोः । एवं चातिप्रियत्वमावेद्यते । यद्वालिङ्गनयोग्ययोरित्यर्थः । पक्षे वक्षःस्थितिशालिनोः । समुच्छ्रितयोः । एवं च नवीनयौवनभाग्योदयादिशालित्वं द्योत्यते । पक्षे नवीनोदयवत्त्वम् । सज्जनयोः स्तनयोरिव संगतं निरन्तरं भवति । एवं चोभयोरपि समानगुणशीलतया न्यूनाधिकभावविरहेणोभयोर्मध्ये यं प्रत्यनुरागः स एवानुगृह्यतामिति ध्वन्यते । यद्वा कयोश्चित्सहचरयोर्मध्येऽन्यतरभीत्यान्यतरावलोकनमसम्यगिति मन्वानां नायिकां दूती वक्ति—एतयोरतितरां धीमत्त्वेन परस्परानन्दसंवर्धकतया नान्यतराशङ्का त्वया विधेयेत्यावेद्यते । स्तनयोरिवेत्यनेनैतत्संगतिविघटनमसंभवीति ध्वन्यते । कथमेतयोरतितरां संगतिरिति वादिनीं कांचित्काचिद्वक्ति । समानगुणशीलत्वादिति भाव इति वा । अथवा समानगुणशीलादिशालिनोः साहजिकी संगतिरिति कांचित्काचिद्वक्ति ॥

कश्चित् 'एतादृशं नाचरणीयम्' इत्युपदेशकर्तारं सखायं वक्ति—

मम वारितस्य बहुभिर्भूयो भूयः स्वयं च भावयतः ।
जातो दिशीव तस्यां सखे न विनिवर्तते मोहः ॥ ४३९ ॥

**ममेति** । बहुभिः । विवेकिभिरिति भावः । सुहृद्भिरिति वा । निवारितस्य । नैवं विधेयमिति भावः । स्वयं च मुहुर्मुहुर्विचारयतो मम दिशीव तस्यां जातो

मोहः प्रीतिर्भ्रमश्च हे सखे, नापगच्छति। एवं च यथा संजातदिग्भ्रमस्य न केनापि निवृत्तिः कर्तुं शक्या, तथैतस्यां ममोत्पन्नानुरागस्य। अतस्त्वदुपदेशोऽनर्थकः। अत एतत्करणाद्विरमेति ध्वन्यते॥

पराङ्गनातिलम्पटतयापकीर्त्या स्वजनपरित्यक्तं कंचन कश्चिदन्योक्त्या वक्ति—

मग्नोऽसि नर्मदाया रसे हृतो वीचिलोचनक्षेपैः।
यद्युच्यसे तरुवर भ्रष्टो भ्रंशोऽपि ते श्लाघ्यः॥ ४४०॥

**मग्नोऽसीति**। हे तरुश्रेष्ठ। एवं च नीचस्यैतादृशाचरणे न किंचिदसम्यगिति ध्वन्यते। नर्मदाया नद्याः। नर्म ददातीति व्युत्पत्त्या कलाकलापवत्त्वमावेद्यते नायिकायाम्। तरङ्गरूपकटाक्षैः, अथ च वीचीतुल्या ये लोचनक्षेपास्तैर्हृतो रसे जले शृङ्गारादौ च मग्नोऽसि। एवं चानन्दनिमग्नमानसतया लोकनिन्दाज्ञानवैधुर्यमावेद्यते। भ्रष्ट इति यद्युच्यसे। लोकैरित्यर्थः। अत्र कर्त्रनुपादानेन सर्वेऽपि त्वां निन्दन्तीति व्यञ्जनेन न न्यूनपदत्वमाशङ्कनीयम्। तर्हि ते भ्रंशोऽपि श्लाघार्हः। नायिकाया लोकोत्तरसौन्दर्यादिगुणशालितयेति भावः। एवं चैतादृशं निन्द्यकर्मापि चेत्कर्तव्यं तर्ह्येतादृशनायिकया सहेति ध्वन्यते॥

पाणिग्रहणसमयसंजातसात्त्विकभावोदयं कंचन कश्चिद्वक्ति—

मेनामुल्लासयति स्मेरयति हरिं गिरिं च विमुखयति।
कृतकरबन्धविलम्बः परिणयने गिरिशकरकम्पः॥ ४४१॥

**मेनामिति**। विवाहकाले संपादितपाणिग्रहणविलम्बो गिरिशस्य हस्तकम्पो मेनां पार्वतीमातरमुल्लासयति स्मेलर्थः। एवमुत्तरत्र। कामोद्रिक्तजामातृलाभादिति भावः। वि णुं स्मेरयति। अत्यन्तप्रकटितवैराग्यस्याप्यस्यैतादृश्यवस्थेति कुतुकादिति भावः। हिमालयं च विमुखयति। लज्जावशादित्यर्थः। एवं चैतादृश्यवस्थावश्यं महतामपि भवतीति न त्वया कापि लज्जा विधेयेति ध्वन्यते॥

मधुगन्धि घर्मतिम्यत्तिलकं स्खलदुक्ति घूर्णदरुणाक्षम्।
तस्याः कदाधरामृतमाननमवधूय पास्यामि॥ ४४२॥

**मध्विति**। मद्यगन्धवत्, प्रस्वेदार्द्रतिलकम्, स्खलदुक्ति। सोन्मादत्वादिति भावः। घूर्णदरुणनयनम्, तस्या बुद्धिस्थनायिकाया मुखमवधूय तिरस्कृत्य। अचुम्बयित्वेति भावः। अधरामृतम्। उत्तरोष्ठपाननिषेधादिति भावः। पास्यामि।

एवं चैतादृशवदनचुम्बनादप्यधरपानमधिकमिति व्यज्यते। यद्वा मधुगन्धादिगुणयुक्तमाननमवधूय कम्पयित्वा। स्थिताया इति शेषः। तस्या अधरामृतं पास्यामीति योजना। पथिकाशंसनमेतत्॥

काचित्कांचिद्वक्ति—

मेदिन्यां तव निपतति न पदं बहुवल्लभेति गर्वेण।
आश्लिष्य कैर्न तरुणैस्तुरीव वसनैर्विमुक्तासि॥ ४४३॥

**मेदिन्यामिति**। अहं बहूनां वल्लभेति गर्वेण तव पदं भूमौ न निपतति। कैस्तरुणैरालिङ्ग्य वस्त्रैस्तुरीव न विमुक्तासि। उपसर्गेण पुनः कदापि न संबन्ध इत्यावेद्यते। उत्तरोत्तरनायकवल्लभात्वे पूर्वपूर्वनायकवल्लभात्वाभावस्य हेतुतया तस्य च गुणशून्यत्वज्ञानाधीनतया न तवानेकवल्लभात्वेन गर्वकरणमुचितम्, अपि तु यस्यामेव कलाकलापाकृष्टो नायको निमग्नमानसस्तस्या एव गर्वकरणमुचितमिति ध्वन्यते॥

परपुरुषेष्वभिरतिमुत्पादयितुं दूती नायिकां वक्ति—

मूले निसर्गमधुरं समर्पयन्तो रसं पुरो विरसाः।
इक्षव इव परपुरुषा विविधेषु रसेषु विनिधेयाः॥ ४४४॥

**मूल इति**। मूले। आनन्दनिदाने रहसीति यावत्। पक्षे यथाश्रुतम्। स्वभावमधुरम्। एवं चौपाधिकमधुररसदातारोऽन्य इति भावः। रसं रत्यादिकम्। पक्ष इक्षुविकारम्। सम्यगपर्यन्तः। एवं चान्यत्र समर्पणेऽपि न सामीचीन्यमिति भावः। एवं च परपुरुषातिरिक्तपुरुषाणां रतं न स्वतो मधुरम्, न वा ते तत्कलासु कुशला इत्यावेद्यते। पुरो जनसमक्षम्। पक्षेऽग्रभागे। विरसाः। लोकभीतेरिति भावः। एवं च लोकवञ्चनानिपुणत्वेनातिविज्ञत्वमावेद्यते। परपुरुषा इक्षव इवानेकरसेषु विविधरतादौ। पक्षेऽनेकविधमधुरप्रकारादौ। विशेषेण स्थाप्याः। एवं च परपुरुषेष्वभिरुचिरतितरामुचितेति ध्वन्यते। यद्वा काचित्परपुरुषाभिरतिं निन्दति। विविधरसेषु स्थापयितुं योग्याः परपुरुषा इक्षव इव मूले प्रथमतः स्वभावेन मधुरं रसं प्रीत्यादि समर्पयन्तोऽग्रे विरसा भवन्ति। एवं च 'प्राज्ञास्तत्कर्म कुर्वन्ति येनान्ते सुखमेधते' इत्युक्तत्वात्प्रान्ते परपुरुषसंगतेरनिवार्यदुःखदत्वेन तत्करणमनुचितमिति द्योत्यते। यद्वा प्रथमतः सरसाः पश्चान्नीरसाः परपुरुषा विविधरसेषु विनिधेया इति काका नेत्यर्थः॥

काचित् 'नायकं किमर्थमवगणयसि' इति वादिनीं सखीं वक्ति—

महति स्नेहे निहितः कुसुमं बहु दत्तमर्चितो बहुशः।
वक्रस्तदपि शनैश्चर इव सखि दुष्टग्रहो दयितः॥ ४४५॥

**महतीति**। यद्यपि महति बहुतरे स्नेहे प्रेम्णि। पक्षे तैले। निहितः। तस्मिन्प्रेम बहुतरं संपादितमिति भावः। पक्षे लोहमयी शनैश्चरप्रतिमा बहुतरतैले स्थाप्यत इति भावः। कुसुमम्। एकत्वमविवक्षितम्। बहुवारं दत्तम्। यद्वा बहु कुसुममित्यन्वयः। बहुप्रकारं पूजितस्तदपि दुष्टो ग्रह आग्रहो यस्य। पक्षे दुष्टश्चासौ ग्रहश्चेति विग्रहः। वक्रः ऋजुर्न। पक्षे वक्रोऽन्यराशिस्थितोऽन्यराशिसंचरणवान्। शनैश्चर इव। एवं चैतादृशशनेः पूजादिनापि नानुकूल्यं यथा तथास्य नायकस्य। अतो न ममापराध इति ध्वन्यते॥

कांचिन्नीचजनसेवितां यौवनगर्वितां काचिदन्योक्त्या वक्ति—

मा शबरतरुणि पीवरवक्षोरुहयोर्भरेण भज गर्वम्।
निर्मोकैरपि शोभा ययोर्भुजंगीभिरुन्मुक्तैः॥ ४४६॥

**मा शबरेति**। शबरस्य तरुणि। एवं च स्वतो गुणाभावेऽपि नायकस्यापि निर्गुणतया तत्संगतिलभ्यगुणवत्ताभावो व्यज्यते। मांसलस्तनयोर्भरेण गर्वं मा भज। भुजंगीभिरुरगीभिरथ च वेश्याभिः परित्यक्तैरपि। एवं चानादरो द्योत्यते। निर्मोकैर्ययोः शोभा। एवं च कदर्यजनसेवितत्वेन न त्वया गर्वः कार्य इति व्यज्यते॥

'कथं त्वया मानः परित्यक्तः' इति वादिनीं सखीं नायिका वक्ति—

मम कुपितायाश्छायां भूमावालिङ्ग्य सखि मिलत्पुलकः।
स्नेहमयत्वमनुज्झन्करोति किं नैष मामरुषम्॥ ४४७॥

**ममेति**। हे सखि, कोपवत्या मम च्छायां भूमावालिङ्ग्य संजातरोमाञ्चः प्रीतिप्रचुरत्वमपरित्यजन्नेष मां क्रोधरहितां किं न करोति। अपि तु करोति। एवं चैतादृशैतद्वृत्तमवलोक्य मानः परित्यक्तो मयेति व्यज्यते। यद्वा शिथिलितकोपा नायिका सखीं वक्ति—कुपिताया मम च्छायां भूमावालिङ्ग्य संजातरोमाञ्चः प्रीतिप्रचुरत्वमपरित्यजन्मामपगतरोषां हे सखि, किं न करोति, किं न करिष्यतीति प्रश्नः। 'वर्तमानसामीप्ये वर्तमानवद्वा' इति भविष्यत्यपि लट्। एवं च हे सखि,

त्वं तथा कुरु यथायं मम च्छायायाः प्रणिपातादिना मामनुयातीति ध्वन्यते। क्वचित् 'मापरुषम्' इति पाठः । नायिका चेयं परकीया ॥

कश्चित्सखायं वक्ति—

मुषित इव क्षणविरहे रिपुरिव कुसुमेषुकेलिसङ्ग्रामे ।
दास इव श्रमसमये भजन्नताङ्गीं न तृप्यामि ॥ ४४८ ॥

**मुषित इति**। क्षणमात्रसंजातविरहे मुषित इवाविद्यमान इव। मन्मथकलायुद्धे शत्रुरिव। श्रमकाले सेवक इव नताङ्गीं भजन्न तृप्यामि। विरहासहिष्णुत्वप्रचण्डरतकलाशालित्वतदाज्ञानुवर्तित्वानि क्रमेण मुषित इवेत्यादित्रयेण व्यज्यन्ते। एवं चैतादृशी नायिका नान्येति ध्वन्यते ॥

अनुनयानेकप्रकारकरणेऽप्यधिकक्रोपशालिनीं नायिकामवलोक्यानुनयनिर्विण्णहृदयं नायकं सखी समुपदिशति—

मुञ्चसि किं मानवतीं व्यवसायाद्द्विगुणमन्युवेगेति ।
स्नेहभवः पयसाग्निः सान्त्वेन च रोष उन्मिषति ॥ ४४९ ॥

**मुञ्चसीति**। व्यवसायात्सान्त्वनप्रकाराद्द्विगुणकोपवेगेति हेतोर्मानवतीं मुञ्चसि, इदं किम्। नोचितमिति भावः। अत्रोपष्टम्भकमाह—स्नेहभवः प्रीतिजन्यः। पक्षे तैलजन्यः। कोपोऽनुनयेन, अग्निर्जलेनोन्मिषति। अधिको भवतीत्यर्थः। एवं चैतस्याः कोपः प्रीतिपूर्वक एव, अतो त्वमेतस्याः समाधानाद्विरमेति ध्वन्यते ॥

इतरसंतापात्कामसंताप एवाधिक इति कश्चित्कंचिद्वक्ति—

मलयजमपसार्य घनं वीजनविघ्नं विधाय वाहुभ्याम् ।
स्मरसंतापादगणितनिदाघमालिङ्गते मिथुनम् ॥ ४५० ॥

**मलयजमिति**। भुजाभ्यां चन्दनं दूरीकृत्य, घनमत्यन्तं वीजनस्य विघ्नं विधाय, मदनसंतापवशादनादृतघर्मकालीननिदाघम्, स्त्रीपुंसद्वन्द्वमालिङ्गते। 'विहाय' इति पाठे वीजनामित्रं विघ्नमित्यर्थः। निदाघकालीनसंतापदुःखमगणयित्वा सद्यः प्रयाहि दयितासविधे इति द्योत्यते ॥

कश्चित्कंचिच्छरणागतस्तेन चारक्षितस्तं वक्ति—

महतोऽपि हि विश्वासान्महाशया दधति नाल्पमपि लघवः ।
संवृणुतेऽद्रीनुदधिर्निदाघनद्यो न भेकमपि ॥ ४५१ ॥

**महत इति**। महाशयाः श्रेष्ठाः। पक्षे गभीराः। विश्वासाद्विनिश्चितं महतोऽपि

श्रेष्ठानपि । एवं चैतद्रक्षणे क्लेशवत्त्वेऽपि न तं महान्तः परिगणयन्तीति द्योत्यते । पक्षे महापरिमाणान् । एवं च गोपने क्लेशवत्ता ध्वन्यते । दधति स्थापयन्ति । लघवो नीचाः । पक्षे स्वल्पपरिमाणशालिनः । अल्पमपि । एवं च संरक्षणे सुकरत्वमावेद्यते । न दधति । अर्थान्तरन्यासेनामुमेवार्थं द्रढयति—समुद्रोऽद्रीन्गोपयति । अद्रीनित्यनेन स्वदुःखदमन्दरसजातीयतया द्वेषवत्त्वेऽपि, इन्द्ररूपशत्रुसत्त्वेन भीतिकरणौचित्येऽपि च तद्गणनेन महत्तरत्वमावेद्यते । निदाघकालीननद्यो मण्डूकमपि न गोपयन्ति । मेकपदेन स्वजीवनाधीनजीवनतया तथाविधशत्रुशून्यतया च रक्षणौचित्यमावेद्यते । एवं च महान्तएव महत्तरशत्रुमवधूयापि शरणागतं पालयन्ति न क्षुद्रा इति ध्वन्यते ॥

आरब्धमानां नायिकां नायको वक्ति—

मधुधारेव न मुञ्चसि मानिनि रूक्षापि माधुरीं सहजाम् ।
कृतमुखभङ्गापि रसं ददासि मम सरिदिवाम्भोधेः ॥ ४५२ ॥

**मध्विति** । हे मानिनि । एवं च रूक्षत्वादिकरणौचित्यमावेद्यते । माक्षिकधारेव रूक्षापि स्नेहाभाववत्यपि स्वाभाविकीं माधुरीं न त्यजसि । सहजामित्यनेन तत्परित्यागस्य कर्तुमशक्यत्वमावेद्यते । वक्रीकृतवदनापि त्वं जलधेर्नदीव मम रसं प्रीतिम् । पक्षे जलम् । प्रयच्छसि । मानश्चायं लघुः ॥

वीणावादनकारिणीं नायिकां सुरतोत्कण्ठितो नायकस्तन्निरसनाय वक्ति—

मदनाकृष्टधनुर्ज्याघातैरिव गृहिणि पथिकतरुणानाम् ।
वीणातन्त्रीक्वाणैः केषां न विकम्पते चेतः ॥ ४५३ ॥

**मदनेति** । हे गृहिणि । एवं च दयावत्त्वौचित्यमावेद्यते । मन्मथाकृष्टचापज्याघातैरिव वीणातन्त्रीशब्दैः केषां पथिकतरुणानां चेतो न विकम्पते । अपि तु सर्वेषाम् । एवं चैतादृशत्वदीयवीणावादनश्रवणेन पथिकप्राणाः प्रयास्यन्ति, अतो विरम वीणावादनादिति द्योत्यते । 'न विकल्पते' इति पाठे जीवनं भविष्यति न वेति संदेहवद्भवतीत्यर्थः ॥

नायकः सखायं वक्ति—

मम भयमस्याः कोपो निर्वेदोऽस्या ममापि मन्दाक्षम् ।
जातं क्व चान्तरिक्षे स्मितसंवृतिनमितकंधरयोः ॥ ४५४ ॥

**ममेति** । क्व चान्तरिक्षे क्वचिन्मार्गमध्ये स्मितगोपनार्थं नमितग्रीवयोः । राज्य-

नुभूतविलासस्मरणजन्यदर्शनसमसमयस्मितस्य परकीयाविषयकत्वेन गोपनमावश्यकमिति भावः। आवयोर्मध्ये मम भयम्। किमिति मया जनस्य प्रेमावेदकमिदं स्मितं कृतमिति धियेति भावः। अस्या इति परोक्षायामपि नायिकायामपरोक्षवन्निर्देशोऽत्यन्ततदेकतापन्नत्वमावेदयति। नायके कोपः। किमित्यहितं विहितं स्मितमादावनेनेति धियेति भावः। अस्या निर्वेदः स्वावमानना। किमेतादृशेऽतिस्निग्धे विदग्धे कोपमकरवमिति धियेति भावः। अपिश्चार्थः। मम च मन्दाक्षं लज्जा। कथमविदग्धः कोपमीदृश्या अप्यकरवमिति धियेति भावः। जातमिति सर्वान्वयि। एवं चैतादृशगुणविशेषशालि पराङ्गनासंगतं भवतीति व्यज्यते ॥

नायकः 'अत्यन्तासक्तायां तस्यां न तवासक्तिः, एतस्यां सात्यन्तं किमिदम्' इति वादिनं सखायं वक्ति—

मुक्ताम्बरैव धावतु निपततु सहसा त्रिमार्गगा वास्तु।
इयमेव नर्मदा मम वंशप्रभवानुरूपरसा ॥ ४५५ ॥

**मुक्तेति**। हे सखे, सा मुक्तमम्बरं वासो यया। पक्षेऽम्बरमाकाशम्। धावतु। पततु। चरण इति भावः। पक्षे भूमाविति भावः। त्रिमार्गगा वास्तु। यत्किंचित्तस्या भवत्विति भावः। पक्षे स्वर्गमृत्युपातालगा। मम समीचीनवंशजन्या चासावनुकूलरतिमती। पक्षे वंशो वेणुः। नर्मदायास्तत उत्पत्तेः। रसो जलम्। इयमेव नर्मदा सुखदात्री। पक्षे नदीनाम। एवं चेयमेव मह्यं रोचते, न सेति ध्वन्यते। यद्वा यद्यप्यासक्तिं प्रदर्शयति तथाप्यनेकमार्गगामिन्यतोऽस्तु। तिष्ठत्वित्यर्थः। सद्वंशप्रभवत्वेनेयमनेकमार्गगामित्वाभावान्मम सुखदा। एवं च तस्या अनेकगामितया प्रेमप्रदर्शनं कृत्रिममिति भावः ॥

दूती नायिकां वक्ति—

मृगमदलेपनमेनं नीलनिचोलैव निशि निषेव त्वम्।
कालिन्द्यामिन्दीवरमिन्दिन्दिरसुन्दरीव सखी ॥ ४५६ ॥

**मृगेति**। हे सखि, कस्तूरीलेपवन्तमेनं नायकं नीलवस्त्रैव रात्रौ सेवय। एवं च कृष्णाभिसारिकात्वमेव तवोचितमिति भावः। कालिन्द्यां नीलकमलं भ्रमरसुन्दरीव। एवं च त्रयाणामप्येकरूपत्वान्न केनापि किमपि ज्ञातुं शक्यमिति ध्वन्यते ॥

सखी कंचन नायकं स्वनायिकाचातुरीं वक्ति—

मम सख्या नयनपथे मिलितः शक्तो न कश्चिदपि चलितुम् ।
पतितोऽसि पथिक विषमे घट्टकुटीयं कुसुमकेतोः ॥ ४५७ ॥

**ममेति** । हे पथिक । एवं चान्यमार्गानभिज्ञत्वेन चिरविरहशालितया च तूष्णीमत्रावस्थितिरुचितेति ध्वन्यते । मम सख्याः कटाक्षविषयीभूतः कश्चिदपि । एवं च तव का वार्तेति भावः । गन्तुं न शक्तः । एवं चैतत्सौन्दर्याद्यालोकनेन के नासक्ता जाता इति भावः । अतस्त्वं विषमे पतितोऽसि । यतः 'कस्य ब्रह्मणोऽपि दुर्गमे पथि' इति पदच्छेदेन योज्यम् । इयं विषमशरस्य मदनराजस्य घट्टकुटी । एवं च त्वयात्रावस्थेयमित्यावेद्यते ॥

सखी नायकं वक्ति—

महता प्रियेण निर्मितमप्रियमपि सह्यतां याति ।
सुतसंभवेन यौवनविनाशनं न खलु खेदाय ॥ ४५८ ॥

**महतेति** । अत्यन्तप्रेमवता कृतमप्रियमपि सुभग सह्यतां याति न दुःखदमित्यर्थः । अपिना सह्यत्वमावेद्यते । अर्थान्तरन्यासमाह—पुत्रोत्पत्त्या तारुण्यनाशनं दुःखाय नेति निश्चितम् । एवं च नान्यथा शङ्कनीयमिति भावः । एवं च प्रियानिर्मिताप्रियेण खेदकरणमनुचितमिति ध्वन्यते । यद्वा स्वापराधजन्यातिभीत्या नायिकादर्शनोदासीनं नायकं नायिकासखी वक्ति—सुभग । एवं च तवापराधेऽपि सा त्वामपेक्षते, अतस्त्वमत्यन्तं धन्योऽसीति द्योत्यते । एवं चात्यन्तप्रेमवती सा त्वयि, अतस्त्वत्कृतापराधान्न गणयति, अतस्त्वं भीतिमुत्सृज्य तस्याः सविधे प्रयाहीति ध्वन्यते ॥

नायको नायिकासखीं वक्ति—

मानग्रहगुरुकोपादनु दयितात्येव रोचते मह्यम् ।
काञ्चनमयी विभूषा दाहाञ्चितशुद्धभावेव ॥ ४५९ ॥

**मानेति** । मानाङ्गीकारेण महान्यः क्रोधस्तदनन्तरं दयिता मह्यमत्येव रोचते । दाहेन प्रकटितशुद्धरूपा सुवर्णविकारविशिष्टभूषेव । एवं च यथा दाहादिना सुवर्णभूषणस्य नैर्मल्यं तथा मानापगमोत्तरं नायिकाया नैर्मल्यम् । अतो न त्वत्कृतमानातिशयेन मम दुःखम् । अपि तु सुखमेवेति ध्वन्यते । तेन च मानस्यास्थिरत्वम् ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता मकारव्रज्या ।

---

यकारव्रज्या।

दूती नायके नायिकासक्त्यतिशयं वक्ति—

यूनः कण्टकविटपानिवाञ्चलग्राहिणस्त्यजन्ती सा।
वन इव पुरेऽपि विचरति पुरुषं त्वामेव जानन्ती॥ ४६०॥

**यून इति**। सा नायिका कण्टकवृक्षानिव चेलाञ्चलग्राहकांस्तरुणांस्त्यजन्ती त्वामेव पुरुषं जानाना वन इव नगरेऽपि विचरति। यून इत्यनेन स्पृहणीयत्वम्, कण्टकविटपानिवेत्यनेन स्वाभाविकबलात्कारित्वेऽपि तदगणनेनातिसतीत्वमावेद्यते। वन इवेत्यनेन यूनां बाहुल्यम्, सभीतिसंचरणशालित्वं च नायिकायामावेद्यते। पुर इत्यनेनावश्यसंचरणानर्हत्वं द्योत्यते। अपिनान्यसंग्रहः। पुरुपमित्यनेन मन्मथकलाकलापकुशलत्वम्, अथवान्ये स्त्रीतुल्या इत्यत्यन्तानादरोऽन्ययुवस्विति व्यज्यते। एवं च सर्वत्र सर्वेऽपि तस्यामत्यन्तासक्ताः सा तु त्वय्येवेति ध्वन्यते॥

कश्चिद्गुणी दरिद्रः कस्मिंश्चित्समुदाये गतस्तत्र वसतिमलभमानस्तान्वक्ति—

युष्मासूपगताः स्मो विबुधा वाङ्मात्रपाटवेन वयम्।
अन्तर्भवति भवत्स्वपि नाभक्तस्तन्न विज्ञातम्॥ ४६१॥

**युष्मास्विति**। भोः पण्डिताः, वाङ्मात्रपाटवेन पाण्डित्यमात्रबलेन वयं भवत्सविधे समागताः स्मः। 'विद्वानेव विजानाति विद्वज्जनपरिश्रमम्' इति धियेति भावः। भवन्मध्येऽभक्तोऽन्नरहितः। दरिद्र इति यावत्। नान्तर्भवतीति विज्ञातमपि न। अपिनानुभूतमिति किं वक्तव्यमिति व्यज्यते। अत्रोपसर्गस्य न तथा प्रयोजनम्। यद्वा यथास्थित एवापिः। एवं चान्तर्भवनयोग्यत्वमावेद्यते। एवं च न पाण्डित्यग्राहिणो भवन्तः, किं तु द्रव्यलुब्धा इति द्योत्यते। एवं च द्रव्येणैव सर्वत्र प्रतिष्ठा, न पाण्डित्यमात्रेणेति। यद्वा भक्तिरहित इत्यर्थः। एवं च यो भवदीयसेवां करोति स एव भवत्सु समावेशमाप्नोति, न तु पाण्डित्यमात्रशालीति भावः॥

नायको वक्ति—

यत्र न दूती यत्र स्निग्धा न दृशोऽपि निपुणया निहिताः।
न गिरोऽद्यापि व्यक्तीकृतः स भावोऽनुरागेण॥ ४६२॥

**यत्रेति**। यत्र न दूती प्रेषितेति भावः। प्रेमार्द्राः कटाक्षा अपि न कृताः। गिरोऽपि न। स भावोऽभिप्रायो निपुणया। सकलजनवञ्चकत्वादिति भावः।

अनुरागेण व्यक्तीकृतः। एवं चातिनिगूढनिजकार्यसाधकतयानया सदृशी न काप्यन्येति ध्वन्यते। यत्र भावे दूती न प्रकटनसमर्थेति भावः। यत्र निहिताः प्रेरिताः प्रेमार्द्रा दृशोऽपि न। स्निग्धा वाचोऽपि न प्राकट्यसंपादिका इति भावः। स भावो रसानुकूलविकारो निपुणया। समयज्ञत्वादिति भावः। प्रीत्या प्रकटीकृतः। एवं च योऽनुभावो मत्प्रेषितदूतीप्रेषणादिव्यापारैर्न प्रकटीकृतः, स भावोऽद्य स्वयं समयविशेषमासाद्य व्यक्तीकृत इति लोकोत्तरचातुर्यशालित्वमावेद्यत इति वार्थः। 'स भावोऽनुगमनेन' इति पाठे तन्मरणोत्तरं तत्प्राणपरित्यागेनेयमस्मिन्नासक्तेति ज्ञातमित्यर्थः। क्वचित् 'स जारोऽनुमरणेन' इति पाठः॥

सपत्न्यधीनत्वादिकमसम्यगिति काचित्कांचिद्वक्ति—

या नीयते सपत्न्या प्रविश्य यावर्जिता भुजंगेन।
यमुनाया इव तस्याः सखि मलिनं जीवनं मन्ये॥ ४६३॥

**या नीयत इति**। सपत्न्या पतिप्रियान्तरया। पक्षे गङ्गया। नीयते। पतिसविध इति भावः। पक्षे समुद्रसविधे। भुजंगेन। पक्षे सर्पेण। प्रविश्य यावर्जिता स्वाधीनीकृता। यमुनाया इव तस्या जीवनं जीवितम्। पक्षे जलम्। सखि, मलिनं निन्द्यम्। पक्षे श्यामम्। मन्ये। एवं चैतादृशतया स्थेयं नायिकया येनोपायेन गृहे सर्वाधिकतयावस्थानं भवतीति ध्वन्यते। यमुनाजलं श्याममिति कविसंप्रदायः॥

दूती नायिकां केनचिन्नायकेन सह संगमयितुं वक्ति—

यस्मिन्नयशोऽपि यशो ह्रीर्विघ्नो मान एव दौःशील्यम्।
लघुता गुणज्ञता किं नवो युवा सखि न ते दृष्टः॥ ४६४॥

**यस्मिन्निति**। यस्मिन्यद्विषये तेऽकीर्तिरपि कीर्तिः। लज्जा विघ्नः। मानकरणमेव दुःशीलता। एवकारेण तत्कार्यविरुद्धवचनादेः का वार्तेति भावः। लाघवं गुणप्रवणता। एतादृशो नूतनः। एवं चावश्यकप्राप्यदर्शनयोग्यत्वं व्यज्यते। तरुणः। एवं च स्पृहणीयत्वमावेद्यते। हे सखि। एवं च हितकथनार्हत्वं द्योत्यते। किं न दृष्टः। त्वयेति शेषः। एवं चैतादृशो गुणरूपयौवनादिसंपन्नो नान्योऽस्ति नायकः। अत एतद्दर्शनाय त्वरस्वेति ध्वन्यते। अथवा त्वत्संबन्धी युवास्माभिः किं न दृष्टः। अपि तु दृष्टः। एवं च सम्यक्त्वया संपादितं यदेतादृश आसक्तिः संपादितेति ध्वन्यते। इति सखीवाक्यम्॥

खलानां माहात्म्यदर्शनेनापि न विश्वासो विधेय इति कश्चिद्वक्ति—

यद्वीक्ष्यते खलानां माहात्म्यं क्वापि दैवयोगेन।
काकानामिव शौक्ल्यं तदपि हि नचिरादनर्थाय॥ ४६५॥

**यदिति**। अदृष्टवशात्क्वचिद्दुष्टानां यन्महत्त्वं दृश्यते तदपि काकानां शौक्ल्यमिव नचिराच्छीघ्रमनर्थाय। एवं च दुष्टस्वभावानामदुष्टस्वभावप्रदर्शनमकार्योद्देशेनैवेति व्यज्यते॥

खला एव प्रेमविघटितार इति काचित्कांचिद्वक्ति—

यत्खलु खलमुखहुतवहविनिहितमपि शुद्धिमेव परमेति।
तदनलशौचमिवांशुकमिह लोके दुर्लभं प्रेम॥ ४६६॥

**यदिति**। यत्खल्वदनरूपो यो वह्निस्तत्र क्षिप्तमपि शुद्धिमेव। एवकारेण विनाशव्यवच्छेदः। एति प्राप्नोति। तत्परमुत्कृष्टं प्रेम। अनले शौचं शुद्धिर्यस्यैतादृशवसनमिव खलु निश्चितमिह लोके दुर्लभम्। एवं च को वेद स्वर्गादौ भविष्यति न वेति ध्वन्यते। एवं च यथा वसनस्यानलप्रक्षेपणे विनाश एव, तथा खलविज्ञातप्रेम्णोऽवश्यं विनाश एवेति ध्वन्यते। तेन च यथा खलैर्न विज्ञेयमेतत्प्रेम तथा कुर्विति। अथवा यत्खलैरपि विघटयितुमशक्यं तदेव प्रेम सम्यगिति काचिद्वक्ति। वह्नेरनलशौचं वस्त्रद्वयमस्तीति पुराणप्रसिद्धिः। अथवा यत्खलैरपि सम्यगिदमुभयोः प्रेमेत्युच्यते तदेव निश्चयेन परमुत्कृष्टम्। अत एव दुर्लभम्। एवं च तथाविधेनैव सह प्रीतिर्विधेया या खलैरपि स्तूयते, न तु साधारणेन सहेति ध्वन्यते। इति काचित्कांचित्प्रति वक्तीत्यर्थः। अत्र खल्विति दुर्लभमित्यस्य संनिधावुचितम्। 'शुद्धमेव' इति पाठ एति निर्गच्छतीत्यर्थः॥

नायकः सखायं वक्ति—

यन्नावधिमर्थयते पाथेयार्थं ददाति सर्वस्वम्।
तेनानयातिदारुणशङ्कामारोपितं चेतः॥ ४६७॥

**यदिति**। येनेयमवधिं कदा समागन्तव्यमिति नार्थयते। न वदतीत्यर्थः। मार्गव्ययार्थं सर्वस्वं यच्छति। तेनानया महत्तराशङ्कां चित्तं प्रापितम्। एवं चावधेरप्रार्थनेन व्ययाय सर्वस्वदानेन चेयं मद्गमनोत्तरमवश्यं प्राणांस्त्यक्ष्यतीति भावः। एवं च न मया प्रस्थीयत इति ध्वन्यते। यद्वा कश्चित्कंचिद्वक्ति—अवधिप्रार्थना-

भावेन पाथेयार्थं सर्वस्वदानेन चानया चेतो नायकस्य दारुणशङ्कामन्यथासंभावनां प्रापितमिति भावः ॥

नायको नायिकां वक्ति—

यूनामीर्ष्यावैरं वितन्वता तरुणि चक्ररुचिरेण।
तव जघनेनाकुलिता निखिला पल्ली खलेनेव ॥ ४६८ ॥

**यूनामिति**। हे तरुणि, तरुणानामीर्ष्यावैरम्। एकामिषत्वादित्युभयत्र भावः। विस्तारयता। चक्रवत्सुन्दरेण। वर्तुलत्वादिति भावः। खलेनेव धान्यमर्दनस्थानेनेव तव जघनेन समग्रा पल्ली व्याकुलीकृता। एवं च सर्वेऽपि त्वय्यासक्ताः संजाता इति भावः। खलेनेव दुष्टेनेवेति व्याख्याकरणे चक्रं समुदायस्तेन रुचिर इत्यर्थः ॥

कयोश्चिदत्यन्तमैत्रीं दृष्ट्वा कश्चिद्वक्ति—

यावज्जीवनभावी तुल्याशययोर्नितान्तनिर्भेदः।
नदयोरिवैष युवयोः सङ्गो रसमधिकमावहतु ॥ ४६९ ॥

**यावदिति**। यावदायुःस्थितिशाली। पक्षे यावदुदकस्थितिर्भावी। अत्यन्तनिर्गतभेदः तुल्यान्तःकरणयोः। पक्षे समानगम्भीरताशालिनोः। तरुणयोर्नदयोरिव सङ्गः संगतिः। मैत्रीति यावत्। पक्षे संबन्धः। अधिकं रसं प्रीतिम्। पक्षे जलम्। आवहतु। एवं चैतादृश्येवेयमेतयोर्मैत्री उत्तरोत्तरवृद्धिशालिन्यस्त्विति ध्वन्यते ॥

नायकः सखायं वक्ति—

यन्निहितां शेखरयसि मालां सा यातु शठ भवन्तमिति।
प्रहरन्तीं शिरसि पदा स्मरामि तां गर्वगुरुकोपाम् ॥ ४७० ॥

**यदिति**। यया निहितां दत्तां मालां शेखरयसि शिरोभूषणत्वेन कुरुषे सा हे शठ, भवन्तं यात्विति। उक्त्वेति शेषः। मस्तके चरणेन प्रहरन्तीम्। अभिमानबहुतरं कोपवतीम्। स्मरामि। एवं च तत्कालकृतताडनेन कोपपरिमार्जनेन सुरतानन्ददायितया न तत्तुल्यान्येति तस्यामेव ममासक्तिरिति ध्वन्यते ॥

कश्चित्कंचिद्वक्ति—

यौवनगुप्तिं पत्यौ बन्धुषु मुग्धत्वमार्जवं गुरुषु।
कुर्वाणा हलिकवधूः प्रशस्यते व्याजतो युवभिः ॥ ४७१ ॥

**यौवनेति**। पत्यौ नायके तारुण्यगोपनं कुर्वाणा। इदमग्रेऽप्यन्वेति। रक्षणकर्तृ-

तया यौवनज्ञानोत्तरं न बहिर्गन्तुं दास्यतीति धियेति भावः । बन्धुषु मुग्धत्वमज्ञत्वम् । मुग्धत्वज्ञानेनैतैर्यथेच्छविहारः कर्तुं देयः । अथवा पतिसविधे न प्रेषणीयेयमिति धियेति भावः । श्वश्र्वादिष्वार्जवमृजुत्वम् । सरलत्वे ज्ञाते नैतैः कौटिल्यं ज्ञेयमिति धियेति भावः । हलिकस्त्री । एवं चाज्ञस्त्रीत्वेन मौर्ख्यवत्त्वौचित्येऽपि चातुर्यशालितया स्तुतिकरणयोग्यत्वमित्यावेद्यते । तरुणैर्मिषात् । लोकगोपनार्थमिति भावः । प्रशस्यते स्तूयते ॥

काचित्कांचिद्वक्ति—

यो न गुरुभिर्न मित्रैर्न विवेकेनापि नैव रिपुहसितैः ।
नियमितपूर्वः सुन्दरि स विनीतत्वं त्वया नीतः ॥ ४७२ ॥

**य इति** । यो गुरुभिर्मित्रैर्विवेकेन शत्रुहसितैः पूर्वं न नियन्त्रितः सः हे सुन्दरि, त्वया विनीतत्वं प्रापितः । एवं च गुरुवचनस्यानुल्लङ्घनीयत्वेऽपि मित्रोपदेशस्यातिप्रियत्वेऽपि विवेकस्य दुर्व्यसनादिपरित्यागसंपादनस्वाभाव्येऽपि वैरिहसितानामतिदुःखदत्वेऽपि तदगणनेनातिदुष्टस्यातिविनीतत्वसंपादनेन गुणगणशालित्वं नायिकायामावेद्यते ॥

कस्यचिदाश्रयेण संपत्तिशालिनं कश्चिदन्योक्त्या वक्ति—

यन्मूलमार्द्रमुदकैः कुसुमं प्रतिपर्व फलभरः परितः ।
द्रुम तन्माद्यसि वीचीपरिचयपरिणाममविचिन्त्य ॥ ४७३ ॥

**यन्मूलमिति** । यद्यस्माज्जलैर्मूलमार्द्रम् । प्रतिकाण्डं कुसुमानि । समन्तात्फलातिशयः । तत्तस्मात् हे वृक्ष, उन्मादं प्राप्नोषि तरङ्गसंपर्कपरिपाकमविचार्य । एवं च यद्यपीदानीं संपत्तिसंभारादुन्मत्तस्त्वमसि, तथाप्यग्रे कतिपयैर्दिवसैर्निर्मूल एव भविष्यसीति द्योत्यते । यद्वा कासांचित्संगत्यावाप्तवसुतोन्मादशालिनं कश्चिद्वक्ति । एवं चैतासां संगत्या तवानिष्टमवश्यंभावीति ध्वन्यते ॥

काचित्कंचित्प्रत्याह—

यस्याङ्के स्मरसंगरविश्रान्तिप्राञ्जला सखी स्वपिति ।
स वहतु गुणाभिमानं मदनधनुर्वल्लिचोल इव ॥ ४७४ ॥

**यस्याङ्क इति** । मदनयुद्धविरामे प्रसन्ना । पक्षे सरला । नायिका यस्य नायकस्याङ्के निद्राति स गुणानां कामकलाभिज्ञतादीनाम् । पक्षे तन्तूनाम् । अभितः

परिमाणं मदनधनुर्लताच्छादनपट इवाङ्गीकरोतु । एवं च यः सुरतेनानन्दसंवर्धको नायिकायाः स एव धन्यो गुणवान्नान्य इति ध्वन्यते । तेन चैतादृशगुणे यतस्वेति ॥

कश्चित्कामकलाभिज्ञताभिमानी कांचिद्वक्ति—

यदि दानगन्धमात्राद्वसन्ति सप्तच्छदेऽपि दन्तिन्यः ।
किमिति मदपङ्कमलिनां करी कपोलस्थलीं वहति ॥ ४७५ ॥

**यदीति** । यदि मदोदकपरिमलसजातीयपरिमलमात्रात् । मात्रपदात्तदितरगुणव्यवच्छेदः । सप्तच्छदेऽपि । अपिना साधारणत्वमावेद्यते । करिण्यो वसन्ति तदा गजो मदपङ्केन मलिनाम् । मालिन्यस्योपमासाधकस्य सत्त्वान्नात्र रूपकम् । कपोलस्थलीं किमिति वहति । एवं च पुरुषार्थोऽवश्यमपेक्षित इति ध्वन्यते ॥

कस्याश्चिद्वृत्तं कश्चिद्वक्ति—

यदवधि विवृद्धमात्रा विकसितकुसुमोत्करा शणश्रेणी ।
पीतांशुकप्रियेयं तदवधि पल्लीपतेः पुत्री ॥ ४७६ ॥

**यदवधीति** । यत्प्रभृति शणपङ्क्तिर्विकसितकुसुमसमूहा संजातमात्रा तत्प्रभृति पल्लीपतेस्तनया पीतं यद्वस्त्रं तत्प्रियं यस्या एतादृशी संजाता । एवं च शणश्रेणिपीतकुसुमसमूहे पीतवसनतयान्यैरज्ञेयतया यथेच्छं विहर्तुकामेयं संवृत्तेति ध्वन्यते ॥

सखी नायिकां वक्ति—

यमुनातरङ्गतरलं न कुवलयं कुसुमलावि तव सुलभम् ।
यदि सौरभानुसारी झंकारी भ्रमति न भ्रमरः ॥ ४७७ ॥

**यमुनेति** । हे कुसुमावचयकारिणि, यमुनायास्तरङ्गैश्चञ्चलं कुवलयं तव न सुलभम् । यदि सौगन्ध्यानुसारी झंकारकारी भ्रमरो न भ्रमति । एवं च चपलतरत्वदीयनयनप्रतिबिम्बबाहुल्याद्विशिष्य कुवलयज्ञानाभावे न तद्ग्रहणं तव वृत्तमिति भावः । एवं च नायिकायां सौन्दर्यातिशयो द्योत्यते ॥

एषामत्यन्तलालनं स्वयं क्रियते, परं तु ये न स्वसुखदुःखज्ञातारस्तेऽत्यन्तं जडा इति कश्चित्कंचिद्वक्ति—

ये शिरसि विनिहिता अपि भवन्ति न सखे समानसुखदुःखाः ।
चिकुरा इव ते बाला एव जडाः पाण्डुभावेऽपि ॥ ४७८ ॥

**ये शिरसीति** । हे सखे, मस्तके निहिता अपि ये समानसुखदुःखा न

भवन्ति, ते पुरुषाः केशा इव जडाः पाण्डुरभावेऽपि वार्धकेऽपि बालका एव। एवं च येऽत्यन्तं लालितास्ते यदि न स्वसुखदुःखाभिज्ञास्तदा तेऽत्यन्तं मूढा एव। अतो न तदसत्कर्तव्यतया दुःखं मन्तव्यमिति व्यज्यते ॥

एतत्कार्यायोग्यस्याप्यस्य प्रभुणैतत्कार्यं दत्तमिति कश्चित्कंचिद्वक्ति—

यन्नियतनिर्गुणं यन्न वंशजं यच्च नित्यनिर्वाणम्।
किं कुर्मस्तन्निहितं धनुःपदे देवराजेन ॥ ४७९ ॥

**यन्नियतेति**। यन्नियतं गुणेन मौर्व्या। पक्षे चातुर्यादिना। शून्यम्। यन्न वंशजम्। वंशो वेणुः। पक्षेऽन्वयः। यच्चेत्यपरं नित्यविनाशि। पक्षे नित्यं निर्वाणं विनाशो यस्मात्। तद्देवराजेनेन्द्रेण। देवराजपदेनानिवारणीयत्वमावेद्यते। कोदण्डस्थाने स्थापितम्। तत्र वयं किं कुर्मः। एवं चैतादृशस्याधिकारदानानौचित्येऽपि प्रभुणा स्वमत्या कृतत्वान्नास्माकमपराध इति ध्वन्यते ॥

एकस्यामासक्तमन्यस्यामनासक्तं नायकं काचिद्वक्ति—

या दक्षिणा त्वमस्यामदक्षिणो दक्षिणस्त्वमितरस्याम्।
जलधिरिव मध्यसंस्थो न वेलयोः सदृशमाचरसि ॥ ४८० ॥

**या दक्षिणेति**। या दक्षिणानुकूला। त्वयीति भावः। अस्यां त्वमदक्षिणोऽननुकूलः। पक्षे दक्षिणदिक्संस्थायां दक्षिणदिक्संस्थो नेत्यर्थः। तदितरस्यां दक्षिणोऽनुकूलः। पक्ष उत्तरदिक्संस्थायामित्यर्थः। किमेतावतेत्यत आह—मध्यसंस्थः सन्नुभयत्र समानपक्षपाती। पक्षे मध्यदेशस्थः। वेलयोर्जलधिरिव सदृशं नाचरसि। डलयोरैक्याज्जडधिरित्यनेन तादृशविषमाचरणमज्ञस्योचितं न तव विज्ञस्येति ध्वन्यते। 'योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः। आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥' इत्यत्रेवात्रेदंशब्दस्य तच्छब्दार्थकता ॥

नायं नायकस्त्वामुपभोगं विना त्यक्ष्यतीति काचित्कांचिद्वक्ति—

युगपज्जघनोरःस्तनपिधानमधुरे त्रपास्मितार्द्रमुखि।
लोलाक्षि नैष पवनो विरमति तव वसनपरिवर्ती ॥ ४८१ ॥

**युगपदिति**। एककालं जघनोरःस्तनस्य यदाच्छादनं तेन मधुरे सुन्दरे। लज्जास्मिताभ्यां स्निग्धवदने। आर्द्रपदेन स्मिते सुधारूपत्वमावेद्यते। लोलाक्षि,

तव वस्त्रपरिवर्तनकारी एष पवनो न विरमति । एवं च जघनाद्याच्छादनाद्यनर्थ-कम् । अतस्तत्त्यक्त्वा यथेच्छमनेन सह रमस्वेति ध्वन्यते । 'विधुरे' इति पाठे रहिते इत्यर्थः । यथाश्रुतमेवेदमिति ऋजवः ॥

अपकारकाणामपि सति समये शरणमयमेवेति कश्चित्कंचिदन्योक्त्या वक्ति—

यद्यपि बद्धः शैलैर्यद्यपि गिरिमथनमुषितसर्वस्वः ।
तदपि परभीतभूधररक्षायां दीक्षितो जलधिः ॥ ४८२ ॥

**यद्यपीति** । यद्यपि पर्वतैर्बद्धः । यद्यपि पर्वतकरणकमन्थनेनापहृतसर्वस्वः । तथापि पर इन्द्रस्ततो भीता ये पर्वतास्तद्रक्षणे जलधिर्दीक्षितः । कृतनियम इत्यर्थः । जलधिरित्यनेन निकटवर्तिसमीचीनाभावेऽपि स्वत एवैतादृशाचरणकारि-तयातिमहत्तरत्वमावेद्यते । अत्रानवीकरणमनुचितमित्याभाति ॥

यत्र यादृशेन तेन त्वं दृष्टासि तत्र तादृशेनैव तेनाद्यापि स्थीयत इति दूती नायिकां वक्ति—

यस्यां दिशि यस्य तरोर्यामेत्य शिखां यथोन्नतग्रीवम् ।
दृष्टा सुधांशुलेखा निशां चकोरस्तथा नयति ॥ ४८३ ॥

**यस्यामिति** । यस्यां दिशि यस्य वृक्षस्य यां शिखामागत्योन्नतग्रीवं यथा चन्द्र-लेखा दृष्टा तथा तेनैव प्रकारेण चकोरो निशामतिवाहयति । सुधांशुलेखेत्यनेनाह्ला-दकत्वमावेद्यते । चकोर इत्यनेन तदेकाधीनजीवनवत्त्वं द्योत्यते । एवं चैतादृशस्या-स्योपेक्षाकरणमनुचितं तवेति ध्वन्यते ॥

सरलतया न स्थेयमिति कश्चित्कंचिद्वक्ति—

यत्रार्जवेन लघुता गरिमाणं यत्र वक्रता तनुते ।
छन्दःशास्त्र इवास्मिँल्लोके सरलः सखे किमसि ॥ ४८४ ॥

**यत्रेति** । यत्र यस्मिन्नार्जवेन सरलतया लघिमा लाघवं तन्यते । यत्र वक्रता गुरुत्वं तनुते । छन्दःशास्त्र इवास्मिँल्लोके हे सखे, सरलः किमसि । छन्दःशास्त्रे लघुर्लेखाकारो गुरुर्वक्राकारो लिख्यत इति संप्रदायः ॥

कश्चित्कस्यचिदधिकारपदं निन्दति—

यन्नोपकारकं यन्न भूषणं यत्प्रकोपमातनुते ।
गुरुणापि तेन कार्यं पदेन किं श्लीपदेनेव ॥ ४८५ ॥

**यन्नेति** । यदुपकारकारकं न । यद्भूषणं न । यत्प्रकृष्टकोपं विस्तारयति । गुरु-

णापि पदेनाधिकारेण श्लीपदेनेव रोगविशेषवच्चरणेनेव किं कार्यम् । न किंचित्फलमिति भावः । एवं च तदेवाधिकारपदं यदुपकारादिसंपादकमिति भावः ॥

कश्चित्कंचिदन्योक्त्या वक्ति—

यूथपते तव कश्चिन्न हि मानस्यानुरूप इह विटपी ।
प्रेरय दिनं निदाघद्राघीयः क्व खलु ते छाया ॥ ४८६ ॥

**यूथेति** । हे यूथपते । एवं चान्येषां पालकस्त्वमसीति द्योत्यते । तव हि निश्चितं मानस्य परिमाणविशेषस्य । पक्षे प्रतिष्ठायाः । अनुरूपो योग्यः । कश्चिद्विटपी वृक्षो न । निदाघेनातिदीर्घं दिनं गमय । निश्चयेन तव छाया क्व । एवं च कुटुम्बपोषकस्य भवतो न क्वचिदाश्रयः । समयोऽयं कठिनतरः । सोऽयं यथातथातिवाहनीय इति द्योत्यते ॥

दैवात्संपद्विहीनोऽप्ययमन्येषामुपकारक इति कश्चित्कंचिदन्योक्त्या वक्ति—

यद्यपि चन्दनविटपी फलपुष्पविवर्जितः कृतो विधिना ।
निजवपुषैव तथापि हि स हरति संतापमपरेषाम् ॥ ४८७ ॥

**यद्यपीति** । यद्यपि चन्दनशाखी दैवेन ब्रह्मणा वा फलपुष्परहितः कृतस्तथापि स्वशरीरमात्रेणान्येषां संतापं दूरं करोति । एवं चैतादृशो न कश्चिदन्य इति ध्वन्यते । अत्र पूर्वत्र च यद्यपिरपीति पदातिरिक्तपददानमुचितमित्याभाति ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता यकारव्रज्या ।

---

रकारव्रज्या ।

नायकगुणोत्कर्षेण नायिकाया अत्यन्तमुत्कर्ष इति काचित्कांचिद्वक्ति—

राज्याभिषेकसलिलक्षालितमौलेः कथासु कृष्णस्य ।
गर्वभरमन्थराक्षी पश्यति पदपङ्कजं राधा ॥ ४८८ ॥

**राज्येति** । राज्याभिषेकजलक्षालितमस्तकस्य कृष्णस्य वार्तासु सकलोत्कृष्टगुणवानित्यादिकासु । सतीष्विति शेषः । गर्वाधिकतानिश्चलनेत्रा राधा चरणकमलम् । स्वीयमिति भावः । पश्यति । एतादृशोऽप्ययं सर्वदा मत्प्रणतिप्रवण एवास्त इति धियेति भावः ॥

नायिकां विनावस्थितिर्न सुखदेति कश्चिद्वक्ति—

रतिकलहकुपितकान्ताकरचिकुराकर्षमुदितगृहनाथम्।
भवति भवनं तदन्यत्प्राग्वंशः पर्णशाला वा॥ ४८९॥

**रतीति**। रतिकलहे कुपिता कान्ता तया कराभ्यां यत्केशात्कर्षणं तेन संतुष्टो गृहनाथो यत्र। यद्वा कान्ताहस्तात्केशाकर्षणं यत्र। तद्वनादिकमपि भवनम्। तद्भिन्नम्। महत्तरप्रासादादिकमित्यर्थः। प्राग्वंशः पत्नीशाला। 'प्राग्वंशः प्राग्घविर्गेहात्' इत्यमरः। पर्णशाला वा। 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः॥

नायिका वैद्यं वक्ति—

रोगी राजायत इति जनवादं सत्यमद्य कलयामि।
आरोग्यपूर्वकं त्वयि तल्पप्रान्तागते सुभग॥ ४९०॥

**रोगीति**। हे सुभग, त्वयि शयनीयसविधागमनवति सति रोगवान्राजवदाचरसीति राजायत इति लोकप्रवादमारोग्यपूर्वकं सत्यं मिथ्यात्वशून्यमद्य कलयामि। एवं चातिमहत्तरभाग्यशालिन्यहं त्वद्दर्शनेनाद्य संवृत्तेति भावः। एवं च मन्मथदुःखरूपरोगं दूरीकृत्यानन्दविशेषभागिन्यहं त्वया विधेयेति द्योत्यते॥

नायिकां प्रति कश्चिद्वक्ति—

रुद्धस्वरसप्रसरस्यालिभिरग्रे नतं प्रियं प्रति मे।
स्रोतस इव निम्नं प्रति रागस्य द्विगुण आवेगः॥ ४९१॥

**रुद्धेति**। सखीभिः प्रतिषिद्धः स्वरसस्य स्वाच्छन्द्यस्य प्रसरो यस्य। पक्षे रसो जलम्। मम प्रीतेः। अग्रे नतम्। प्रणिपातार्थमिति भावः। प्रियं प्रति निम्नं प्रति नीचदेशं प्रति स्रोतस इव। 'स्रोतोऽम्बुसरणं स्वतः' इत्यमरः। द्विगुण आवेग आधिक्यम्। पक्षे आ समन्ताद्वेगः। एवं च निरुद्धस्य जलस्य यथाधिकं प्रवाहः प्रचलति तथा सखीभिर्निषिद्धाया मम प्रियं प्रति प्रेमाधिक्यं जायत इति भावः। एवं च प्रियं प्रति प्रेमनिरोधो मम दुर्घट इति ध्वन्यते। तेन च सख्युपदेशोल्लङ्घने न ममापराध इति॥

काचित्कांचिद्वक्ति—

रूपमिदं कान्तिरसावयमुत्कर्षः सुवर्णरचनेयम्।
दुर्गतमिलिता ललिते भ्रमसि प्रतिमन्दिरद्वारम्॥ ४९२॥

**रूपमिति**। हे ललिते सुन्दरि, इदं रूपम्। असौ कान्तिः। अयमुत्कर्षः।

इयं सुष्ठु वर्णरचना । एवं सति दरिद्रसहचारिणी । अतः प्रतिगृहद्वारं भ्रमसि । एवं चैतादृशरूपशालित्वे दरिद्रसंगतिसंपादनमनुचितम् । उचितं भाग्यवत्संगतिसंपादनमिति ध्वन्यते । यद्वा भिक्षुहस्तगतप्रतिमोद्देशव्याजेन काचित्कांचिद्वक्ति ॥

कश्चित्कंचिद्वक्ति—

रचिते निकुञ्जपत्त्रैर्भिक्षुकपात्रे ददाति सावज्ञम् ।
पर्युषितमपि सुतीक्ष्णश्वासकदुष्णं वधूरन्नम् ॥ ४९३ ॥

**रचित इति** । निकुञ्जसंबन्धिपत्त्रैः संपादिते भिक्षुकस्य पात्रेऽवज्ञासहितं यथा स्यात्तथा वधूः पर्युषितमप्यन्नमत्यन्ततीक्ष्णा ये श्वासास्तैरीषदुष्णं ददाति । संकेतनिकेतनिकुञ्जपत्त्रच्छेदनेन संकेतस्थानविघटकतया द्वेषवत्त्वादवज्ञा । भिक्षुकत्वादन्नदानम् । स्थानविघटनदुःखवशाच्छ्वासेषूष्णता । यद्वा संकेते मया गत्वा परावृत्तमिति ज्ञापनायानीतनिकुञ्जपत्त्रपात्रमवलोक्य दुःखवशाच्छ्वासेषूष्णता । लोकगोपनाय चावज्ञाकरणं पर्युषितान्नदानं च ॥

सखी नायिकां वक्ति—

रक्षति न खलु निजस्थितिमलघुः स्थापयति नायकः स यथा ।
तिष्ठति तथैव तद्गुणविद्धेयं हारयष्टिरिव ॥ ४९४ ॥

**रक्षतीति** । हे सखि, योऽलघुः श्रेष्ठः । पक्षे महान् । निजस्थितिं न रक्षति । चाञ्चल्यं न त्यजतीत्यर्थः । स नायकः कान्तः । पक्षे हारमध्यमणिः । यथा स्थापयति तथैव तस्या गुणैश्चातुर्यादिभिः । पक्षे गुणः सूत्रम् । तैर्विद्धा तत्कृतासक्तिमती । पक्षे यथाश्रुतम् । इयं त्वत्प्रतिवेशिनी हारयष्टिरिव तिष्ठति । एवं च स न स्वकीयचाञ्चल्यादिदुःशीलं परित्यजति । इयं तु तच्चातुर्यायासक्ता तन्मनस्कतयैव कालमतिवाहयतीति भावः । एवं चैतादृशावस्थितिस्तव नोचितेति नायिकां प्रत्यावेद्यते । यद्वा यथा हारमध्यमणेश्चाञ्चल्येऽपि तद्गुणविद्धेयं हारलता न चाञ्चल्यं विधत्ते तथा त्वया तद्गुणमात्रावलोकनादिना तच्चाञ्चल्यमगणयित्वा निश्चलतया स्थेयमिति व्यज्यत इत्यर्थः । यद्वा सखी सखीं वक्ति—हे सखि, अलघुः श्रेष्ठेयं नायिका निजस्थितिं न रक्षति स्वमर्यादां न विचारयति । यथा नायकः स्थापयति तथैव तच्चातुर्यगुणविद्धा हारयष्टिरिव तिष्ठति । एवं च स्वोचितव्यवहारमियं परित्यज्य केवलं तदधीना जातेति भावः ॥

सखी नायिकां वक्ति—

राजसि कृशाङ्गि मङ्गलकलशी सहकारपल्लवेनेव ।
तेनैव चुम्बितमुखी प्रथमाविर्भूतरागेण ॥ ४९५ ॥

**राजसीति** । हे कृशाङ्गि, प्रथमं कौमारप्रभृति संजातप्रीतिमता । पक्षे रागो लौहित्यम् । तेनैव । नायकेनेति भावः । चुम्बितवदना रसालपल्लवेन मङ्गलकलशीव राजसि । एवं च नान्यत्र मनो बन्धनीयमिति ध्वन्यते । यद्वा तेनैव । निकटस्थितेनैवानेनेति भावः । राजसि राजिष्यसि । चिरकालीनैतत्संगतिर्नोचिता । किंतु नवीनानुरागवत्संगतिरत्यन्तोचितेति व्यज्यत इति वा दूती नायिकां वक्ति ॥

गुणवत्संगतिकरणमेवोचितमिति सखी नायिकां वक्ति—

रूपगुणहीनहार्या भवति लघुर्धूलिरनिलचपलेव ।
प्रथयति पृथुगुणनेया तरुणी तरणिरिव गरिमाणम् ॥ ४९६ ॥

**रूपेति** । रूपं च गुणाश्च तैर्हीनेन हार्या तत्संगतिमती । पक्षे रूपरूपो यो गुणस्तदभाववता हर्तुं योग्या । तरुणी । वायुचञ्चला धूलिरिव लघुर्भवति । पृथवो गुणा यस्य तेन नेया । पक्षे महत्तरगुणैः । नौकेव गौरवं प्रथयति । एवं चाचेतनेऽप्येवं गतिस्तत्र का वाच्या सचेतन इति भावः ॥

सखी नायकं वक्ति—

रागे नवे विजृम्भति विरहक्रममन्दमन्दमन्दाक्षे ।
सस्मितसलज्जमीक्षितमिदमिष्टं सिद्धमाचष्टे ॥ ४९७ ॥

**रागेति** । विरहक्रमेण मन्दमन्दं मन्दाक्षं ह्रीर्यत्र । एतादृशे नवे रागे । 'विजृम्भित—' इति पाठे विरहविशेषणम् । स्मितहसितलज्जासहितं विलोकनमिष्टं सिद्धं कथयति । एवं चाचिरमेवानया सह सङ्गस्तव भावीति ध्वन्यते ॥

कुपितनायिकां दूती वक्ति—

रोषोऽपि रसवतीनां न कर्कशो वा चिरानुबन्धी वा ।
वर्षाणामुपलोऽपि हि सुस्निग्धः क्षणिककल्पश्च ॥ ४९८ ॥

**रोषोऽपीति** । रसः शृङ्गारादिः । पक्षे जलम् । तद्वतीनाम् । एवं चान्यासामन्यादृशी गतिरिति भावः । रोषोऽपि । अपिना कर्कशत्वाद्यौचित्यमावेद्यते ।

कठिनो वा न । चिरकालावस्थायी वा न । अर्थान्तरन्यासमाह—वर्षाणां पाषाणोऽपि । करकेति यावत् । अत्यन्तकोमलः स्वल्पकालावस्थायी च । एवं चैतादृशातिशयितकोपकरणे रसवत्ताहानिरेव भवित्रीति ध्वन्यते । तेन चैनं परिहृत्य प्रसन्ना भवेति ॥

'येनैतादृशक्लेशादिकं भवति तदपेक्षाकरणमनुचितम्' इति वादिनीं सखीं नायिका वक्ति—

> रोदनमेतद्धन्यं सखि किं बहु मृत्युरपि ममानर्घः ।
> स्वप्नेनेव हि विहितो नयनमनोहारिणा तेन ॥ ४९९ ॥

**रोदनमिति** । हे सखि, एतद्रोदनं सम्यक् । किं बहु । वक्तव्यमित्यर्थः । मरणमपि मम समीचीनम् । नयनमनःस्वाधीनतासंपादकेन । पक्षे नयनमनोव्यापाराभावसंपादकेन । स्वप्नेनेव तेन नायकेन विहितः । लिङ्गविपरिणामेन रोदनेऽप्येतदन्वेति । रोदनादिकं स्वप्ने सम्यगिति स्वप्नविवेचकाः । स्वप्ने केवलमनोव्यापारस्य सत्त्वेऽपि नयनव्यापारविशिष्टस्य तस्याभावान्नात्र दोषः ॥

नायिका सखीं वक्ति—

> रोषेणैव मया सखि वक्रोऽपि ग्रन्थिलोऽपि कठिनोऽपि ।
> ऋजुतामनीयतायं सद्यः स्वेदेन वंश इव ॥ ५०० ॥

**रोषेणेति** । हे सखि, वक्रोऽपि ग्रन्थिलोऽपि कठिनोऽप्ययं नायको मया क्रोधेनैव सद्यः ऋजुतां स्वेदेन वेणुरिव प्रापितः । स्वेदेन वेणोर्वक्रताद्यपगच्छतीति काष्ठर्जुतासंपादनविदः ॥

सखी नायिकां वक्ति—

> रजनीमियमुपनेतुं पितृप्रसूः प्रथममुपतस्थे ।
> रञ्जयति स्वयमिन्दुं कुनायकं दुष्टदूतीव ॥ ५०१ ॥

**रजनीमिति** । इयं पितृप्रसूः सायंसंध्या रात्रिमुपनेतुं चन्द्रसमीपं नेतुमादावुपतस्थे । स्वयं चन्द्रं दुष्टदूती दुष्टनायकमिव रञ्जयति । रक्तरूपवन्तम् । पक्षेऽनुरागवन्तम् । करोति । एवं च संध्यात्वेन जगद्वन्द्यत्वेऽप्येतादृशानुचितकार्यकारित्वम्, तत्र का वार्तान्यासाम् । अतः स्वयमेव नायकानुनयो विधेय इति ध्वन्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेतो रकारव्रज्या ।

---

लकारव्रज्या ।

अत्यन्तपराङ्गनालम्पटास्थिरमतिनायकासक्ता नायिकां काचिदन्योक्त्या वक्ति—

लग्नासि कृष्णवर्त्मनि सुस्निग्धे वर्ति हन्त दग्धासि ।
अयमखिलनयनसुभगो न भुक्तमुक्तां पुनः स्पृशति ॥ ५०२ ॥

**लग्नासीति** । हे सुस्निग्धे । स्नेहवशादिति भाव उभयत्र । वर्ति, कृष्णवर्त्मनि वह्नौ । अथ च दुष्टमार्गशालिनि नायके लग्नासि तत्संबन्धभागिनी संवृत्तासि । हन्त खेदे । दग्धासि । एवं च न विलम्ब इति भावः । अथ च दुःखभागिनी संवृत्तासि । यतोऽयं सकलनयनस्पृहणीयः । प्रकाशवत्त्वात् । अथ च सौन्दर्यादिगुणशालित्वात् । एवं च नायिकासौलभ्यमस्येति ध्वन्यते । भोगोत्तरपरित्यक्तां पुनर्न स्पृशति । एवं चैतत्संगतिरनुचितेति ध्वन्यते ॥

संपत्त्या गुणवत्ता दारिद्र्यात्तदभाववत्तेति कश्चिद्वक्ति—

लक्ष्मीः शिक्षयति गुणानमून्पुनर्दुर्गतिर्विधूनयति ।
पूर्णो भवति सुवृत्तस्तुषाररुचिरपचये वक्रः ॥ ५०३ ॥

**लक्ष्मीरिति** । श्रीर्गुणानुपदिशति । अमून्पुनर्दौर्भाग्यं दूरीकरोति । अत्रार्थान्तरन्यासमाह—पूर्णमण्डलश्चन्द्रः सुवृत्तः समीचीनवर्तुलः । अथ च समीचीनाचरणवान् । अपचये कलाविनाशे कुटिलः । एवं च संपत्त्यर्जनमत्यन्तावश्यकम् । तदविरोधेन गुणार्जनं विधेयमिति द्योत्यते ॥

नायिका सखीं वक्ति—

लूतातन्तुनिरुद्धद्वारः शून्यालयः पतत्पतगः ।
पथिके तस्मिन्नञ्चलपिहितमुखो रोदितीव सखि ॥ ५०४ ॥

**लूतेति** । हे सखि, ऊर्णनाभितन्तुपिहितद्वारः । पतन्तः पक्षिणो यत्र । शून्यालयः । तस्मिन्नायके पथिके देशान्तरस्थे सति वस्त्रपिहितवदनो रोदितीव । एवं चैतादृशैतद्रोदननिवारणं पुण्यजनकतयावश्यं विधेयं त्वयेति द्योत्यते । तेन च तद्गमनोत्तरकालमारभ्य न केनाप्यत्र सङ्गः संवृत्तः । अत इदानीमन्यनायकमानयेति ध्वन्यते ॥

नायकः सखायं वक्ति—

लग्नं जघने तस्याः सुविशाले कलितकरिकरक्रीडे ।
वप्रे सक्तं द्विपमिव शृङ्गारस्त्वां विभूषयति ॥ ५०५ ॥

**लग्नमिति** । समीचीनविस्तीर्णे कलिताङ्गीकृता 'तर्जन्यनामिके युक्ते मध्यमा स्याद्बहिष्कृता । करिहस्तः समुद्दिष्टः कामशास्त्रविशारदैः ॥' इत्येतल्लक्षणलक्षितस्य करिकरस्य केलिर्येन तस्मिन् । पक्षेऽङ्गीकृतगजशुण्डाकेलौ । तस्या जघने लग्नं त्वां शृङ्गारो वप्रे सक्तं गजमिव विशेषेण भूषयति । एवं चैतादृशमेव सर्वदा कुर्विति ध्वन्यते । "द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति कामशास्त्रादत्र सुरतारम्भगोष्ठीवत्कलितकरिकरक्रीड इत्यर्थस्य यद्व्रीडादायित्वेनाश्लीलत्वं तत्र दूषणम् ॥

यथा न कस्यापि विज्ञानं भवति तथानेनेयं भुक्तेति काचित्कांचिदन्योक्त्या वक्ति—

लिप्तं न मुखं नाङ्गं न पक्षती न चरणाः परागेण ।
अस्पृशतेव नलिन्या विदग्धमधुपेन मधु पीतम् ॥ ५०६ ॥

**लिप्तमिति** । परागेण वदनं न लिप्तम् । इदमग्रेऽप्यन्वेति लिङ्गवचनविपरिणामेन । अङ्गं न । पक्षती न । चरणा न स्पर्शमकुर्वतेव चतुरमधुपेन । मधुपदेनोन्मादशालित्वमावेद्यते । नलिन्या मधु पीतम् । नलिन्या इत्यनेन नायिकायां पद्मिनीत्वमावेद्यते । तेन च दुर्लभत्वम् । एवं चैतस्याः सङ्गोऽपि गुप्ततयैव लब्धुं शक्य इति व्यज्यते ॥

नायको दूतीं वक्ति—

लग्नं जघने तस्याः शुष्यति नखलक्ष्म मानसं च मम ।
भुक्तमविशदमवेदनमिदमधिकसरागसाबाधम् ॥ ५०७ ॥

**लग्नमिति** । तस्या जघने लग्नं नखचिह्नं मम मानसं च शुष्यति । मानसपदेन शुष्कीभावानर्हत्वेऽपि तद्भवनेन विरहे वडवानलतुल्यत्वमावेद्यते । तेन च दुःसहत्वम् । शुष्कीभावेषूभयोर्वैलक्षण्यमाह—भुक्तं वृद्धिशून्यम् । अविशदमप्रकटम् । यद्वा न विद्यते विशदं यस्मात् । चिरकालीनतया लौहित्यापगमेन श्वेतमित्यर्थः । अवेदनं वेदनारहितम् । इदम् । मम मानसमित्यर्थः । अधिकं वृद्धिमत् । जघनेऽत्यन्तासक्तमिति भावः । सरागं प्रीतिमत् । साबाधं पीडासहितम् । एवं च यथा सत्वरं सङ्गो भवेत्तथा यतस्वेति ध्वन्यते ॥

बहङ्गनालम्पटनायिकामेवं त्वया नायको वाच्य इति सखी समुपदिशति—

लज्जयितुमखिलगोपीनिपीतमनसं मधुद्विषं राधा ।
अङ्गेव पृच्छति कथां शंभोर्दयितार्धतुष्टस्य ॥ ५०८ ॥

**लज्जयितुमिति** । समग्रगोपीनां नितरां पीतं स्वाधीनीकृतं मनो येन तम् । नितरामित्यनेन गोपीमनसोऽन्यविषयसंबन्धाभावो व्यज्यते । मधुद्विषम् । चोन्मादशून्यत्वं ध्वन्यते । लज्जयितुं लज्जां प्रापयितुम् । राधा अङ्गेव दयितार्धेन तुष्टस्य शंभोः सुखजनकस्य कथां पृच्छति । एवं च सर्वदा कामबाधाशालिनः कामिनीसुखसंपादकस्य महादेवस्य नायिकार्धेन तुष्टिः, तव तु न तथेति निर्लज्जस्त्वमसीति द्योत्यते । एवं च यथा राधयान्यवार्तया श्रीकृष्णं प्रत्यनुचितं त्वया विधीयत इत्युक्तं तथा त्वया स्वनायकं प्रति वाच्यमिति ध्वन्यते । यद्वा लज्जयितुम् । अर्थाद्गोपीसमूहम् । निखिलगोपीभिर्मिलिताभिर्निपीतं स्वीकृतं मनो यस्य तं मधुद्विषं दयितार्धतुष्टस्य शंभोः कथां पृच्छति । एवं च यत्र दयितार्धमेव नायिकस्य सुखसंपादकतया तन्मनोवशीकरणसमर्थम्, तत्र किमु वाच्यं नायिकाजातमिति भावः । अथवा निपीतं मनो यासाम् । न तु ताभिरित्यर्थः । एवंच गुणविशेषशालितया हरनिरूपितप्रेमवत्तया शिवया स्वस्यार्धेनापि नायकः संतोष्य स्वाधीनतां नीतः, भवतीभिश्च सर्वाभिर्न मधुद्विद् स्वाधीनीकृत इति भवत्यो गुणविहीनतया न तत्र निरूपितप्रेमवत्य इति व्यज्यते । एवं च गोपीपदमपि चातुर्याभावप्रतिपादनेनार्थवत् ॥

सपत्नीत्वमत्यन्तासह्यमिति काचित्कांचिद्वक्ति—

लक्ष्मीनिःश्वासानलपिण्डीकृतदुग्धजलधिसारभुजः ।
क्षीरनिधितीरसुदृशो यशांसि गायन्ति राधायाः ॥ ५०९ ॥

**लक्ष्मीति** । लक्ष्म्या निःश्वासानलैः । परमेश्वरस्य राधातिसक्त्येर्ष्ययोष्णैरिति भावः । गाढीकृतदुग्धजलधिसारभोजनवत्यः क्षीरनिधितीरवसतिशालिन्यो नायिका राधाया यशांसि गायन्ति । यत्प्रसादादेवमस्माभिर्भुज्यत इति धियेति भावः । एवं च यत्र लक्ष्म्या अप्येवं सपत्नीदुःखम्, तत्र किमु वाच्यमन्यासामिति व्यज्यते ॥

कश्चित्कंचिद्वक्ति—

लीलागारस्य बहिः सखीषु चरणातिथौ मयि प्रियया ।
प्रकटीकृतः प्रसादो दत्त्वा वातायने व्यजनम् ॥ ५१० ॥

**लीलेति** । केलिसदनस्य बहिः सखीषु सतीषु । मयि चरणातिथौ प्रणति-

कारिणि। चरणातिथावित्यनेन प्रसादपात्रत्वं ध्वन्यते। प्रियया गवाक्षे व्यजनं दत्त्वा प्रसादः प्रकटीकृतः। व्यजनपरित्यागेन संतापनिवृत्तिप्रदर्शनेन प्रसादः प्रकटीकृत इति भावः। यद्वा गवाक्षे व्यजनस्थापनेनान्यानवलोकनीयत्वप्रदर्शनेन यथेच्छं सुरतविघ्नाभावद्योतनात्प्रसादप्रकटनमिति भावः। यद्वा केलिसदनस्य बहिः सखीविषये प्रणतिकारिणि मयि प्रियया वातायने व्यजनं दत्त्वा प्रसादः प्रकटीकृतः। कुपितेयं कदाचिद्गवाक्षद्वारा तर्जयिष्यतीति भीतः सखीप्रसादनां विहाय यदि गतस्तदा ताभिर्मत्प्रार्थनाया अकरणे मानापरित्यागेन नायकक्लेशो भवितेति यथेष्टमयं सखीप्रसादनां करोतु, ताश्च मदीयप्रसादनामिति प्रसादाविष्करणमिति भावः। अथवा गवाक्षे व्यजनसंस्थापनेन समीरणजनकस्यापि समीरणनिवारकत्वं यथा तथा दुःखजनकस्यापि तव दुःखनिवारकत्वमिति प्रदर्शनेन प्रसादाविष्कार इति भावः। एवं चैतस्या यथा चातुर्यं न तथान्यासामिति ध्वन्यते॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता लकारव्रज्या।

---

वकारव्रज्या।

सर्वगोपनपुरःसरमनेनेयं भुक्तेति व्यङ्क्तुं काचित्कांचित्प्रकारान्तरेण वक्ति—

वर्णहृतिर्न ललाटे न लुलितमङ्गं न चाधरे दंशः।
उत्पलमहारि वारि च न स्पृष्टमुपायचतुरेण॥ ५११॥

**वर्णेति**। ललाटे वर्णस्य मकरिकादेर्हृतिर्न। अङ्गमपि न म्लानम्। अधरे दंशोऽपि न। अर्थान्नायिकायाः। उपायनिपुणेनोत्पलं हृतं जलं च न स्पृष्टम्। एवं च सहचरीभिरपि न ज्ञातमिति भावः। नायिकायाः परकीयात्वात्संभोगचिह्नानुत्पादनपुरःसरं भुक्तेयमनेनेति भावः। एवं यद्येतादृशचातुर्यं तव तर्हि परकीयाभिरतिर्विधेयेति ध्वन्यते॥

दूती पान्थं प्रति वक्ति—

व्यालम्बि चूर्णकुन्तलचुम्बितनयनाञ्चले मुखे तस्याः।
बाष्पजलबिन्दवोऽलकमुक्ता इव पान्थ निपतन्ति॥ ५१२॥

**व्यालम्बीति**। हे पान्थ, तस्या वदने विशेषेणालम्बिनो ये चूर्णकुन्तलास्तैश्चुम्बितनयनप्रान्ते सति, अलकसंबन्धिमुक्ताफलानीव बाष्पोदकबिन्दवः। जलपदेनाधिक्यं व्यज्यते। निपतन्ति। एवं च त्वरया त्वया समागन्तव्यमिति ध्वन्यते॥

सखी नायकं वक्ति—

विनयविनता दिनेऽसौ निशि मदनकलाविलासलसदङ्गी ।
निर्वाणज्वलितौषधिरिव निपुण प्रत्यभिज्ञेया ॥ ५१३ ॥

**विनयेति** । हे निपुण । एवं च यथाकथंचिद्दर्शनेन कलाविहीनत्वमेव तस्यां त्वया नाशङ्कनीयमिति व्यज्यते । असौ नायिका दिवसे विनयनम्रा, रात्रौ मदनकलाविलासैर्लसदङ्गी निर्वाणज्वलितौषधिरिव प्रत्यभिज्ञेया । एवं च यथा काचिदोषधी दिवा सौम्या रात्रौ प्रज्वलति तथेयं दिवसेऽतिसौम्या रात्रौ तु मदनकलाकुशला, अतो नैतत्कालीनैतस्याः सौम्यत्वमाशङ्क्य विरतिर्विधेयेति ध्वन्यते । यद्वेयमत्यन्तविनयशालिनीति न परपुरुषाभिलाषिणीति मन्यमानं वयस्यो वक्ति—निपुणैः प्रत्यभिज्ञेया । एवं च मूर्खाणामियं सौम्येति ज्ञानम्, न निपुणानामिति भावः ॥

सखी नायकं वक्ति—

विहितबहुमानमौना सखीप्रबोधैर्यदस्रमातनुते ।
रागार्तिकाकुयाच्ञालघुरीक्षा रहसि पुनरेषा ॥ ५१४ ॥

**विहितेति** । विहितं बहुमानेन मौनं यया । सखीनां प्रबोधनैर्यदस्रमश्रु आतनुते । एषा पुनरेकान्ते रागे यार्तिर्दीनवचनं प्रार्थना एतैर्लघुवीक्षा । एवं चाधुनेयमेतादृशमानशालिनी दृश्यते परंतु रहसि रागजनितपीडादिभिः स्वयमेव स्वहस्तगतावश्यं भविष्यतीति ध्वन्यते । 'लघुरीक्ष्या' इति पाठे रागार्त्यादिभिर्लघुरेपेक्ष्येति योजना ॥

स्वनायिकायामनासक्तं काचिद्वक्ति—

विषमशरविशिखभिन्ना पत्नी शरणं यमेकमभिलषति ।
तस्य तव च्छायेव स्वीया जायापि भयभूमिः ॥ ५१५ ॥

**विषमेति** । मदनबाणभिन्ना पत्नी यमेकं शरणं रक्षणकर्तारं वाञ्छति तस्य तव च्छायेव स्वगतापि भयस्थानम् । विषमशरेत्यनेन दुःसहत्वं ध्वन्यते । पत्नी यमेकमित्यनेन मदनातिशयशालित्वमावेद्यते । छायेवेत्यनेन सर्वदा सेवाप्रवणत्वं नायिकायामावेद्यते । एवं चैतादृशाचरणमनुचितमिति व्यज्यते । यद्वा दूती स्वनायिकासंकोचशालिनं नायकं वक्ति—विषमेति । एवं च स्वाधीनायाः स्वनायिकायास्तव का भीतिः, अतश्चल संकेतं प्रतीति व्यज्यते ॥

पराक्रमशालिनि नायके नायिकात्यन्तमासक्ता भवतीति काचित्कांचिद्वक्ति—

विविधायुधव्रणार्बुदविषमे वक्षःस्थले प्रियतमस्य।
श्रीरपि वीरवधूरपि गर्वोत्पुलका सुखं स्वपिति ॥ ५१६ ॥

**विविधेति**। नानाप्रकारकायुधानां ये व्रणास्तेषामर्बुदैर्मांसकीलैः। 'अर्बुदो मांसकीले स्यात्संख्याभेदे च कीर्तितः'। कठिने नायकस्य वक्षःस्थले गर्वोत्कृष्टपुलका लक्ष्मीर्वीरस्त्री च सुखं निद्राति ॥

कृतनायकान्तरोपभोगं निभृतं पृष्ठतः सुप्तं नायकं नायिका वक्ति—

वैमुख्येऽपि विमुक्ताः शरा इवान्याययोधिनो वितनोः।
भिन्दन्ति पृष्ठपतिताः प्रिय हृदयं मम तव श्वासाः ॥ ५१७ ॥

**वैमुख्येऽपीति**। हे प्रिय। एवं चैतादृशकर्तव्यतयातिदुःखदत्वमित्यावेद्यते। अन्याययुद्धकारिणो मदनस्य वैमुख्येऽपि परावृत्तावपि विशेषेण मुक्ताः। उपसर्गेणातिभेदकत्वं ध्वन्यते। बाणा इव पृष्ठसंलग्नास्तव श्वासा मम हृदयं भिन्दन्ति। वितनोरित्यनेन सुरतातिशयेन क्षीणशक्तिकत्वं नायके ध्वन्यते। एवं कृतापराधस्य तवात्र स्वापो मम न सुखद इति ध्वन्यते। यद्वा कृतकनिद्रया नायिकां वञ्चयित्वान्यत्र गन्तुकामं नायकं नायिका वक्ति—वैमुख्येऽपि। त्वदीयदौःशील्यज्ञानादिति भावः। एवं च श्वासैर्मत्स्वापज्ञानोत्तरमियं स्वप्स्यति ततो मयान्यत्र गन्तव्यमिति किमर्थं कापट्यं रचयसि, यथेच्छं गच्छेति ध्वन्यते ॥

कश्चित्कांचिद्वक्ति—

व्यक्तमधुना समेतः खण्डो मदिराक्षि दशनवसने ते।
यन्नवसुधैकसारं लोभिनि तत्किमपि नाद्राक्षम् ॥ ५१८ ॥

**व्यक्तमिति**। हे मदिराक्षि। एवं च कटाक्षविक्षेपमात्रेणोन्मादजनकत्वं व्यज्यते। तव दशनवसन ओष्ठे समेतो लग्नः खण्ड इत्यधुना व्यक्तं प्रकटीभूतम्। एवं च पूर्वं किमपि नोक्तवती, अधुना तु मधुरवचनमभिधत्स इति भावः। यद्वा व्यक्तं स्वच्छम्। 'व्यक्तं स्फुटे च स्वच्छे च'। यन्मधु माक्षिकं तत्समेतः खण्डः। अस्तीत्यध्याहारः। एवं चातिमाधुर्यमधरेऽस्तीति व्यज्यते। हे लोभिनि। एवं च सर्वसंग्रहकारित्वं ध्वन्यते। नूतनसुधैकसारं यत्तत्किमपि नाद्राक्षं न दृष्टवान्। अथ च द्राक्षाशून्यं न। एवं च केवलं मधुरं वदसि, कटाक्षयसि च, न पुनश्चुम्बना-

दिना मां जीवयसीति ध्वन्यते । यद्वा हे मदिराक्षि, तवाधरे समेतो लग्नः खण्ड इदमधुना व्यक्तम् । निश्चितमित्यर्थः । यद्वसुधैकसारं न । अपि तु त्रिभुवनसार-मित्यर्थः । तत्किमपि लोभिनि नापश्यम् । एवं चेदानींतनाधरचुम्बनेनाधरमाधुर्यं विज्ञातं परं तु त्रिभुवनसारभूतसुरतेन किं मां न सुखयसीति व्यज्यते । अथ च त्वत्सुधैकसारं किमपि तन्न नाद्राक्षम् । अपि तु सर्वं दृष्टवानस्मीत्यर्थः । एवं च मदिरामाक्षिकशर्करासुधाद्राक्षामधुरवस्तूनां त्वयि सत्त्वेऽपि लोभवशात्किंचिद्ददासि किंचिन्न ददासीत्यनुचितमित्यावेद्यते ॥

नायकः सखायं वक्ति—

बालाविलासबन्धानप्रभवन्मनसि चिन्तयन्पूर्वम् ।
संमानवर्जितां तां गृहिणीमेवानुशोचामि ॥ ५१९ ॥

**बालेति** । हे वयस्य, अप्रभवन्नसमर्थः । प्राथमिककान्ताधीनत्वादिति भावः । बालाया विलासबन्धान्पूर्वं चिन्तयन्स्थितः । प्राथमिककान्ताधीनेन मया कथमियं विलासविशेषशालिनी भोक्तव्येति चिन्तावान्संजात इति भावः । अधुना तु संमान-रहिताम् । द्वितीयकामिन्याः प्राबल्यादिति भावः । गृहिणीमेवानुशोचामि । गृहि-णीमित्यनेन मानार्हत्वेऽपि तदकरणेनानौचिती द्योत्यते । एवं च यस्या भयेन पूर्वं किमपि कर्तुमशक्तस्तस्या इदानीमेतादृशी गतिः संवृत्तेति धियेति भावः । एवं च पूर्वमिदानीमपि न मां चिन्ता परित्यजतीति ध्वन्यते । यद्वा बालाया अप्रगल्भे मनसि विलासबन्धांश्चिन्तयन्नहं पूर्वं प्रतिष्ठावर्जितां गृहिणीमेवानुशोचामि । एवं चाप्रगल्भवयस्यनयैतादृशविलासैर्हृतचित्तः संवृत्तः, किं पुनरग्रेऽनया विधेयमिति भावः । पूर्वं गृहिणीमेवानुशोचामीत्यनेन बालाविलासासक्तचिन्तनया स्वात्मनः पर-तन्त्रतया शोच्यत्वेऽपि मदीयैतादृशावस्थामालोक्य गृहिण्याः समधिकदुःखोद्रेको भवितेति तद्विषय एवानुशोचनं मह्यमापतितमिति व्यज्यते ॥

मन्मथव्यथातोऽन्यद्व्यथाजातं नातिदुःखदमिति कश्चिद्वक्ति—

वीजयतोरन्योन्यं यूनोर्वियुतानि सकलगात्राणि ।
सन्मैत्रीव श्रोणी परं निदाघेऽपि न विघटिता ॥ ५२० ॥

**वीजयतोरिति** । परस्परं वीजयतोर्यूनोः समग्रावयवा विभागवन्तः संवृत्ताः । परं केवलं श्रोणी सन्मैत्रीव निदाघकालेऽपि । अपिनावश्यविघटनार्हत्वं द्योत्यते । न वियुक्ता । निदाघदुःखागणनादिति भावः ॥

उपपतिरपसार्यतामिति दूती कांचिद्भङ्ग्यन्तरेण वक्ति—

**व्यारोषं मानिन्यास्तमो दिवः कासरं कलमभूमेः।**
**बद्धमलिं च नलिन्याः प्रभातसंध्यापसारयति ॥ ५२१ ॥**

**व्यारोषमिति।** मानवत्या विशिष्टकोपम्, दिवोऽन्धकारम्, कलमभूमेः कासरं महिषम्, नलिन्या निरुद्धं भ्रमरं च प्रातःकालीनसंध्यापसारयति। एवं च प्रातःकालः संवृत्तः, अतो यया रीत्यानीतोऽयं तयैव रीत्या नेय इति ध्वन्यते। संध्यापदेन यथा योगसंपादनसामर्थ्यं तथापसारणसामर्थ्यमप्यपेक्षितमिति ध्वन्यते॥

नायिकासखी नायकं वक्ति—

**वक्षसि विजृम्भमाणे स्तनभिन्नं त्रुटति कञ्चुकं तस्याः।**
**पूर्वदयितानुरागस्तव हृदि न मनागपि त्रुटति ॥ ५२२ ॥**

**वक्षसीति।** वक्षसि विजृम्भमाणे स्तनौन्नत्यशालिनि स्तनभिन्नं कूर्पासकं तस्यास्त्रुटति। तव हृदि प्रथमप्रियाप्रीतिरीषदपि न त्रुटतीति। एवं चैतस्यास्तारुण्योद्रेकेऽपि तव नासक्तिः, अतस्त्वत्सदृशो न कोऽपि जड इति ध्वन्यते॥

नायिकासखी नायकं वक्ति—

**व्यक्तिमवेक्ष्य तदन्यां तस्यामेवेति विदितमधुना तु।**
**हर्म्यहरिमुखमिव त्वामुभयोः साधारणं वेद्मि ॥ ५२३ ॥**

**व्यक्तिमिति।** तदन्यां नायिकाभिन्नां व्यक्तिमवेक्ष्य। तस्यामेव त्वमासक्त इति शेषः। इति ज्ञातम्। एवं च पूर्वं सापीयमपि मया दृष्टैव तदानीं तवैतस्यामनादरादिना तस्यामेव प्रीतिरभूदिति विज्ञातमिति भावः। अधुना तु गृहद्वारसंबन्धि सिंहमुखमिव त्वामुभयोः साधारणं जानामि। एवं चेदानीं त्वमुभयत्र समबुद्धिरित्यस्थिरप्रकृतिकत्वं नायके ध्वन्यते। 'अवीक्ष्य' इति पाठे तदन्यां प्रथमाभिन्नां नायिकामवीक्ष्य। तस्यामेवासक्त इति शेषः। विदितम्। अधुना तु हर्म्यहरिमुखमिवोभयोः साधारणं वेद्मि। एवं यावत्पर्यन्तमुभयोर्न दर्शनं संवृत्तं तावदन्यादृशी बुद्धिः स्थितेति भावः॥

नायिकासखी नायकं वक्ति—

**व्यजनस्येव समीपे गतागतैस्तापहारिणो भवतः।**
**अञ्चलमिव चञ्चलतां मम सख्याः प्रापितं चेतः ॥ ५२४ ॥**

**व्यजनस्येति।** व्यजनस्येव संतापापनोदकस्य भवतः समीपे। अर्थान्नायि-

कायाः। गमनागमनैर्वस्त्रप्रान्तमिव मम सख्याश्चित्तं चाञ्चल्यं प्रापितम्। एवं च त्वयैव प्रथमासक्तिमुत्पाद्येदानीमुदासीनवच्छैथिल्यं क्रियत इत्ययुक्तं तवेत्यतस्त्वरस्व तद्दर्शनायेति ध्वन्यते। यद्वा व्यजनस्येव तापहारिणः समीपे। नायिकाया इति भावः। भवतो गतागतैः। एवं च लोकभीत्या कटाक्षवीक्षणाभावो व्यज्यते। सख्या अञ्चलमिव मम चेतश्चञ्चलतां प्रापितम्। एवं च मान्मथव्यथापनोदकभवदीयसविधगतागतसंजातानुरागजनितहेलावशात्कम्परूपसात्त्विकभावोदयवशाद्वा यथा सख्याश्चेलाञ्चले चञ्चलता तथा मन्मनसि कया रीत्या कुत्र वाऽनयोः संगमः संपादनीय इति चाञ्चल्यमुज्जृम्भत इति भावः॥

नायको नायिकां वक्ति—

वितरन्ती रसमन्तर्ममार्द्रभावं तनोषि तनुगात्रि।
अन्तःसलिला सरिदिव यन्निवससि बहिरदृश्यापि॥ ५२५॥

**वितरन्तीति**। हे कृशाङ्गि, अन्तः रसं प्रीतिं वितरन्ती ममार्द्रभावं तनोषि। यद्यस्मादन्तर्जला नदीव बहिरदृश्यापि निवससि। मम हृदीति भावः। एवं च बहिस्त्वद्विषयकप्रेमाभावेऽप्यान्तरं प्रेम ममातितरामस्ति त्वद्विषयकमित्यावेद्यते॥

चिरतरकृतचाटुवचनादिरचनेऽप्यवधीरणाकृतकस्तापं नायकमनुतापवशादानेतुं प्रेषिता दूती नायिकां वक्ति—

विहितविविधानुबन्धो मानोन्नतयावधीरितो मानी।
लभते कुतः प्रबोधं स जागरित्वैव निद्राणः॥ ५२६॥

**विहितेति**। कृतानेकसान्त्वनोऽपि मानोन्नतया त्वयावगणितोऽभिमानशाली। एवं च प्रसादनासंपादनाविरामौचित्यमावेद्यते। जाग्रदेव निद्रावान्प्रबोधं कुतो लभते। न कुतोऽपीत्यर्थः। एवं चैतादृशनायकावधीरणकरणमनुचितमिति ध्वन्यते॥

काचित्कांचिद्वक्ति—

व्रीडाविमुखीं वीतस्नेहामाशङ्क्य काकुवाङ्मधुरे।
प्रेमार्द्रसापराधां दिशति दृशं वल्लभे बाला॥ ५२७॥

**व्रीडेति**। लज्जया परावृत्तवदनाम्। अर्थान्नायिकाम्। गतस्नेहामाशङ्क्य चाटुवचनमधुरे नायके बाला। एवं चाज्ञत्वं व्यज्यते। प्रेम्णार्द्रामपराधेन सहितां दृष्टिं करोति। एवं स्त्रीणामेतादृशी गतिरिति भावः॥

कश्चित्कंचिद्वक्ति—

बाष्पाकुलं प्रलपतोर्गृहिणि निवर्तस्व कान्त गच्छेति।
यातं दंपत्योर्दिनमनुगमनावधि सरस्तीरे ॥ ५२८ ॥

**बाष्पेति**। बाष्पव्याकुलं यथा भवति तथा 'गेहिनि, निवर्तस्व', 'कान्त, गच्छ' इति प्रकृष्टालापवतोः। यद्वा परावृत्त्याद्यकरणेनानर्थकतया वृथा वदतोरित्यर्थः। 'प्रलापोऽनर्थकं वचः' इत्यभिधानात्। दंपत्योरनुगमनस्यावधिभूतसरस्तीरे दिनं यातं व्यतीतम्। एवं च प्रेम्णि सति न किंचिदपरं स्फुरतीति ध्वन्यते ॥

प्रतिज्ञापुरःसरविपरीतरतकारिणीं नायिकां नायको वक्ति—

वक्षःप्रणयिनि सान्द्रश्वासे वाड्मात्रसुभटि घनघर्मे।
सुतनु ललाटनिवेशितललाटिके तिष्ठ विजितासि ॥ ५२९ ॥

**वक्ष इति**। वक्षसि। अर्थात्स्वस्य। प्रणयः प्रीतिर्यस्याः। स्वापार्थमिति भावः। दीर्घश्वासशालिनि। श्रमवशादिति भावः। वचनमात्रशूरे। मात्रपदेन सामर्थ्याभावोऽभिव्यज्यते। बहुतरप्रस्वेदवति, शोभनगात्रि, ललाटे। अर्थान्मम। संस्थापितललाटिके, तिष्ठ तूष्णीं भव। यतो विजितासि। सर्वैः संबोधनपदैर्निःसहत्वप्रतिपादनाद्विजयस्य व्यङ्ग्यत्वेऽपि विजितासीति पदोपादानं न चमत्कारकारीत्याभाति ॥

राधा कृष्णेऽत्यन्तमासक्ता जातेति काचित्कांचिद्वक्ति—

विचरति परितः कृष्णे राधायां रागचपलनयनायाम्।
दशदिग्वेधविशुद्धं विशिखं विदधाति विषमेषुः ॥ ५३० ॥

**विचरतीति**। कृष्णे समन्ताद्विचरति सति, अनुरागचञ्चलनेत्रायां राधायां दशदिक्षु यो वेधस्तत्र विशुद्धम्। दशदिक्ष्वपि लक्ष्यवेधकारिणमित्यर्थः। बाणं मदनो विदधाति। एवं च सर्वत्र राधाकटाक्षविषयः श्रीकृष्णोऽभूदिति ध्वन्यते ॥

काचित्कांचिद्वक्ति—

वीक्ष्यैव वेत्ति पथिकः पीवरबहुवायसं निजावासम्।
सौन्दर्यैकनिधेरपि दयितायाश्चरितमविचलितम् ॥ ५३१ ॥

**वीक्ष्यैवेति**। पथिकः पुष्टबहुकाकम्। नायकागमनशकुनदर्शनार्थं दत्तदध्यो-

---

१. पवर्गीयबकारमज्योच्चितेयमार्या प्रमादेन दन्त्योष्ठ्यवकारमज्यायामादर्शपुस्तकेषु लिखितेति भाति.

दनादिनेति भावः । स्वसदनं दृष्ट्वैव । न वचनादिनेत्यर्थः । सौन्दर्यैकस्थानभूतायाः । एवं चावश्यचरितव्यसनयोग्यत्वमावेद्यते । प्रियाया अविचलितमाचरणं जानाति । यदीयमन्यत्रासक्ता स्यात्तदा किमिति मदर्थमेतादृशशकुनाद्यवेक्षणं कुर्यादिति भावः । यद्वानया रीत्या नायकः प्रतारयितुं शक्यः, अतो यथेच्छं परपुरुषे विचरेति दूती 'त्वद्वचनकरणे नायको मत्पातिव्रत्यभङ्गं विज्ञास्यति तेन चानुचितमिदम्' इति वादिनीं नायिकां वक्ति ॥

विपन्निमग्नस्योद्धारः केनचिदेव कर्तुं शक्यो न सर्वैरिति कश्चिदन्योक्त्या कंचन वक्ति—

विमुखे चतुर्मुखेऽपि श्रितवति चानीशभावमीशेऽपि ।
मग्नमहीनिस्तारे हरिः परं स्तब्धरोमाभूत् ॥ ५३२ ॥

**विमुख इति ।** चतुर्मुखे विधातर्यपि विमुखे उद्योगशून्ये । यद्वानङ्गीकारकारिणि । ईशेऽप्यनीशभावमसमर्थभावं श्रितवति सति । मग्नधरोद्धारे परं केवलं हरिर्विष्णुः स्तब्धरोमा वराहः । अथ च रोमाञ्चितः । धरोद्धारोत्साहवशादिति भावः । अभूत् । चतुर्मुखेशपदाभ्यामनयोः सांनिध्यात्सामर्थ्यशालित्वं ध्वन्यते । तेन च तत्करणोत्साहाभावेन धरोद्धारकरणेऽतिकाठिन्यमावेद्यते । एवं च विष्णुतुल्येनैवापदुद्धारः कर्तुं शक्यो नान्येनेति व्यज्यते ॥

कश्चित्कंचिदन्योक्त्या वक्ति—

वापीकच्छे वासः कण्टकवृतयः सजागरा भ्रमराः ।
केतकविटप किमेतैर्ननु वारय मञ्जरीगन्धम् ॥ ५३३ ॥

**वापीति ।** हे केतकवृक्ष, वापीजलप्रायदेशे वसतिः । कण्टकावरणानि । निद्राशून्या भ्रमराः । एतैः किम् । न किंचिदित्यर्थः । ननु निश्चितं मञ्जरीगन्धं वारय । एवं चैतादृशी नायिका यावत्तव समीपेऽस्ति, तावद्यत्र यत्र येन येन प्रकारेणावतिष्ठसि तत्रावश्यमन्यनायकोपसर्गो नापगमिष्यतीत्येतत्करणमनुचितमिति द्योत्यते ॥

नायको नायिकां वक्ति—

विचलसि मुग्धे विधृता यथा तथा विशसि हृदयमदये मे ।
शक्तिः प्रसूनधनुषः प्रकम्पलक्ष्यं स्पृशन्तीव ॥ ५३४ ॥

**विचलसीति ।** हे मुग्धे सुन्दरि दयाशून्ये । एवं च गमनौचित्यमावेद्यते ।

विधृता । अञ्चलादाविति भावः । यथा विचलसि गच्छसि तथा मे हृदयं विशसि । प्रकम्पलक्ष्यं स्पृशन्ती मदनस्य शक्तिरिव । एवं च त्वद्गमने मत्प्राणा एव गमिष्यन्तीति व्यज्यते ॥

सखी नायिकां वक्ति—

विहितासमशरसमरो जितगाङ्गेयच्छविः कृताटोपः ।
पुरुषायिते विराजति देहस्तव सखि शिखण्डीव ॥ ५३५ ॥

**विहितेति** । हे सखि, विहितः कृतः । विशेषेण हित इति वा । असमशरसमरो मदनयुद्धम् । सुरतमिति यावत् । येन । यस्येति वा । अत एव विपरीतरतोद्योगः । पक्षे कृतोऽनुपमवाणैः सङ्ग्रामो येन सः । जिता गाङ्गेयस्य सुवर्णस्य । पक्षे भीष्मस्य । दीप्तिर्येन सः । संपादिताडम्बरः । तव देहो विपरीतरते शिखण्डीव विराजति । एवं च त्वया बहुधा विपरीतरतमेव विधेयमिति ध्वन्यते ॥

चौर्यरतादि न सम्यगिति वादिनं कश्चिद्वक्ति—

वृतिविवरनिर्गतस्य प्रमदाबिम्बाधरस्य मधु पिबते ।
अवधीरितपीयूषः स्पृहयति देवाधिराजोऽपि ॥ ५३६ ॥

**वृतीति** । आवरणच्छिद्रनिर्गतस्य प्रकृष्टमदशालिन्या बिम्बतुल्याधरस्य मधु पिबते । 'क्रुधद्रुह–' इत्यादिना चतुर्थी । अवगणितामृत इन्द्रोऽपि स्पृहयति । मद्रूपतावाप्त्यर्थमित्यर्थः । एवं चेन्द्रपदसुखाद्यपेक्षयापि चौर्यरतसुखमधिकमित्यावेद्यते ॥

पुरुषविशेषे समासक्तायाः संगतिमपेक्षमाणं कंचन दूती वक्ति—

वासितमधुनि वधूनामवतंसे मौलिमण्डने यूनाम् ।
विलसति सा पुरकुसुमे मधुपीव वनप्रसूनेषु ॥ ५३७ ॥

**वासितेति** । वासितमुत्कृष्टताशालिकृतं मधु येन तस्मिन् । एवं चैतत्समवधाने मद्यस्य मादकत्वमित्यावेद्यते । पक्षे मधुनः सौगन्ध्यार्थं पुष्पादिकं प्रक्षिप्यत इति भावः । नायिकानामवतंसे श्रुतिभूषणरूपे । एवं च सर्वा अपि कामिन्यस्तदीयगुणश्रवणं सर्वदादरातिशयेन कुर्वन्तीति भावः । तरुणानां मस्तकभूषणरूपे । वन्दनीय इत्यर्थः । नगरस्य कुसुमे । सर्वजगत्स्पृहणीयत्वादिति भावः । नायके । विशेषणमहिम्ना विशेष्यलाभः । सा विलसति शोभते । एवं च त्वं न तस्याः शोभाधायक

इति भावः । वनकुसुमे मधुपीव । एवं चैतादृशनायकविशेषे समासक्ता न कथमपि त्वयि संयोजयितुं शक्येति भावः ॥

नायिकासखी नायकं वक्ति—

व्रीडाप्रसरः प्रथमं तदनु च रसभावपुष्टचेष्टेयम् ।
जवनीविनिर्गमादनु नटीव दयिता मनो हरति ॥ ५३८ ॥

**व्रीडेति** । आदौ लज्जाप्रसरः । तदनन्तरं रसः शृङ्गारादिः, भावश्चित्ताभिप्रायः, आभ्यां पुष्टा चेष्टा । जवनीविनिर्गमादनु नर्तकीवेयं दयिता मनो हरति । एवं च यथा जवनिकाविनिर्गमानन्तरं नटी प्रथमतो लज्जातिशयं प्रदर्श्य ततो रसाभिनयपुष्टचेष्टां प्रदर्शयति, ततो रसाविर्भावात्सामाजिकमनांसि हरति, तथेयं दयिता यथा जवन्यपसरति तथा प्रथमं लज्जाविशेषं विधाय ततः सरसाभिप्रायविलासं प्रदर्श्य ततो निर्भररतानन्दवत्तया नायकीयमनसोऽनन्यप्रवणतामापादयतीति भावः । इयमित्यनेनान्यासां प्रथमतो निर्लज्जतया किंचिन्मनोहारकत्वेऽपि न तासु नायकीयचित्तहारकत्वमिति वस्त्वावेद्यते । तेन च व्यतिरेकालंकारः ॥

दूती नायकं वक्ति—

वाससि हरिद्रयेव त्वयि गौराङ्ग्या निवेशितो रागः ।
पिशुनेन सोऽपनीतः सहसा पतता जलेनेव ॥ ५३९ ॥

**वाससीति** । वस्त्रे हरिद्रयेव गौराङ्ग्या नायिकया त्वयि रागोऽनुरागः । पक्षे पीतिमा । संपादितः । गौराङ्ग्येति हरिद्राविशेषणमपि । स रागः सहसा । अप्रतर्क्यमिति यावत् । पतता प्रविष्टेन । पक्षे संबन्धवता । जलेनेव पिशुनेन सूचकेन दूरीकृतः । एवं च न तस्या अपराध इति भावः ॥

एतादृशनायिकासाहचर्ये तव सर्वत्र कामुककृतपीडा स्यादिति कश्चित्कंचिदन्योक्त्या वक्ति—

विष्वग्विकासिसौरभरागान्धव्याधबाधनीयस्य ।
क्वचिदपि कुरङ्ग भवतो नाभीमादाय न स्थानम् ॥ ५४० ॥

**विष्वगिति** । हे कुरङ्ग, सर्वतो विसारिसौगन्ध्येन योऽभिलाषस्तेनान्धा ये व्याधास्तैः पीडनीयस्य । विष्वगित्यादिना गोपनमशक्यमित्यावेद्यते । रागान्धपदेन कर्तव्याकर्तव्यविवेकवैधुर्यमावेद्यते । व्याधपदेन हिंस्रत्वं द्योत्यते । भवतो नाभीमादाय

क्वापि स्थलं नास्ति । एवं चैतस्याः समस्तगुणैर्विख्यातायास्तव गोपनाशक्यतया सर्वतः पीडा स्यात्, अत एतत्सङ्गस्त्याज्य इति ध्वन्यते ॥

एकजातसजातीयगुणवत्त्वेऽपि क्वचित्कश्चिदस्ति विशेष इति कंचिदन्योक्त्या वक्ति—

वटकुटजशालशाल्मलिरसालबहुवारसिन्धुवाराणाम् ।
अस्ति भिदा मलयाचलसंभवसौरभ्यसाम्येऽपि ॥ ५४१ ॥

**वटेति** । वटादिसिन्धुवारान्तवृक्षाणां मलयाद्रिजन्यसौगन्ध्यसाजात्येऽपि भेदोऽस्ति । एवं च चतुरैरेव तद्वैजात्यं ज्ञातुं शक्यं नान्यैरिति भावः ॥

सामान्यवनितां काचिदन्योक्त्या समुपहसति—

विनिहितकपर्दकोटिं चापल्यदोषेण शंकरं त्यक्त्वा ।
वटमेकमनुसरन्ती जाह्नवि लुठसि प्रयागतटे ॥ ५४२ ॥

**विनिहितेति** । विनिहिता समर्पिता कपर्दस्य जटाजूटस्य कोटिः प्रान्तभागो येन तम् । पक्षे कोटिसंख्याककपर्ददातारम् । शंकरं शिवम् । पक्षे सुखसंपादकम् । चाञ्चल्यदोषेण त्यक्त्वा । दोषपदमनौचितीं व्यनक्ति । हे जाह्नवि जह्नुतनये । एवं चैतादृशाचरणमनुचितं तवेति ध्वन्यते । एकं वटवृक्षम् । पक्षे वराटकम् । अपेक्षमाणा प्रयागतटे । पक्षे मध्यमपदलोपिसमासात्प्रलुप्तयागस्य पापीयसः समीप इत्यर्थः । लुठसि । एवं च चाञ्चल्यकरणमनुचितं तवेति भावः ॥

'किमिति विरहदुःखं त्वया मत्सख्या दत्तम्' इति वादिनीं नायिकासखीं नायको वक्ति—

वेद चतुर्णां क्षणदा प्रहराणां संगमं वियोगं च ।
चरणानामिव कूर्मी संकोचमपि प्रसारमपि ॥ ५४३ ॥

**वेदेति** । चतुःप्रहरसंबन्धिसंयोगं चतुःप्रहरसंबन्धिवियोगं च क्षणदा । क्षणदेव क्षणदा । नायिकेत्यर्थः । वेद । कर्तुमिति भावः । एवं च यदि प्रसन्ना नायिका तदा सैव प्रहरचतुष्टयसंबन्धि रतसुखं करोति, सैव चाप्रसन्ना प्रहरचतुष्टयसंबन्धि विरहदुःखं करोतीति भावः । अत एव क्षणमुत्सवं ददाति द्यति चेति व्युत्पत्तिरपि संगच्छते । अथ च प्रहरचतुष्टयसंबन्धि सङ्गसुखस्य तथाविधविरहं रात्रिरेव वेद ।

रात्रीयप्रहरचतुष्टयसंबन्धिविरहवेदनायाश्च कर्त्री सैवेत्यर्थः। दिवसीयविरहस्यापि रात्रावेवातिदुःखदत्वादिति भावः। चरणानां संकोचं प्रसारमपि यथा कूर्मी विजानाति, एवं च यथा चरणसंकोचप्रसरणसंपादनं कूर्म्यधीनं तथा संगमविरहसंपादनं नायिकाधीनमिति भावः। एवं च न ममापराध इति ध्वन्यते। यद्वा विरहिणी सखीं वक्ति—हे सखि, चतुर्णां प्रहराणां संगमं वियोगं च क्षणदा रात्रिर्वेद। चन्द्राद्युद्दीपनादिप्राबल्याद्युन्मादाद्यवस्थया नायकसमागमासमागमाभ्यां मत्सुखदुःखसाक्षिणी रात्रिरेवेति भावः। एवं च तादृश्यापि सख्या मत्सुखदुःखविचारणा न क्रियत इति सख्युपालम्भो व्यज्यते। अथवा चतुर्णां प्रहराणां क्षणदा। समग्रा रात्रिरिति यावत्। सुखदुःखे वेद। मदीये इति भावः। एवं च क्षणमपि न रात्रौ विश्रान्तिर्वृत्तेति भावः। यद्वा सामान्यवनितां तदीयधात्री वक्ति—कूर्मीव क्षणदा चतुर्णां प्रहराणां सङ्गं वियोगं च वेद। त्वं किमिति न वेत्सि। एवं च त्वयापि केऽप्यानेयाः केऽपि विनिःसारणीया इति भावः। अथवा सखी नायिकामुपदिशति—या ह्युत्सवदा कामिनी सा स्वदर्शनादिदानेन दिवसीयप्रहरचतुष्टयविरहसंपादनेनोत्कण्ठितं नायकं विधाय रात्रौ प्रहरचतुष्टयमपि रमयतीति भावः॥

नायिकासखी नायकं वक्ति—

वृतिविवरेण विशन्ती सुभग त्वामीक्षितुं सखी दृष्टिः।
हरति युवहृदयपञ्जरमध्यस्था मन्मथेषुरिव ॥ ५४४ ॥

**वृतीति**। हे सुभग। एतादृशनायिकानुरागशालित्वादिति भावः। भित्तिसुषिरेण त्वामवलोकयितुं विशन्ती यूनां हृदयरूपो यः पञ्जरो वंशकरण्डिका तन्मध्यस्था। एवं च धारानुपघातो ध्वन्यते। मन्मथेषुरिव सख्याः। ममेति भावः। दृष्टिर्हरति। अर्थात्त्वामेव। एवं च पूर्वं त्वद्गुणश्रवणादिना त्वय्यासक्ता, इदानींतनत्वद्विषयकविलोकनेन मन्मथवशान्न किंचिदपि मम सखी जानातीति त्वय्यत्यन्तमासक्तेयमिति ध्वन्यते। यद्वा युवहृदयपञ्जरमध्यस्थेति दृष्टिविशेषणम्। पञ्जरपदेन निःसारणानर्हत्वं ध्वन्यते। एवं च त्वामवलोकयितुं प्रवृत्ताया मत्सख्या उदासीनवस्तुतुल्यतया नयनविषयीभूता अन्ये युवानस्तस्याः कटाक्षैकतानतापन्नास्त्वामेव भावयन्तीति भावः। एवं च सर्वयुवस्पृहणीया या त्वामेव स्पृहयतीति सा त्वयावश्यमनुग्राह्येति ध्वन्यते॥

याथातथ्यज्ञानवानयमेवेति कश्चित्कंचिदन्योक्त्या वक्ति—

विपणितुलासामान्ये मा गणयैनं निरूपणे निपुण ।
धर्मघटोऽसावधरीकरोति लघुमुपरि नयति गुरुम् ॥ ५४५ ॥

**विपणीति** । हे निरूपणे निपुण । एवं चैतस्यान्यैः समताकरणे तवैवानुचितमिति व्यज्यते । रथ्यातुलासामान्ये एनं मा गणय । असौ धर्मघटो लघुमधरीकरोति गुरुमुपरि नयति । क्वचित् 'एनां दिव्यतुला सा' इति पाठः । तत्र नायिकापक्षे योज्यम् ॥

सतां मनसः सकाशान्न किंचिन्महत्तरमिति कश्चिद्वक्ति—

वासरगम्यमनूरोरम्बरमवनी च वामनैकपदम् ।
जलधिरपि पोतलङ्घ्यः सतां मनः केन तुलयामः ॥ ५४६ ॥

**वासरेति** । ऊरुरहितस्य । अरुणस्येत्यर्थः । अम्बरं दिवसोल्लङ्घ्यम् । वसुधा च वामनस्यैकपदम् । एकपदेनोल्लङ्घ्येत्यर्थः । समुद्रोऽपि पोतेन लङ्घ्यः । सतां मनः केन तुलयामः । एवं च महत्तरतयाभिमतस्याकाशस्याल्पसमयेन चरणहीनोल्लङ्घनीयतया, तथा वसुधाया अपि ह्रस्वपदलङ्घनीयतया, तथा जलधेरपि पोत इव पोत इत्युपमितेन स्वल्पेनाप्युल्लङ्घनीयतया, एतत्त्रयातिरिक्तवस्तुनोऽभावात्सतां मनो निरुपममित्यर्थः ॥

दूती नायिकां वक्ति—

विततमोमषिलेखालक्ष्मोत्सङ्गस्फुटाः कुरङ्गाक्षि ।
पत्राक्षरनिकरा इव तारा नभसि प्रकाशन्ते ॥ ५४७ ॥

**वितततेति** । हे कुरङ्गनेत्रे, विततं यत्तमस्तद्रूपा या मषी तस्या या रेखास्तद्रूपचिह्नवदुत्सङ्गो यस्य तादृशा ये ताराः पत्ररूपाक्षरसमूहा इव प्रकाशन्ते । एवं च त्वद्विरहखिन्नस्य नायकस्य त्वद्विज्ञापनापत्रमिवेदमाकाशमालोक्य त्वया तरया प्रस्थेयमिति व्यज्यते । यद्वा मदनदेवस्येदं चन्द्रमुद्रामुद्रितं शासनपत्रं यन्मानवतीनां निःशङ्कं भवद्भिर्दुःखं देयमिति शारदादिनिजजनस्येत्यवगत्य मानमपहाय नायकमनुरञ्जयेति सखीवाक्यमेतत् ॥

विविधाङ्गभङ्गिषु गुरुर्नूतनशिष्यां मनोभवाचार्यः ।
वेत्रलतयेव बालां तल्पे नर्तयति रतरीत्या ॥ ५४८ ॥

**विविधेति** । अनेकाङ्गभङ्गिषु गुरुर्मनोभवरूपाचार्यो नवीनान्तेवासिरूपां बालां

वेत्रलतयेव रतरील्या तल्पे नर्तयति । एवं चेयमग्रेऽत्यन्तरतकलाप्रवीणा भविष्यतीति भावः ॥

नायको नायिकां वक्ति—

विपरीतमपि रतं ते स्रोतो नद्या इवानुकूलमिदम् ।
तटतरुमिव मम हृदयं समूलमपि वेगतो हरति ॥ ५४९ ॥

**विपरीतमिति** । हे सुतनु, अनुकूलमिच्छाविषयीभूतम् । पक्षे कूलं रोधः । इदं ते विपरीतमपि रतम् । अपिना विपरीतरतेतररतसंग्रहः । यद्वापिरवधारणार्थकः । नद्या इव स्रोतो मम हृदयं तटतरुमिव वेगतः । वेगविशेषादित्यर्थः । आमूलं हरति । एवं च रतसामान्यस्याधिक्येऽपि विपरीतरतस्याधिक्यमित्यावेद्यते ॥

कश्चित्कंचिद्वक्ति—

वैभवभाजां दूषणमपि भूषणपक्ष एव निक्षिप्तम् ।
गुणमात्मनामधर्मं द्वेषं च गृणन्ति काणादाः ॥ ५५० ॥

**वैभवेति** । दूषणमपि । अपिना हेयत्वमावेद्यते । भाग्यशालिनाम् । पक्षे वैभवं व्यापकत्वम् । भूषणपक्ष एव । एवकारेण दूषणपक्षव्यवच्छेदः । निक्षिप्तम् । स्थापितमित्यर्थः । उक्तमर्थमर्थान्तरन्यासेन द्रढयति—काणादा वैशेषिकशास्त्रप्रवर्तका अधर्मं द्वेषं चात्मनां गुणं गृणन्ति । चतुर्विंशतिगुणेष्वेतयोर्गणनादिति भावः । एवं चाधर्मद्वेषयोर्दूषणपक्षनिक्षेपयोग्यत्वेऽप्यात्मनि विद्यमानतया गुणत्वं मुनिभिरभिहितं तत्र का वार्तान्येषामिति भावः । एवं च दरिद्रस्यैव दोषं दोषत्वेन गणयन्ति सर्वे इति दारिद्र्यमसम्यगिति व्यज्यते ॥

वक्राः कपटस्निग्धा मलिनाः कर्णान्तिके प्रसज्जन्तः ।
कं वञ्चयन्ति न सखे खलाश्च गणिकाकटाक्षाश्च ॥ ५५१ ॥

**वक्रेति** । वक्राः कुटिलाः । कापट्येन स्नेहवन्तः । मलिनाः । पापकारित्वात्साहजिकश्यामताशालित्वादित्युभयत्रेति भावः । कर्णान्तिके प्रसज्जन्तः । परापकारार्थं विशालत्वादित्युभयत्र भावः । हे सखे, खला वेश्याकटाक्षाश्च कं न वञ्चयन्ति । अपि तु सर्वमेव । एवं चोभयसंसर्गस्तव नोचित इति व्यज्यते ॥

पाकोद्यमशालिनीं नायिकां रतार्थी नायको वक्ति—

विद्युज्ज्वालावलयितजलधरपिठरोदराद्विनिर्यान्ति ।
विशदौदनद्युतिमुषः प्रेयसि पयसा समं करकाः ॥ ५५२ ॥

**विद्युदिति** । हे प्रेयसि, विद्युज्ज्वालाभिर्व्याप्तं यन्मेघरूपपात्रम्, अथ च जलाधारभूतं यत्पिठरं तन्मध्यात्स्वच्छौदनकान्तिहारकाः करकाः पयसा जलेन । पक्षे दुग्धेन । सह विनिर्यान्ति । एवं चैतादृशकाले क्षुत्क्षामस्य दुग्धौदनभोजनदानवन्मम सुरतदानं जीवननिदानमित्यवगत्येतरव्यासङ्गं परिहाय मत्सविध एहीति ध्वन्यते । यद्वा वर्षोपलसहितैतादृशवृष्टौ कथं मया संकेते समागन्तव्यमिति वादिनीं काचिद्वक्ति—विद्युदिति । एवं चैतादृशकालीनसुरतं दुग्धौदनभोजनादपि मधुरमित्यवगत्य संकेतं प्रयाहीति ध्वन्यते ॥

अत्यन्तरतोत्कण्ठाशाली नायको नायिकां वक्ति—

व्यजनादिभिरुपचारैः किं मरुपथिकस्य गृहिणि विहितैर्मे ।
तापस्त्वदूरुकदलीद्वयमध्ये शान्तिमयमेति ॥ ५५३ ॥

**व्यजनेति** । हे गृहिणि । एवं च सेवासंपादनौचित्यमावेद्यते । मरुपथिकस्य मे संपादितैर्व्यजनप्रभृतिभिरुपचारैः किम् । न किमपीत्यर्थः । एवं च मरुदेशादागतस्य भूयसी संतापवत्तेति भावः । किं तर्हि विधेयमित्यत आह—त्वदूरुरूपकदलीद्वयान्तरालेऽयं मदेकवेद्यस्तापः शान्तिमेति । एवं चान्यव्यासङ्गं विहाय रहसि सत्वरं प्रचलेति ध्वन्यते ॥

क्षुद्रेण यत्कर्म कर्तव्यं तद्द्विगुणं न विधेयमिति कश्चित्कमप्युपदिशति—

वैगुण्येऽपि हि महता विनिर्मितं भवति कर्म शोभायै ।
दुर्वहनितम्बमन्थरमपि हरति नितम्बिनीनृत्यम् ॥ ५५४ ॥

**वैगुण्येऽपीति** । महता श्रेष्ठेन संपादितं कर्म विगुणत्वेऽपि शोभायै भवति । अर्थान्तरन्यासमाह—दुर्वहः । महत्त्वादिति भावः । यो नितम्बस्तेन निश्चलमपि नितम्बिनीनृत्यं हरति । चित्तमिति भावः ॥

काचिदत्यन्तं सा पतिव्रतेति वादिनीं कांचिद्वक्ति—

वीक्ष्य सतीनां गणने रेखामेकां तया स्वनामाङ्काम् ।
सन्तु युवानो हसितुं स्वयमेवापारि नावारितुम् ॥ ५५५ ॥

**वीक्ष्येति** । साध्वीनां गणने स्वनामचिह्नरूपामेकां रेखां दृष्ट्वा युवानः । तदु-

पभोक्तार इति भावः। हसितुं सन्तु। स्वयमेवावरितुं निरोद्धुम्। हास्यमिति भावः। नापारि। एवं च तदीयसतीगणनारेखां दृष्ट्वा युवभिर्हसितमिति किं वक्तव्यम्, तयैव कथमयं लोको भ्रान्त इति हास्यं कृतमिति भावः। एवं चैतादृश्याः क्व सतीत्वमित्यावेद्यते॥

इतः किमिति नापसरसीति वादिनीं कांचित्कश्चिद्वक्ति—

विन्ध्याचल इव देहस्तव विविधावर्तनर्मदनितम्बः।
स्थगयति गतिं मुनेरपि संभावितरविरथस्तम्भः॥ ५५६॥

**विन्ध्येति।** अत्र संबुद्धिपदानुपादानं लोकभीतिमावेदयति। विविधोऽनेकप्रकारक आवर्त आवर्तनं चालनविशेषो यस्य स चासौ क्रीडाप्रदो नितम्बो यस्य। पक्षे विविधा आवर्ता अम्भोभ्रमणानि यस्यां तादृशी नर्मदा नदी यस्मिंस्तादृशकटकवान्। अत एव संभावितः सूर्यरथस्य स्तम्भो येन। स्वैकदेशनितम्बेन तच्चक्रविनिर्जयादिति भावः। यद्वा संभावितो रविरथस्य लक्षणया तच्चक्रस्य स्तम्भो येन। ततोऽप्यधिकपरिमाणशालिनितम्बवत्त्वादिति भावः। पक्षे रविरथस्य स्तम्भो गतिविच्छेदः। अत्युच्चत्वादिति भावः। तव देहो विन्ध्याद्रिरिव मुनेरपि मननशीलस्यापि। पक्षेऽगस्त्यस्य। गतिं श्लथयति। एवं च मननशीलस्यापि तवैतादृशदेहमवलोक्य गतिनिरोधो जायते, किं पुनर्मादृशस्य रसलम्पटस्येति भावः। यद्वा विपरीतरतनिर्जितो नायको नायिकां वक्ति—विविधावर्तोऽनेकप्रकारकभवनम्। चलनविशेषादिति भावः। तेन क्रीडाप्रदो नितम्बो यस्य। संभावितो रविरथस्य स्तम्भः। पराभव इत्यर्थः। ततोऽप्यधिकतरगतिमन्नितम्बवत्त्वादिति भावः। पक्षे प्राग्वत्। मुनेरपि 'वानरं चपलं ध्यायेत्' इत्यादिकामतन्त्रोक्तचिन्तनवतोऽपि गतिं सामर्थ्यं स्थगयति। एवं च त्वदासक्तचित्तस्य मम पराजयस्तव सुकर इति ध्वन्यते॥

काचित्कंचिदन्योक्त्या वक्ति—

वृतिभञ्जन गञ्जनसह निकाममुद्दाम दुर्नयाराम।
परवाटीशतलम्पट दुष्टवृष स्मरसि गेहमपि॥ ५५७॥

**वृतीति।** आवरणभञ्जक, तिरस्कारसह, अत्यर्थं परमदुर्नयस्याराम। एवं च दुर्नयस्य त्वमेव स्थानमिति भावः। परकीयोपवनशतलम्पट, दुष्टवृष, गेहमपि स्मरसि। अपिना निजजनसंग्रहः। एवं च स्वनायिकाविस्मरणं तव नोचितमिति व्यज्यते॥

महावंशजन्यत्वेऽप्यनेकगुणवत्त्वेऽपि खलस्य विश्वासो न विधेय इति कश्चित्कंचिद्वक्ति—

वंशावलम्बनं यद्यो विस्तारो गुणस्य यावनतिः।
तज्जालस्य खलस्य च निजाङ्कसुप्तप्रणाशाय॥ ५५८॥

**वंशेति**। यद्वंशस्यान्वयस्य, अथ च वेणोरवलम्बनं जन्यत्वमाश्रितत्वं च। गुणस्य पाण्डित्यशौर्यादेस्तन्तोश्च यो विस्तार आधिक्यं दैर्घ्यं च। या च नम्रता तत्खलस्य जालस्य च निजाङ्कसुप्तनाशाय। विश्वस्तनाशायेत्यर्थः॥

वर्षासमये प्रस्थातुमुद्यतं नायकं नायिकासखी वारयति—

विन्ध्यमहीधरशिखरे मुदिरश्रेणीकृपाणमयमनिलः।
उद्यद्विद्युज्ज्योतिः पथिकवधायैव शातयति॥ ५५९॥

**विन्ध्येति**। विन्ध्याचलसानौ मेघपङ्क्तिरूपकरवालं स्फुरच्चपलारूपस्फुलिङ्गोद्योतशाली असौ समीरणः पान्थविघातायैव तीक्ष्णीकरोति। विन्ध्यमहीधरशिखर इत्यनेन स्फुटदर्शनयोग्यत्वम्, तेन च मद्वचसि न मिथ्यात्वमाशङ्क्यमिति द्योत्यते। मुदिरश्रेणीकृपाणमित्यनेनानिवारणीयत्वम्, तेन च स्वसदनावस्थानमेव शरणमित्यावेद्यते। अनिल इत्यनेन सर्वत्र संचरणयोग्यत्वम्, तेन च प्रतीकारानर्हत्वं व्यज्यते। पथिकवधायैवेत्यनेन कार्यान्तराभावः, तेन च कथंचिदपि त्वया न गन्तव्यमित्यावेद्यते॥

कश्चित्सखायं वक्ति—

व्यालम्बमानवेणीधुतधूलि प्रथममश्रुभिर्धौतम्।
आयातस्य पदं मम गेहिन्या तदनु सलिलेन॥ ५६०॥

**व्यालम्बेति**। विशेषेणालम्बमाना या वेणी तया दूरीकृतधूलि। आयातस्य। परदेशादिति भावः। मम पदं गेहिन्या प्रथमतोऽश्रुभिः क्षालितं पश्चाज्जलेन। एवं च चिरप्रवासकरणान्मयि कोपमियं करिष्यतीति भीतिवतोऽपि ममानया चरणप्रणमादिना साध्वसमपाकृतम्। एतादृशी सरलतरा मम प्रियतमेति ध्वन्यते॥

विपरीतरतान्तविश्रान्तां नितान्तश्रान्तां कान्तां नायको वक्ति—

वक्षःस्थलसुप्ते मम मुखमुपधातुं न मौलिमालभसे।
पीनोत्तुङ्गस्तनभरदूरीभूतं रतश्रान्तौ॥ ५६१॥

**वक्षःस्थलेति**। रतविरतौ रतिश्रमे वा वक्षःस्थलपरिचयकारिणि मम वद-

नमुपधातुमुपधानीकर्तुं नालभसे न नम्रीकरोषि, न धारयसीति वा। तत्र हेतुमाह—पीनोच्चकुचभरदूरीभूतम्। एवं च त्वन्मौलौ वदनोपधानभवनाभावे न मन्मुखस्यापराधः, किं तु पीनोच्चत्वत्कुचयोरेवेति भावः। यद्वा मम मुखमुपधानीकर्तुं मस्तकम्। ममेति भावः। नालभसे न स्पृशसि। स्प्रष्टुं न शक्नोषीत्यर्थः। न प्राप्नोषीति वा। तत्र हेतुः पीनोत्तुङ्गेत्यादि। अथवा मुखं स्वस्येति भावः। स्थापयितुं मम मौलिं न स्पृशसि। किं तु स्पृशेति भावः। यतस्त्वदीयपीनोच्चकुचान्तरितम्। एवं च कराभ्यां मम मौलिमुन्नमय्य स्ववदनं स्थापयेति भावः। एवं च चुम्बनौत्कण्ठ्यं स्वस्य च पीनोच्चकुचभारतया मौलेरुन्नमनासामर्थ्यं द्योत्यते॥

कश्चिद्दूतीं वक्ति—

वदनव्यापारान्तर्भावादनुरक्तमानयन्ती त्वम्।
दूति सतीनाशार्थं तस्य भुजंगस्य दंष्ट्रासि॥ ५६२॥

**वदनेति**। हे दूति, वदनव्यापारेण वचनरचनया योऽन्तर्भावः परहृदयप्रवेशस्तस्मात्, अनुरक्तमनुरागवन्तम्। पक्षे मुखसंबन्धेन यदन्तःप्रवेशनं तस्मात्, अनु पश्चाद्रक्तं रुधिरम्। सतीसमुदायमानयन्ती त्वं तस्य खिङ्गस्य सर्पस्य च दंष्ट्रासि। एवं च वचनरचनया तया तथा हृदयं प्रविश्य पातिव्रत्यभङ्गं विधाय तेन खिङ्गेन सह कामिनीसमूहं योजयसीति भावः। वदनव्यापारपदेन द्रव्यव्ययाभावो द्योत्यते। सार्थपदेन सामर्थ्यातिशयो व्यज्यते। दंष्ट्रापदेन त्वां विना सोऽकिंचित्कर इति ध्वन्यते॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता वकारव्रज्या।

---

शकारव्रज्या।

कस्यचिन्नायकस्येतरनायकसाधारण्यमसहमाना काचित्कांचिदन्योक्त्या वक्ति—

श्रीरपि भुजंगभोगे मोहनविज्ञेन शीलिता येन।
सोऽपि हरिः पुरुषो यदि पुरुषा इतरेऽपि किं कुर्मः॥ ५६३॥

**श्रीरपीति**। येन सुरतविज्ञेन श्रीरपि। अपिना यदर्थं जगदखिलं यत्नमाचरतीति ध्वन्यते। सर्पशरीरे शीलिता भुक्ता। भुजंगपदेन भयजनकत्वेऽपि तदभवनेनासक्त्यतिशयो द्योत्यते। यदि स हरिरपि पुरुषः, इतरेऽपि पुरुषास्तदा किं कुर्मः। एवं चैतादृशस्यान्यैः सामान्यैः सह साम्यकरणमनुचितमिति व्यज्यते।

यद्वान्योक्त्या कश्चित्कंचन निन्दति । श्रीरपि लक्ष्मीस्वरूपापि येन खिन्नेन संभोगविषये । मोहनविज्ञेनेति विपरीतलक्षणया सुरतानभिज्ञेन शीलिता कृता । इतरेऽपि यदि पुरुषाः सोऽपि हरिरिव हरिः पशुतुल्यः पुरुषस्तदा किं कुर्मः । एवं चैतादृशस्य पुरुषेषु गणना न युक्तेति भावः ॥

मानवतीं सामान्यवनितां सखी वक्ति—

शङ्के या स्थैर्यमयी श्लथयति बाहू मनोभवस्यापि ।
दर्पशिलामिव भवतीं कतरस्तरुणो विचालयति ॥ ५६४ ॥

**शङ्क इति** । संबुद्धिपदानुपादानं क्रोधमावेदयति । या स्थैर्यप्रचुरा बाहू अपि । अपिना चाटुवचनादिसमुच्चयः । श्लथयति । चालयितुमशक्यत्वादिति भावः । एवं च करकर्षणादिनापि नेतश्चलतीति क्रोधातिशयवत्तां द्योतयति । मनोभवस्य दर्पशिलामिव । मनोभवपदेनाकुण्ठितत्वं ध्वन्यते । भवतीं कतरस्तरुणो विचालयति । न कोऽपीत्यर्थः । इति शङ्के । एवं चैतादृशकोपकरणे कस्त्वामनुरञ्जयिष्यतीति ध्वन्यते । यद्वा मनोभवस्येति बाहू इत्यत्रान्वेति ॥

नायिकासखी नायकमन्योक्त्या वक्ति—

शार्दूलनखरभङ्गुर कठोरतरजातरूपरचनोऽपि ।
बालानामपि बाला सा यस्यास्त्वमपि हृदि वससि ॥ ५६५ ॥

**शार्दूलेति** । हे व्याघ्रनखकुटिल, अथ च शार्दूलनखवत्कुटिल । तथाविधाचरणवत्त्वादिति भावः । कठिनतरजातरूपस्य सुवर्णस्य रचना यस्मिन् । अथ च जाता रूपस्य रचना यस्य । सौन्दर्यशालिन्यपि । त्वमपि । अपेरितरभूषणसमुच्चयो निन्द्यत्वं चार्थः । यस्या हृदि वससि । भूषणरूपतयेति भावः । अथ च तस्यास्त्वदासक्तत्वादिति भावः । सा बालानामपि मध्ये बाला । अतिबालिका । अत्यन्तमुग्धेति भावः । सुवर्णयुतव्याघ्रनखं बालहृदि भूषणं भवतीति भावः । एवं चैतादृशे कौटिल्यादिशालिनि सौन्दर्यवत्त्वेऽप्यासक्तिसंपादने कथमिव मौर्ख्यं न भवतीति भावः । यद्वा जाता रूपस्य रचना यस्याः । एतादृश्यपि तारुण्यशालिन्यपि सात्यन्तबालिकेवेत्यर्थः । इतरत्पूर्ववत् ॥

नायिकासखी नायकं वक्ति—

श्रुत एव श्रुतिहारिणि रागोत्कर्षेण कण्ठमधिवसति ।
गीत इव त्वयि मधुरे करोति नार्थग्रहं सुतनुः ॥ ५६६ ॥

**श्रुत एवेति** । श्रवणसमय एव कर्णसुखजनके । पक्षे श्रुतिभिर्मनोहारिणीति

वा । प्रीत्युत्कर्षेण । पक्षे श्रीरागाद्युत्कर्षेण । कण्ठमधिवसति । त्वन्नाम्नैव सर्वत्र सख्यादिष्वपि सा व्यवहरतीति भावः । पक्षे व्यक्तीभवतीत्यर्थः । मधुरे सुन्दरे । पक्षे माधुर्यशालिनि । गीत इव । द्रव्यग्रहम् । पक्षेऽभिप्रायगृहम् । सुतनुः । एवं च स्पृहणीयत्वमावेद्यते । न करोति । एवं च नायिका न द्रव्यादिना त्वय्यनुरक्ता, किं तु त्वदीयसौन्दर्यादिगुणोत्कर्षेणेति भावः ॥

समीचीनसमताङ्गीकारे सम्यगेव फलं भवतीति कश्चित्कंचिद्वक्ति—

श्रीः श्रीफलेन राज्यं तृणराजेनाल्पसाम्यतो लब्धम् ।
कुचयोः सम्यक्साम्याद्गतो घटश्चक्रवर्तित्वम् ॥ ५६७ ॥

**श्रीरिति** । कुचयोरल्पसाम्याच्छ्रीफलेन बिल्वफलेन श्रीर्लब्धा । तृणराजेन तालेन राज्यं लब्धम् । सम्यक्साम्याद्घटश्चक्रवर्तित्वं चक्रसंबन्धित्वं सार्वभौमत्वं च गतः प्राप्तः । एवं च नीचानुकरणमनुचितमिति ध्वन्यते ॥

काचित्सखीं वक्ति—

श्रोणी भूमावङ्के प्रियो भयं मनसि पतिभुजे मौलिः ।
गूढश्वासो वदने सुरतमिदं चेत्तृणं त्रिदिवम् ॥ ५६८ ॥

**श्रोणीति** । भूतले नितम्बः । चलनज्ञानाभावार्थमिति भावः । चित्ते भीतिः । कदाचित्पतिना ज्ञेयमिति धियेति भावः । उत्सङ्गे प्रियः । जार इत्यर्थः । पतिभुजे मौलिः । पातीति व्युत्पत्त्या रक्षणमात्रकारित्वस्वभावेनान्धकारेऽपि करादिव्यापारेण ज्ञास्यतीति धियेति भावः । मुखे गुप्तः श्वासः । पतिश्रवणभियेति भावः । इदम् । एतादृशमित्यर्थः । चेद्यदि सुरतम् । लभ्यत इति भावः । सुशब्देनान्यादृशरतेऽसमीचीनत्वमावेद्यते । तदा त्रिदिवं स्वर्गस्तृणतुल्यः । अगणनीय इत्यर्थः । एवं चैतादृशसुरतवत्यो यास्ताः पुण्यातिशयशालितया धन्याः, तदभावादहमधन्येति ध्वन्यते । तेन चैतादृशरतार्थं यतस्वेति ॥

नायकः सखायं वक्ति—

श्लिष्यन्निव चुम्बन्निव पश्यन्निव चोल्लिखन्निवातृप्तः ।
दधदिव हृदयस्यान्तः स्मरामि तस्या मुहुर्जघनम् ॥ ५६९ ॥

**श्लिष्यन्निति** । आलिङ्गन्निवेत्यादयः स्मृतिप्रकाराः । अतृप्तत्वं स्मृतौ हेतुः ॥

कुपितां नायिकां नायकसखी वक्ति—

शिरसि चरणप्रहारं प्रदाय निःसार्यतां सते तदपि।
चक्राङ्कितो भुजंगः कालिय इव सुमुखि कालिन्द्याः ॥५७०॥

**शिरसीति**। हे सुमुखि। एवं च परुषभाषित्वाभावो व्यज्यते। मस्तके पादप्रहारं दत्त्वा त्वया दूरीक्रियताम्। कालिन्द्याः कालिय इव। तथापि चक्रेण त्वच्चरणसंबन्धिनेत्यर्थः। चिह्नितः। पक्षे सुदर्शनचक्रेणाङ्कितः। यमुनातो निःसार्य सागरावस्थितौ गरुडभयनिवारणार्थं कालियस्य चक्रचिह्नं कृतमिति पौराणिकाः। स भुजंगः खिङ्गः। पक्षे सर्पः। ते। तवैवेत्यर्थः। एवं च त्वया कोपे कृतेऽपि स न कुपितो भवतीति व्यज्यते। यद्वा सखी नायिकामुपदिशति। हे सुमुखि। एवं चोपदेशार्हत्वमावेद्यते। यद्यपि चक्रेण जनसंरक्षणेन चिह्नितः। 'जनावने समूहे च दम्भे भेदरथाङ्गयोः। शस्त्रभेदे च सेनायां चक्रं चापि विहंगके॥' इत्यभिधानात्। खिङ्गस्तथापि त्वया शिरसि पादप्रहारं दत्त्वा सते सदर्थं निःसार्यताम्। एवं च यद्यप्यनेन बहु दीयते तथाप्यपकीर्तिर्भूयसी भवतीत्यतस्त्वं सामीचीन्यार्थमेनं सनिकारं दूरीकुरुष्वेति भावः॥

नायिकासखी नायकं वक्ति—

शोच्यैव सा कृशाङ्गी भूतिमयी भवतु गुणमयी वापि।
स्नेहैकवश्य भवता त्यक्ता दीपेन वर्तिरिव ॥ ५७१ ॥

**शोच्यैवेति**। हे स्नेहेन प्रीत्या न तु गुणैर्मुख्यवश्य। एवं च बहुतरतदीयगुणेषु दृष्टिमदत्त्वा स्नेहमात्रमपेक्षस इत्यनुचितं तवेति ध्वन्यते। पक्षे तैलेन। दीपेन वर्तिरिव त्वया परित्यक्ता सा कृशाङ्गी। एवं च सौन्दर्यवत्त्वमावेद्यते। कृशाङ्गीति वर्तिविशेषणमपि। भूतिरैश्वर्यम्। पक्षे भस्म। तत्प्रचुरा। गुणाः सौन्दर्यादयः। पक्षे तन्तवः। तत्प्रचुरा वा भवतु। परं तु शोच्यैव। एवं च त्वया तस्यां परित्यक्तायामैश्वर्यं गुणादिकं च तस्याः सर्वमकिंचित्करमेवेति व्यज्यते। तेन च तदीयगुणादिमात्रमवेक्ष्य त्वया तदीयानुरञ्जनं विधेयमिति। यद्वैश्वर्यगुणाद्युत्कर्षवशान्नायकं प्रत्यप्रीतिकारिणीं नायिकामालोक्य नायकसखी नायकं वक्ति—हे स्नेहैकवश्य। एवं च तव नान्यापेक्षेति व्यज्यते। भवता परित्यक्ता सा ऐश्वर्यसौन्दर्ययुक्तापि शोच्यैव। एवं च तस्याः संपत्तिसौन्दर्यादिमत्तया मत्परित्यागेऽपि न किंचिद्दुःखं भविष्यतीति

मनसि न विधेयं त्वयेति ध्वन्यते। तेन च किंचित्कालं त्वया परित्यक्ता सा स्वयमेव त्वामनुनेष्यतीति ॥

कश्चित्सखायं वक्ति—

शुक इव दारुशलाकापिञ्जरमनुदिवसवर्धमानो मे।
कृन्तति दयिताहृदयं शोकः स्मरविशिखतीक्ष्णमुखः ॥५७२॥

**शुक इति**। प्रतिदिवसं वृद्धिमान्, कंदर्पबाणैर्निशितः। दुःखद इति यावत्। मुखमारम्भो यस्य सः। पक्षे मदनविशिखीभूतकिंशुकवत्तीक्ष्णवदनः। मे शोकः प्रियतमाहृदयं काष्ठशलाकापिञ्जरं शुक इव। दारुपदेन च्छेदनार्हत्वं द्योत्यते। छेदयति। एवं च न मया परदेशे स्थेयमिति ध्वन्यते ॥

काचित्कांचिद्वक्ति—

श्रुत्वाकस्मिकमरणं शुकसूनोः सकलकौतुकैकनिधेः।
ज्ञातो गृहिणीविनयव्यय आगत्यैव पथिकेन ॥ ५७३ ॥

**श्रुत्वेति**। पथिकेन निखिलकौतुकस्थानस्य शुकरूपो यः सूनुस्तस्य। एवं चातिस्नेहपात्रत्वं द्योत्यते। तेन च मारणानर्हत्वम्। तत्वेऽपि तत्करणेऽत्यन्तानुचितकार्यकर्तृत्वं नायिकायामभिव्यज्यते। आकस्मिकं यन्मरणम्। एवं च रोगाद्यनुत्पत्त्यानया मारित इति ध्वन्यते। श्रुत्वा। गृहिण्याः। एवं चान्यानिवारणीयत्वारक्षणीयत्वादि व्यज्यते। विनयनाशः। अकार्यकरणमित्यर्थः। आगमनोत्तरमेव। एवकारेण दास्याद्यकथितत्वं विनयव्यये व्यज्यते। ज्ञातः। एवं च किमकार्यं प्रमदानामिति ध्वन्यते। केचित्तु शुकसूनुरित्यस्य शुकबालक इत्यर्थमाहुः ॥

दूती नायिकां वक्ति—

शीलितभुजंगभोगा क्रोडेनाभ्युद्धृतापि कृष्णेन।
अचलैव कीर्त्यते भूः किमशक्यं नाम वसुमत्याः ॥ ५७४ ॥

**शीलितेति**। अङ्गीकृतसर्पशरीरा। आधारतयेति भावः। अथ च कृतखिन्नसंभोगा। कृष्णेन परमेश्वरेण क्रोडेन वराहरूपेण निष्कासितापि। अथ च दुष्टेन भुजाभ्यन्तरेणालिङ्गितापि। भूः पृथ्वी। अथ च भवन्त्यपराधा बहवो यस्याः सकाशात्सा। अचलैव। अथ च चाञ्चल्याभाववत्येव कीर्त्यते। अत्र हेतुमाह—नामेति निश्चयेन। वसुमत्याः। अथ च संपत्तिशालिन्याः। किमशक्यम्। न किमपीत्यर्थः।

एवं च धनवत्यास्तव न किमप्ययशः संभवीत्यतो मदुक्तनायकेन संगतिं कुरुष्वेति ध्वन्यते ॥

पूर्वनायिकासखी नायकं वक्ति—

श्यामा विलोचनहरी वालेयं मनसि हन्त सज्जन्ती ।
लुम्पति पूर्वकलत्रं धूमलता भित्तिचित्रमिव ॥ ५७५ ॥

**श्यामेति** । श्यामा षोडशवार्षिकी । पक्षे श्यामरूपा । विलोचनहरी लोचनयोः स्वस्मिन्नासक्तिसंपादिका । तारुण्यवत्त्वादिति भावः । एवं चैतस्यास्तारुण्यवशादेव सौन्दर्यं न स्वाभाविकमिति व्यज्यते । पक्षेऽश्रुसंपादकतया नेत्रहरत्वम् । मनसि लग्ना । अत्र तवेति पदानुपादानं सखीगतदुःखोद्रेकं व्यञ्जयति । इयं बाला । धूमपरम्परा । लतापदं मालिन्यातिशयजनकतामावेदयति । भित्तिस्थचित्रमिव पूर्वकलत्रं लुम्पति । हन्तेति खेदे । एवं चैतादृशानुचितमन्यत्रेति भावः । पूर्वकलत्रस्य चित्रोपमानतया स्वाभाविकसौन्दर्यवत्त्वं बहुभाषित्वाभावश्च द्योत्यते । बालायाश्च धूमलतोपमानतया मालिन्यसंपादकताप्रदर्शनेनासतीकार्यकरणत्वमावेद्यते । आर्थिकभित्त्युपमानतया मनसिजदुःखं ध्वन्यते । तेन वास्तवसमीचीनज्ञानविधुरत्वम् । लुम्पतीत्यत्र काका सखीप्रश्न इत्यपि भाति । अथवा काका न लुम्पतीत्यर्थः । पूर्वकलत्रस्नेहस्यातिदृढत्वादिति भावः ॥

प्रस्थितस्त्वं किमिति स्थितोऽसीति पृष्टः कश्चित्सखायं वक्ति—

शतशो गतिरावृत्तिः शतशः कण्ठावलम्बनं शतशः ।
शतशो यामीति वचः स्मरामि तस्याः प्रवासदिने ॥ ५७६ ॥

**शतश इति** । अनेकवारं गमनमनेकवारं परावृत्तिश्च । सर्वथा गमने नायिका मद्विरहदहनदग्धा सती प्राणानेव त्यक्ष्यतीति धियेति भावः । अत एव वारंवारं गाढालिङ्गनम् । अचिरेणैवागमिष्यामि दुःखं मा कुरुष्वेत्यनुनयार्थमिति भावः । तथानेकवारं गच्छामीति वचनम् । त्वदाज्ञा चेद्गच्छामि, नो चेन्न गच्छामीत्येवंविधम् । एवं च नायके नायिकाज्ञावशवर्तित्व तेन चात्यन्तासक्तिमत्त्वं तेन च प्रणयभङ्गभीरुत्वमावेद्यते । प्रस्थानकाले इदं सर्वं तस्याः । तां प्रति स्वकृतमित्यर्थः । स्मरामि । एवं च तत्कालीनावस्थास्मरणसंजातवैकल्यविवशहृदयोऽहं गन्तुं न शक्नोमीति भावः । यद्वा प्रवासदिवसे तस्या नायिकाया अनेकगमनादिकं स्मरामि ।

एवं च तदीयतत्कालीनतादृशावस्थास्मरणेन न मयात्र स्थातुं शक्यमिति नायकः सखायं वक्ति ॥

नायिकायास्तावदनुनयेऽपि समधिकतरमानभवनमवलोक्याभिमानितयोदासीनं नायकमवलोक्य प्रशिथिलमानां कया रीत्यानुनेतव्योऽयमिति विचारयन्तीं नायिकां सखी वक्ति—

श्रुतपरपुष्टरवाभिः पृष्टो गोपीभिरभिमतं कृष्णः ।
शंसति वंशस्तनितैः स्तनविनिहितलोचनोऽनुमतम् ॥ ५७७॥

**श्रुतेति** । श्रुतकोकिलरुताभिर्गोपीभिरीप्सितं पृष्टः कृष्णो वंशीरवैः कुचविनिहितनयनः स्वाभिमतम् । आलिङ्गनरूपमिति भावः । कथयति । गोपीपदमज्ञत्वं ध्वनयति कृष्णपदं कर्षति चित्तमिति व्युत्पत्त्या स्वचित्तस्य पराधीनताभावकर्तृत्वमावेदयति । एवं च चातुर्याभाववत्यो गोपाङ्गना अप्यनासक्तं परमेश्वरमेवंरीत्या स्वयमेव स्ववशतां नयन्तीति भावः । एवं चैतादृशवसन्तसमये चतुरया त्वया विषयरसलम्पटो नायकः कयाचन रीत्या कथं न स्वाधीनतां नेतुं शक्य इति व्यज्यते । कोकिलायाः प्रथमं रवश्रवणे मित्रस्य यदभीष्टं तत्पृष्ट्वा प्रदेयमेवेति लौकिकम् । यद्वा वसन्तसमये परदेशगमनमनुचितमिति कश्चित्कंचिद्वक्ति—परपुष्टा इव परपुष्टा दूतीसदृशाः कोकिला इत्यर्थः । तच्छब्दश्रवणाद्गोपीभिरविदग्धाभिरभिमतम् । स्वस्येति भावः । कृष्णः । एवं च मलिनत्वं ध्वन्यते । पृष्टः स च वंशीरवैः । एवं च गोपनमभिव्यज्यते । तेन च पुरुषे धैर्यमङ्गनास्वधैर्यमिति । कुचदत्तनेत्रोऽनुमतं पृष्टेऽर्थे संमतं वक्ति । एवं च वसन्ते मौढ्यशालिन्योऽप्यङ्गनाः प्रमत्ततया समीचीनपुरुषविवेकमपास्यान्यथाचरणप्रवणा भवन्ति, किं पुनः सकलविज्ञा इति भावः ॥

नायकप्रेमातिशयशालिन्यहमित्यभिमानशालिनीं नायिकामन्योक्त्या परनायिकासखी वक्ति—

शंकरशिरसि निवेशितपदेति मा गर्वमुद्वहेन्दुकले ।
फलमेतस्य भविष्यति तव चण्डीचरणरेणुमृजा ॥ ५७८ ॥

**शंकरेति** । हे इन्दुकले, शंभुशिरसि स्थापितचरणे ते हेतोरभिमानं मा उद्वह । किमितीत्यत आह—तवैतस्य । गर्वस्येत्यर्थः । चण्डीचरणधूलिभिर्मार्जनरूपं फलं भविष्यति । एवं च चण्डीं मानवतीमालोक्य शंकरेण चरणप्रणामे क्रिय-

माणे चरणरेणुमार्जनं भवतीति भावः । एवं च कुपिता मत्सखी त्वां ताडयिष्यतीत्यत ईदृशगर्वं मा विधेहीति ध्वन्यते ॥

कथं मयानया सह सबाधकेऽस्मिन्नेव स्थले स्थेयमिति चिन्ताव्याकुलं नायकं तत्रैव स्थापयितुं नायिकादूती कयापि भङ्ग्या वक्ति—

शाखिशिखरे समीरणदोलायितनीडनिर्वृतं वसति ।
कर्मैकशरणमगणितभयमशिथिलकेलि खगमिथुनम् ॥ ५७९ ॥

**शाखीति** । वृक्षशिरसि । शाखिपदं घनतरच्छायावत्त्व ध्वनयति । तच्चानेकजनाकीर्णत्वम् । शिखरपदं पतनार्हत्वं गमयति । समीरणचलकुलायसुखितम् । समीरणपदमनिवारणीयतां द्योतयति । दोलायितपदं पतनभीतिमावेदयति । कर्मैकशरणम् । एवं च दृष्टोपायविचारविधुरत्वं ध्वन्यते । अगणितभयम् । एवं च भयवत्त्वेऽपि तदगणनेनातिसाहसवत्त्वं द्योत्यते । अशिथिलकेलि । एवं च सर्वथा चिन्ताशून्यत्वं व्यज्यते । खगमिथुनम् । खे गच्छतीति व्युत्पत्त्यान्यत्र गमनसामर्थ्येऽप्यगमनेन निजवसतावतिशयितप्रेमवत्त्वं ध्वन्यते । तेन चापरित्याज्यत्वम् । एवं चान्यत्र गन्तु समर्थः खगोऽपि प्राक्तनकर्मभोगस्यापरिहार्यत्वमाकलय्य स्ववसतिं बाधकवत्त्वेऽप्यपरित्यजन्क्रीडापरवशतयैव कालमतिवाहयति कथ पुनर्भवान्विवेकवान्महावीरोऽत्रत्यभीत्या स्थलं परित्यक्तुं विचारयतीत्यनुचितं तवेत्यतः सुखेनानया सहात्र सुरतसुखमनुभवंस्तिष्ठेति ध्वन्यते । नायिका नायकचित्तं व्याक्षिपतीति ऋजवः ॥

प्रतिबन्धवशात्संकेतानागमनेन कुपितं स्वकुटुम्बकान्तिकवर्तिनं नायकमन्योक्त्या स्वापराधक्षमापनपुरःसरं संकेतं वक्ति—

शुक सुरतसमरनारद हृदयरहस्यैकसार सर्वज्ञ ।
गुरुजनसमक्षमूक प्रसीद जम्बूफलं दलय ॥ ५८० ॥

**शुकेति** । हे शुक । एवं च वचनरचनानिपुणत्वं ध्वन्यते । सुरतरूपसङ्ग्रामे नारद तद्वर्धक । सङ्ग्रामपदेन निर्दयत्वं द्योत्यते । एवं च कामतन्त्राभिज्ञत्वमावेद्यते । यद्वात्यन्तरता भल्पित्वमावेद्यते । हृदये । ममेति भावः । यानि गोप्यवस्तूनि तेषु सार मुख्यभूत । एव च त्वदेकतानतापन्नाहमिति व्यज्यते । इदं त्वयापि विज्ञायत एवेत्याह—सर्वज्ञ । एवं च मदीयप्रेमातिशयाज्ञाने सर्वज्ञत्वं व्याहन्येतेति भावः । यद्वा 'सुरतसमरनारदहृदय' इत्येकं पदम् । एवं च सर्वदा सुरतप्रकार-

चिन्तनकारित्वमावेद्यते । अथवा नारदपदस्य शरीरावच्छिन्नात्मनि शक्त्या कदाचिच्छरीरस्य तूष्णींभावभवनार्हतया हृदयस्य तु तदभाववत्तयातिशयितसुरतसामर्थ्यवत्त्वमावेद्यते । रहस्यरूपः सन् मुख्यसाररूप । एवं च त्वदतिरिक्तं ममान्यन्न रहस्यमिति भावः । यद्वा सर्वज्ञान्तमेकं पदम् । तथा च हृद्गतरहस्यजातप्रधानभूतस्यातिगोप्यत्वेऽपि तव तज्ज्ञानवत्त्वे संकेतस्थलं प्रति मदनागमनहेतुभूतश्वश्र्वादिनिर्भर्त्सननिवारणरूपस्य ज्ञानवत्त्वं सुकरमिति ध्वन्यते । गुरुजनसमक्षे मूक । एवं च सर्वदा संनिहितत्वेऽपि श्लेषकाक्वादिनापि श्वशुरादिसंनिधौ वार्ताद्यकरणेन धैर्यवत्त्वमावेद्यते । यद्वा गुरुर्जडः । रहस्यकारणानभिज्ञ इति यावत् । यो जनः । अर्थात्स्वीयो मदीयो वा । तत्समक्षमूक । एवं च स्वीयत्वेऽपि रहस्यकथनानर्हताविचारकारितयातिशयितविवेकित्वमावेद्यते । प्रसीद । जम्बूफलं दलय । एवं च प्राक्तनमदीयसंकेतभङ्गापराधमवगणय्येदानीं जम्बूवृक्षाधस्त्वया स्थेयम्, मयाप्यागम्यत एव झटिति तत्रेति ध्वन्यते। एवं च फलमित्येकवचनं सहृदयम् । यद्वा संकेतगमनजनितविलम्बवशात्समये भक्ष्याप्राप्त्या क्षुधितं शुकमवलोक्य ममाविनयमयं गुरुजनाय निवेदयिष्यतीति भीता नायिका तं प्रसादयितुं वक्ति—शुकेति । कीरपदं विहाय शुकपदोपादानेन व्यासात्मजशुकभेदबोधनेन क्रोधाभावौचित्यमावेद्यते । सुरतसङ्ग्रामनारद । एवं च यथा तव सुरतसङ्ग्राम एव प्रियो न तथा भोजनमिति ज्ञानवशान्मया गतमिति भावः । एवं च त्वदीयवचनरूपोद्दीपनवशादेव मया संकेते गतम्, अतो नायं ममापराध इति व्यज्यते । यद्वा त्वदीयप्रियसंपादनाय गतायां मयि क्रोधकरणमनुचितं तवेति व्यज्यते । एवं च नारदर्ष्यभेदप्रतिपादनेनापि कोपकरणानौचित्यं ध्वन्यते । हृदयरहस्यैकसारसर्वज्ञ । एवं च मदीयमनोजपीडाज्ञानवत्त्वेऽपि तत्प्रतीकाराय गतायां मयि कोपकरणं तव कथं नामौचितीमावहतीति भावः । सर्वज्ञपदेन बुद्धाभेदप्रतिपादनेन हिंसामात्रस्याधर्मसाधनत्वसमर्थनप्रवणस्य तव कोपकरणेन मन्मरणमेव भविष्यतीत्यतस्तदकरणमेव तवोचितमित्यावेद्यते । यद्वा सर्वज्ञपदेन परमेश्वराभेदप्रतिपादनेन मम त्वदतिरिक्तं नान्यदुपास्यमस्तीति ध्वन्यते । तेन च मत्कृतापराधक्षमार्हत्वम् । यद्वान्तर्यामित्वेन मदीयमन्मथवेदनाज्ञानवत्त्वं तवेति द्योत्यते । गुरुजनसमक्षमूकेत्यनेन गुरुजनसमक्षं वचनसामान्याभाववत्तया मत्कृतापराधकथनस्यासंभाव्यतया कोपफलाकरणेन निरर्थकतत्करणमनुचितमिति ध्वन्यते । अतः प्रसीद जम्बूफलं दलय । एवं च न केवलं मया स्वार्थ एव कृतः, परं त्वदर्थोऽपि संपादित इति व्यज्यते ॥

बहुतरपरिग्रहाभावेऽप्यतितृष्णाशालिनं कंचन कश्चिदन्योक्त्या वक्ति—

शिरसा वहसि कपर्दं रुद्र रुदित्वापि रजतमर्जयसि ।
अस्याप्युदरस्यार्धं भजतस्तव वेत्ति कस्तत्त्वम् ॥ ५८१ ॥

**शिरसेति** । हे रुद्र, शिरसा कपर्दं जटाजूटमथ च वराटिकां वहसि । रोदनं कृत्वापि रजतमर्जयसि । 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इत्याद्यर्थवादाद्रुद्ररोदनाद्रजतोत्पत्तिरिति । यद्यपि 'अग्नौ वामं वसु च संदधत' इत्यग्निरोदनाद्रजतोत्पत्तिस्तथाप्यष्टमूर्तितयाग्निरूपो रुद्र इत्यर्थः । अस्य । एवं चापलापानर्हत्वं ध्वन्यते । उदरस्यार्धं समांशकम् । 'अर्धं समेंऽशके' इत्यमरः । एवं च विभागकाले किंचिदधिकाग्रहणेनातिकृपणत्वं ध्वन्यते । भजतोऽपि तत्त्वं को वेत्ति । न कोऽपीत्यर्थः । एवं च परिग्रहभावेऽतिदैन्यादिना द्रव्यार्जनकरणमनुचितमिति व्यज्यते ॥

कश्चित्कांचित्सामान्यवनितामन्योक्त्या वक्ति—

श्रोतव्यैव सुधेव श्वेतांशुकलेव दूरदृश्यैव ।
दुष्टभुजंगपरीते त्वं केतकि न खलु नः स्पृश्या ॥ ५८२ ॥

**श्रोतव्यैवेति** । हे केतकि, दुष्टसर्पव्याप्ते, नोऽस्माकं त्वं निश्चयेन स्पृश्या न । किं तु सुधेव श्रोतव्यैव । न तु ग्रहीतुं शक्येत्यर्थः । तत्रापि भुजंगसंरक्षणस्य सत्त्वादिति भावः । सुधाश्वेतांशुकलयोः केतक्युपमानत्वे गौरत्वं समानो धर्मः । एवं च सर्वथा स्पृहणीयत्वेऽपि विटनैकट्येन दुर्घटा त्वत्संगतिरस्माकमिति व्यज्यते । यद्वा सुधेव श्रोतव्यैवेति काक्वा नेत्यर्थः । किं तु दृश्यादृश्यत्वेऽपि चन्द्ररेखेव दूरदृश्यैवेति काक्वा नेत्यर्थः । किं तु निकटदृश्या । एवं चेन्न कुतः संगतिं संपादयसीत्यत्राह—दुष्टसर्पव्याप्ते केतकि, त्वं नो न स्पृश्या । एवं च जीवनदाननिदानतापापनोदनस्वरूपायास्तव नैकट्येऽपि खिन्नभिया नास्माकमागमनं भवतीति व्यज्यते ॥

नायको नायिकादूतीं वक्ति—

श्रवणोपनीतगुणया समर्पयन्त्या प्रणम्य कुसुमानि ।
मदनधनुर्लतयेव त्वया वशं दूति नीतोऽस्मि ॥ ५८३ ॥

**श्रवणेति** । गुणः सौन्दर्यादिः । अर्थान्नायिकायाः । ज्या च । नमस्कृत्य । नमनं प्राप्य च । पुष्पाणि । अर्थान्नायिकाप्रेषितानीति भावः । मदनबाणानां पुष्पमयत्वाच्च । समर्पयन्त्या मदनधनुर्लतयेव हे दूति, त्वया स्वाधीनतां प्रापितोऽस्मि । एवं च मयावश्यमागम्यत एवेति व्यज्यते ॥

कश्चित्कंचिदन्योक्त्या वक्ति—

शाखोटकशाखोटजवैखानसकरटपूज्य रट सुचिरम् ।
नादरपदमिह गणकाः प्रमाणपुरुषो भवानेकः ॥ ५८४ ॥

**शाखोटकेति** । शाखोटकस्य वृक्षविशेषस्य शाखायामुटजं पर्णशाला तत्संबन्धिनो ये मुनयः काकास्तेषु पूज्य । काकश्रेष्ठेति यावत् । यद्वा संबुद्धित्रयम् । चिरकालं रट । यत इह दैवज्ञा आदरस्थानं न । भवानेव प्रमाणपुरुषः । शुभाशुभनिर्णयार्थमिति भावः । एवं च त्वादृशमूर्खाधिष्ठितैतादृशस्थले नास्मादृशां विदुषां वचसामवकाश इति ध्वन्यते ॥

कस्यचिद्दूती कांचिद्वक्ति—

शशिरेखोपमकान्तेस्तवान्यपाणिग्रहं प्रयातायाः ।
मदनासिपुत्रिकाया इवाङ्गशोभां कदर्थयति ॥ ५८५ ॥

**शशीति** । चन्द्रकलोपमेयशोभायाः । यद्वा चन्द्राङ्गश्रीसदृशशोभायाः । एवं च निष्कलङ्कतया तदुपमानत्वं युक्तमित्यावेद्यते । 'अङ्गश्रीः कथ्यते रेखा' इत्यभिधानात् । अन्यस्य पाणिग्रहं प्राप्तायास्तव मदनच्छुरिकाया इवावयवशोभां कदर्थयति कदर्थयिष्यति । अन्यो नायक इति शेषः । एवं च मदुक्तनायकस्यैव त्वया संगतिः कर्तव्या नान्यस्येति व्यज्यते । तेन च तस्मिन्सौन्दर्यातिशयः । वक्रापि च्छुरिका भवतीति चन्द्ररेखोपमानता । द्वितीयव्याख्यायां न कश्चिद्दोषः ॥

समीचीनवृत्तैरेव स्वामिकार्यार्थमाग्रहः क्रियते नान्यैरिति कश्चित्कंचिद्वक्ति—

शैथिल्येन भृता अपि भर्तुः कार्यं त्यजन्ति न सुवृत्ताः ।
बलिनाकृष्टे बाहौ वलयाः कूजन्ति धावन्ति ॥ ५८६ ॥

**शैथिल्येनेति** । मान्द्यव्याप्ता अपि । अथ च श्लथत्ववन्तोऽपि । समीचीनवृत्तशालिनः । अथ च वर्तुलाः । पोषकस्य । अथ च धारकस्य । कृत्यं न त्यजन्ति । अर्थान्तरन्यासमाह—बलवता । एवं च निवारणानर्हत्वं ध्वन्यते । हस्त आकृष्टे कङ्कणानि धावन्ति शब्दं कुर्वन्ति च । एवं च सुवृत्तत्वादचेतना वलया अप्येवमाचरन्ति तत्र का वार्ता सचेतसामिति भावः ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता शकारव्रज्या ।

---

पकारव्रज्या ।

नायको नायिकां वक्ति—

षट्चरणकीटजुष्टं परागघुणपूर्णमायुधं त्यक्त्वा ।
त्वां मुष्टिमेयमध्यामधुना शक्तिं स्मरो वहति ॥ ५८७ ॥

**षट्चरणेति** । भ्रमररूपकीटसेवितम् । मदनधनुर्मौर्व्या मधुकररूपत्वादिति भावः । परागः पुष्परजस्तद्रूपकाष्ठचूर्णपूर्णम् । मदनधनुषः पुष्परूपत्वादिति भावः । आयुधम् । शरासनमित्यर्थः । त्यक्त्वा । स्मरोऽधुना मुष्टिना मेयो मध्यो यस्यास्ताम् । कृशत्वादिति भावः । त्वां शक्तिं त्वद्रूपां शक्तिं वहति । एवं च त्वामासाद्याधुना मदनवीरोऽतिप्रबलः संवृत्त इति ध्वन्यते । 'वहतु' इति पाठे जातयौवनां त्वामासाद्य कंदर्प इदानीं जगज्जयं करिष्यतीति ध्वन्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता षकारव्रज्या ।

---

सकारव्रज्या ।

सपत्नीदुःखदुःखितां नायिकां नायकसखी वक्ति—

सा दिवसयोग्यकृत्यव्यपदेशा केवलं गृहिणी ।
द्वितिथेर्दिवसस्य परा तिथिरिव सेव्या निशि त्वमसि ॥ ५८८ ॥

**सेति** । सा नायिका दिनयोग्यकार्यकरणात्तस्य केवलं गृहिणी । तिथिद्वयवतो दिवसस्य संबन्धिनीं द्वितीयतिथिरिव रात्रौ त्वं सेव्यासि । गृहकार्यार्थमेव केवलं सा, त्वं तु सुरतसुखार्थमिति भावः । एवं च तस्यामीर्ष्या न विधेयेति ध्वन्यते ॥

सखी नायिकां वक्ति—

स्तननूतननखलेखालम्बी तव घर्मबिन्दुसंदोहः ।
आभाति पट्टसूत्रे प्रविशन्निव मौक्तिकप्रसरः ॥ ५८९ ॥

**स्तनेति** । त्वदीयस्तनसंबन्धितात्कालिकनखरेखालम्बी स्वेदबिन्दुसमूहः पट्टसूत्रे प्रविशन्मौक्तिकप्रकृष्टसर इव शोभते । नूतनपदेन नखरेखायामारक्तत्वं ध्वन्यते । एवं चेदानींतनसुरतेन तवातिशयशालिशोभा संवृत्तेति ध्वन्यते । एवं चैतादृशप्रत्यक्षरतचिह्नदर्शनेऽपि न मया किंचित्कृतमिति वदसीत्यतस्त्वत्तुल्या नान्या प्रतारिकेति ध्वन्यते ॥

सखी सामान्यवनितामुपदिशति—

सौभाग्यगर्वमेका करोतु यूथस्य भूषणं करिणी ।

अत्यायामवतोर्या मदान्धयोर्मध्यमधिवसति ॥ ५९० ॥

**सौभाग्येति** । यूथस्य करिसमूहस्य भूषणं करिणी एका सौभाग्यस्य गर्वं करोतु । अत्युच्चयोर्मदशालिनोर्या मध्यमधिवसति । एवं च सर्वनायकसमाधानं त्वया विधेयमिति ध्वन्यते ॥

पतिमवमत्य तत्सखीवचनादिकमप्युपेक्ष्य पश्चात्परितप्ता सती स्वयमेव प्रियसविधमागता सखीपरिवृतं तमालोक्य तासु स्वलघुतागोपनाय नायिका नायकं वक्ति—

स्वचरणपीडानुमितत्वन्मौलिरुजाविनीतमात्सर्या ।

अपराद्धा सुभग त्वां स्वयमहमनुनेतुमायाता ॥ ५९१ ॥

**स्वचरणेति** । स्वचरणपीडयानुमिता या त्वन्मस्तकपीडा तया विशेषेणापहृतमात्सर्या । स्वयं कृतापराधा । पतिविहितप्रणतावपि कोपकरणादिति भावः । सुभग । विना प्रयत्नं मदागमनादिति भावः । त्वामनुनेतुमहमायाता । एवं चानेन प्रियतमेन बहुतरप्रणामादिना मदनुनयः कृतोऽस्तीति व्यज्यते । यद्वा स्वयमेवोत्कण्ठिता नायिका नायकसविध आगता, तत्र च तत्संख्यादिकमवलोक्यानाकारितागमनसंभाव्यमानलाघवपरिहाराय मृषैव वक्ति—स्वचरणेति ॥

अनुरक्तजनक्लेशकर्तुः सेनादिकं न सम्यक्, किं तु प्रबलविपक्षविद्रावकस्येति कश्चिद्वक्ति—

स्नेहमयान्पीडयतः किं चक्रेणापि तैलकारस्य ।

चालयति पार्थिवानपि यः स कुलालः परं चक्री ॥ ५९२ ॥

**स्नेहमयानिति** । तैलप्रचुरान् । अथ च प्रीतिप्रचुरान् । पीडयतस्तैलकारस्य चक्रेणापि यन्त्रविशेषेणापि । अथ च सेनयापि 'शस्त्रभेदे च सेनायां चक्रम्' इत्यभिधानात् । अपिना कोषादिसंग्रहः । यः पार्थिवान्पृथिवीविकारान्घटादीन् । अथ च महीपतीन् । चालयति भ्रामयति । अथ च स्वस्थानभ्रष्टान्करोति । स कुलालोऽपि । अपिना निन्द्यत्वमावेद्यते । परमुत्कृष्टं चक्रवान्यन्त्रविशेषवान् । अथ च सेनावान् । यद्वा यथास्थित एवापिः । एवं च सामर्थ्यविशेषवत्त्वमावेद्यते । एवं च सेनादिसत्त्वमात्रेण न प्रतिष्ठा, किं तु स्वानुरक्तसंरक्षणपरविद्रावणरूपकार्यकारितयेति व्यज्यते ॥

सखी नायिकां वक्ति—

सरले न वेद भवती बहुभङ्गा बहुरसा बहुविवर्ता ।
गतिरसतीनेत्राणां प्रेम्णां स्रोतस्वतीनां च ॥ ५९३ ॥

**सरल इति** । हे सरले, बहुभङ्गा भङ्गो वक्रता विच्छेदस्तरङ्गश्च । बहुरसा बहुविषयकप्रेमवती । यद्वा शृङ्गारादिमती । बहुहर्षवती बहुजलवती च । बहुविवर्ता बहुकापट्यवती अनेकप्रकारवती बहुजलभ्रमणवती च । असतीनयनानां प्रेम्णां नदीनां च गतिः कटाक्षादिः स्थितिर्गमनं चेति भवती न वेद । एवं च प्रेम्णि भङ्गादिकं नियतमस्तीत्यत एतत्संरक्षणं दुष्करम्, अतोऽत्यन्ताभिमानं परित्यज्य नायकसमाधानं कुर्विति ध्वन्यते ॥

नायिका सखीं वक्ति—

सखि मध्याह्नद्विगुणद्युमणिकरश्रेणिपीडिता छाया ।
मज्जितुमिवालवाले परितस्तरुमूलमाश्रयति ॥ ५९४ ॥

**सखीति** । हे सखि । एवं च रहस्यकथनार्हत्वं व्यज्यते । मध्याह्ने द्विगुणीभूता या सूर्यकिरणश्रेणिस्तया पीडिता छाया आलवाले मज्जितुमिव समन्ताद्वृक्षमूलमाश्रयति । एवं चैतादृशनिदाघकाले न कोऽपि स्वगेहाद्गच्छतीत्युपवने नायकं नय, अहमप्यधुना तत्रागतप्रायेति ध्वन्यते । यद्वा सखी नायिकां वक्ति । एवं च यत्र प्रखररविकरनिकरखिन्ना प्राणानपि त्यक्तुकामा जडापि छायां स्वाश्रयं न परित्यजति, तत्र किमु वाच्यं त्वया पतिपदारविन्दं विहाय क्षणमपि खेदवत्त्वेऽपि दूरे स्थेयमिति द्योत्यते ॥

'मत्प्रियो मय्यतिशयितानुरागवान्' इति वादिनीं कांचित्काचिद्वक्ति—

सखि शृणु मम प्रियोऽयं गेहं येनैव वर्त्मनायातः ।
तन्नगरग्रामनदीः पृच्छति सममागतानन्यान् ॥ ५९५ ॥

**सखीति** । हे सखि, शृणु । शृण्वित्यनेन त्वदुक्तिरकिंचित्करेति ध्वन्यते । अयं मम प्रियः । परोक्षेऽप्यपरोक्षवन्निर्देशो नायके निरन्तरसंगतिशालित्वमावेदयति । गृहं येनैव मार्गेणागतस्तत्संबन्धिनगरग्रामनदीः स्वसहागतानन्यान्पृच्छति । एवकारेणादृष्टमार्गीयनगरादिप्रश्नकरणमुचितमिति ध्वन्यते । एवं च मन्नायको

मय्येतादृशानुरागवान्यच्चिरकालीनमार्गेणागतोऽप्यवश्यविज्ञेयपत्तनादिज्ञानाभाववानिति मन्नायकतुल्यो न त्वन्नायको न वा मत्तुल्या त्वमिति ध्वन्यते । यद्वा प्रिये मानादिकं त्वया विधेयमिति वादिनीं सखीं नायिका वक्ति—सखीति। शृण्वित्यस्यानुपादानेऽपि श्रवणक्रियाप्रतीतेरनुपयुक्तार्थतया शृण्विति पदमवधारणं लक्षयति । एवं च मदुक्तौ नाप्रामाण्यमाशङ्क्यमिति ध्वन्यते । एवं च मन्निमग्नचित्ततया प्रियतमः स्वयमुल्लङ्घितवर्त्मस्थितानेककौतुकनिधाननगरादिज्ञानाभाववान्, अत एतादृशे मानादिविधानेन दुःखजननमनुचितमिति द्योत्यते ॥

वियोगिन्याः सायंतनसमयोऽत्यन्तदुःखद इति नायिका सखीं वक्ति—

सायं रविरनलमसौ मदनशरं स च वियोगिनीचेतः ।
इदमपि तमःसमूहं सोऽपि नभो निर्भरं विशति ॥ ५९६ ॥

**सायमिति** । अत्र सखीति पदानुपादानं तावद्वर्णोच्चारणेऽपि कालातिपातो भवतीति भाविसायंतनसमयस्यातिदुःखदत्वमित्यावेदयति । सायंतनसमये सूर्योऽनलं विशति । असावनलो मन्मथशरं विशति । स च मन्मथशरो विरहिणीचेतो विशति । इदमपि विरहिणीचेतोऽपि तमःसमुदायम् । तमःशब्देनाज्ञानं ध्वान्तं च । सोऽपि तमःसमूहोऽप्यतिशयेन नभो विशति । अनलेत्यादि पञ्चपदद्वितीयया कर्मत्वप्रतिपादनादीप्सिततमत्वेन स्वेच्छया तत्र तत्र तस्य तस्य कृतप्रवेशस्य निवारणानर्हत्वमावेद्यते । एवं च यथा यथा रात्रिर्गमिष्यति तथा तथा मच्चेतसः शून्यरूपता भवित्रीति धरित्रीतले त्वदृते नान्यां मम प्राणप्रदां मन्य इत्यतस्त्वरस्वाधुनैव प्रियतमानयनार्थमिति ध्वन्यते ॥

काचित्कंचित्संकेतं वक्ति—

स्मरसमरसमयपूरितकम्बुनिभो द्विगुणपीनगलनालः ।
शीर्णप्रासादोपरि जिगीषुरिव कलरवः क्वणति ॥ ५९७ ॥

**स्मरेति** । मदनयुद्धसमये । 'मदनवीरसमर' इत्यपि पाठः । पूरितो यः शङ्खस्तत्तुल्यद्विगुणितपुष्टकण्ठनालः कपोतो जयेच्छावानिव जर्जरप्रासादोपरि कूजति । शीर्णपदेनान्यानारोहणीयत्वं ध्वन्यते । प्रासादपदेन श्रमापनोदकसमीरणवत्तया निर्भररतसंपादनयोग्यत्वं व्यज्यते । उपरिपदमन्यानवलोकनीयत्वमावेदयति । कलरवपदेनोद्दीपकत्वं द्योत्यते ॥

फूत्कृत्य रुदतीं सुदतीं सखी शिक्षयति—

**स्फुरदधरमविरताश्रु ध्वनिरोधोत्कम्पकुचमिदं रुदितम्।**
**जानूपनिहितहस्तन्यस्तमुखं दक्षिणप्रकृतेः ॥ ५९८ ॥**

**स्फुरदधरमिति**। स्फुरन्नधरो यस्मिन्। निबिडबाष्पम्। ध्वनिनिरोधेनोत्कटकम्पवन्तौ कुचौ यस्मिन्। जानुस्थापित[हस्तन्यस्त]वदनम्। इदमेतादृशाकारशालि रुदितं सरलप्रकृतेः। एवं चैतदन्यथाचरणं तवानुचितमिति ध्वन्यते। 'स्फुरदधरश्वासम्' इत्यपि पाठः। यद्वैतादृशरोदने कस्यापि ज्ञानं न भविष्यतीति फूत्कृत्य रोदनं तवोचितमिति सखी नायिकां वक्ति—

काचित्सामान्यवनिता कांचित्सामान्यवनितां भङ्ग्यन्तरेण वक्ति—

**स्वयमुपनीतैरशनैः पुष्णन्ती नीडनिर्वृतं दयितम्।**
**सहजप्रेमरसज्ञा सुभगागर्वं बकी वहतु ॥ ५९९ ॥**

**स्वयमिति**। स्वयमाहृतैर्भक्ष्यैः कुलायसुखितं दयितं पुष्णन्ती, अकृत्रिमप्रेमरसाभिज्ञा बलाका सौभाग्यशालिनी गर्वं वहतु। सुभगेति भिन्नं पदं वा। एवं च यया स्वद्रव्येण नायकपोषणं क्रियते सैव रसाभिज्ञा सौभाग्यवतीनां गर्वमुद्वहतु नापरस्यास्तद्वहनमुचितमिति ध्वन्यते ॥

दुष्टप्रभुणा कोपाधिकारे दत्तेऽपि प्रभुरयं मय्यतीव विश्वस्त इति धिया तत्सेवनमुचितं नेति कश्चित्कंचिद्वक्ति—

**स्वरसेन बध्नतां करमादाने कण्टकोत्करैस्तुदताम्।**
**पिशुनानां पनसानां कोषाभोगोऽप्यविश्वास्यः ॥ ६०० ॥**

**स्वरसेनेति**। स्वेच्छया करं दण्डं बध्नतां कुर्वताम्। आदाने अर्थात्करादाने कण्टकसमूहैस्तुदताम्। स्वरसेनेत्यनेन कियदनेन भुक्तं कियन्नेति शोधशून्यत्वमावेद्यते। कण्टकोत्करैस्तुदतामित्यनेन स्वेच्छया कृतमपि दण्डं शनैः शनैर्न गृह्णन्तीति ध्वन्यते। अथ च स्वस्य रसेन द्रवेण करं हस्तं बध्नताम्। पनसरसस्य चिक्कणत्वादिति भावः। कण्टकोत्करैस्तुदताम्। पनसस्य कण्टकबाहुल्यादिति भावः। पिशुनानां पनसानां च कोषस्य भाण्डागारस्याभोगः संपर्कः। तद्विषयकाधिकारवत्त्वादिति भावः। अथ च कोषपरिपूर्णता। सोऽपि। अपिर्विश्वासास्पदत्वमावेदयति। अथ च वृक्षसर्वदेशस्यापि कठिनत्वादिदोषसत्त्वात्समुच्चायकः। अविश्वास्यः।

एवं च कोषोऽप्येभिरस्मासु विनिहित इति धिया न सुधिया पिशुनाः सेव्या इति व्यज्यते ॥

सरलतया मानाद्यविधायिनीं भामिनीं सखी समुपदिशति—

सौभाग्यं दाक्षिण्यान्नेत्युपदिष्टं हरेण तरुणीनाम् ।
वामार्धमेव देव्याः स्ववपु शिल्पे निवेशयता ॥ ६०१ ॥

**सौभाग्यमिति** । स्वशरीरस्य चित्रे । शिल्प इत्यनेन कार्याक्षमेऽपि वपुषि वामार्धस्यैवादरः, तत्र का वार्ता कार्यक्षमे वपुषीति व्यज्यते । देव्या वामार्धमेव सव्यसमांशकमेव । देवीदक्षिणशरीरभागस्य शिवरूपत्वादिति भावः । अर्धमित्यनेन दक्षिणैकदेशस्याप्यनिवेशनेन तत्र न केवलमौदासीन्यम्, अपि तु द्वेषवत्तेति ध्वन्यते । स्थापयता हरेण तरुणीनां दाक्षिण्यात्सरलत्वात्सौभाग्यं नेत्युपदिष्टम् । हरपदेन हरति सर्वस्य दुःखमिति व्युत्पत्त्या करुणावतापि भगवतानङ्गीकारेण करुणारहितस्यान्यसर्वनायकस्य दाक्षिण्यं न प्रीतिविषय इति व्यज्यते । यद्वोपदेशदानार्हत्वमथवोपदेशे याथातथ्यम् । एवं च श्लिष्टाभ्यां वामदक्षिणपदाभ्यां कौटिल्यादेव तरुणीनां सौभाग्यं न सरलतयेति ध्वन्यते । तरुणीनामित्यनेनान्त्ये वयसि दाक्षिण्यमुचितमित्यावेद्यते । उपदिष्टमित्यनेनान्यथासंभावनमनुचितमिति ध्वन्यते । एवं च सरलतां विहाय मानाद्यवश्यं त्वया विधेयमिति ध्वन्यते । यद्वा कौटिल्यशालिनं नायकं नायिकासखी वक्ति—स्ववपुःशिल्पे देव्या वामार्धमेव निवेशयता हरेण दाक्षिण्यात्सौभाग्यं नेति तरुणीनामुपदिष्टम् । न तु पुंसाम् । एवं च स्त्रीणामेव वाम्यकरणमुचितम्, न तु पुंसामिति ध्वन्यते । यद्वा तरुणीनामेवेति योजना ॥

नायिकासखी नायकं वक्ति—

सुभग स्वभवनभित्तौ भवता संमर्द्य पीडिता सुतनुः ।
सा पीडयैव जीवति दधती वैद्येषु विद्वेषम् ॥ ६०२ ॥

**सुभगेति** । हे सुभग, स्वसदनभित्तौ सम्यङ् मर्दयित्वा पीडिता सुतनुर्वैद्येषु विशेषद्वेषं दधती सा पीडयैव जीवति । एवं च त्वत्कृतपीडा यत्र तस्या जीवननिदानं तत्र किं वाच्यं त्वत्सङ्ग इति व्यज्यते । उत्सववशात्त्वद्भवनमागतां बलादबलां त्वया दृढालिङ्गनादिना संपीड्यानुरागातिशयशालिनीं विधायेदानीमुदासीनवत्स्थीयत इत्येतदनुचिततरं तवेति भावः । सुभगत्वं चाकस्मिकैतादृशनायिका-

संपर्कवत्त्वादिति भावः। स्वपदेन भीतिशून्यत्वं नायके, नायिकायां सख्यादिराहित्येन सहायशून्यत्वमावेद्यते। भित्तावित्यनेन निर्गमाभाववत्त्वं द्योत्यते। भवतेत्यनेन बलात्कारो व्यज्यते॥

नायिकासखी नायकं वक्ति—

सा गुणमयी स्वभावस्वच्छा सुतनुः करग्रहायत्ता।
भ्रमिता बहुमन्त्रविदा भवता काश्मीरमालेव॥ ६०३॥

**सेति**। गुणाः सौन्दर्यादयः। पक्षे गुणः सूत्रम्। स्वभावेन सहजतया शुद्धान्तःकरणा। पक्षे स्वभावोज्ज्वला। करग्रहेण पाणिग्रहेण स्वाधीना। एवं च पातिव्रत्यमावेद्यते। पक्षे हस्तेन यदङ्गीकरणं तेनायत्ता। काश्मीरमालेव सुतनुः। एवं स्पृहणीयत्वं द्योत्यते। बहुविचारवता। अत्यन्तकलाकुशलेनेत्यर्थः। पक्षे बहुतरागमोक्तमन्त्रज्ञेन। एवं च बहुतरजपशालित्वं द्योत्यते। भवता भ्रमिता। एवं च त्वत्संगत्या कदापि नैतस्या विश्रान्तिरिति व्यज्यते। यद्वा सामान्यवनितासखी नायकं वक्ति—करग्रहेण स्वाधीना। न तु द्रव्यादिलोभेनेति भावः। स्वभावस्वच्छेत्यनेन सरलत्वं व्यज्यते। बहुमन्त्रविदानेकप्रकारकविचारवता। एवं च कापट्यशालित्वं द्योत्यते। भ्रमं प्रापिता। एवं चेयं भ्रान्ता त्वामस्थिरप्रकृतिकं भजते, त्वं तु न किमपि वसु ददासीति व्यज्यते। अन्योऽपि मन्त्रवेत्ता कंचिज्जनं भ्रान्तं विधाय तदीयसर्वस्वापहारं करोतीति लौकिकम्॥

नायको नायिकां वक्ति—

सव्रीडस्मितसुभगे स्पृष्टास्पृष्टेव किंचिदपयान्ती।
अपसरसि सुन्दरि यथा यथा तथा स्पृशसि मम हृदयम् ६०४

**सव्रीडेति**। हे व्रीडासहितस्मितसुभगे, किंचित्स्पृष्टा किंचिदस्पृष्टा। एतादृश्येव। मयेति भावः। आकस्मिकसंजातसंघट्टनेऽपि लोकभीतिवशादिति भावः। अत एव व्रीडास्मितवत्ता नायिकायाः। अपसरन्ती त्वं यथा तथा सुन्दरि, अपसरसि तथा मम हृदयं स्पृशसि। एवं चेदानीमहं नानुग्राह्यस्त्वया चेत्तदा न मे प्राणाः स्थास्यन्तीति व्यज्यते। यद्वा स्पृष्टाप्यस्पृष्टैवाहमित्यपसरन्ती यथा यथापसरसि तथा मम हृदयं स्पृशसि। एवं च नाहं त्वया स्पृष्टेति वादिन्यपसरसि हृदयं च स्पृशसीत्यपसरणानर्थक्यम्, अत एह्यालिङ्गस्व मामिति व्यज्यते। 'स्पष्टीभूत्वेव किंचिदपयान्ती' इत्यपि पाठः। 'षष्ठीं संपूज्य' इति पाठेऽपि प्रसवनिमित्तक एव व्रीडास्मिते किंचित्षष्ठीं संपूज्य। यथाकथंचित्षष्ठीं पूजयित्वेत्यर्थः। यथा यथा-

पसरसि तथा सुन्दरि, मम हृदयं स्पृशसि । 'षष्ठी पूज्येव' इति पाठे पूज्या षष्ठीव त्वं यथा यथापसरसि तथा सुन्दरि, मम हृदयं स्पृशसि । एवं च यथा षष्ठी यं स्पृशति स न जीवति, तथा कृतषष्ठीपूजया त्वया स्पृष्टं मम हृदयं न स्थितिं प्राप्नोतीति व्यज्यते । तेन च ममालिङ्गनचुम्बनादि देहीति ॥

निजदयित एव रतिर्विधेया नान्यत्रेति वादिनीं सखीं नायिका वक्ति—

सखि सुखयत्यवकाशप्राप्तः प्रेयान्यथा तथा न गृही ।
वातादवारितादपि भवति गवाक्षानिलः शीतः ॥ ६०५ ॥

**सखीति** । हे सखि । एवं च वास्तवाभिप्रायकथनार्हत्वमावेद्यते । अवकाशप्राप्तः । संकेतवशात्समयविशेषे समागत इत्यर्थः । प्रेयान्यथा सुखमुत्पादयति तथा निजः प्रेयान्न । अमुमेवार्थमर्थान्तरन्यासेन द्रढयति—अवारितात् । मद्दत इति भावः । वाताद्वातायनसंबन्ध्यनिलः शीतस्तापापनोदकः । एवं चान्यनायकमवश्यमानयेति ध्वन्यते । यद्वा निजदयितानुरक्तां नायिकामन्यदयितेन संयोजयितुं दूती वक्ति—गृहीत्यनेनावारितादित्यनेन च 'अर्थादौषधवत्कामः प्रभुत्वात्केवलं श्रमः । करवःस्वेषु दारेषु त्रयादन्यत्र मन्मथः ॥' इतिवत्तुल्यन्यायतया नायिकाया अप्यधिकानुरागशालिपरपुरुषरतौ सुखातिशय इति द्योत्यते । अथवा गृहीत्यनेन निरन्तरसदनावस्थितिशालितया स्वनायकः परपुरुषाप्राप्तिसमयेऽपि भोक्तुं शक्य इति व्यज्यते । तेन चाधुना तमहमानयामीति ॥

निरन्तरं नितान्तकुपितां नायिकां सखी वक्ति—

सततमरुणितमुखे सखि निगिरन्ती गरलमिव गिरां गुम्फम् ।
अवगणितौषधिमन्त्रा भुजगि रक्तं विरञ्जयसि ॥ ६०६ ॥

**सततमिति** । भुजंगीव भुजंगी तत्संबुद्धिः । एवं च तवान्तिकागमनेऽपि भीतिरुत्पद्यत इत्यावेद्यते । निरन्तररक्तीकृतवदने । कोपवशादिति भावः । पक्षे स्वभावत एवारक्तवदनत्वम् । सखि, विषमिव वाचां गुम्फं गिरन्ती पक्षे गरलं गिरन्ती । अवगणितौषधिमन्त्रा अवगणितौषधितुल्यविचारा । एवं यथौषधिः पीडाहारकतया सुखकारिणी तथा सविचारा मदुक्तिस्ते हितकारिणी, अहो एनामपि न गणयसीत्यनुचितं तवेति ध्वन्यते । पक्षे औषधमन्त्रादेरपि न यत्र सामर्थ्यमिति भावः । रक्तं जनं विरञ्जयसि विरक्तं करोषि । पक्षे रुधिरवन्तं रुधिररहितं करोषि । एवं चैतादृशकोपवत्तया त्वया यत्रानुरक्तोऽपि जनोऽनुरागशून्यः क्रियदे तत्राननुरक्तानुरञ्जनं तव दूरापास्तमिति व्यज्यते ॥

कपटभावेनैवानयाश्वासनं क्रियते न वास्तवसात्त्विकतयेति कश्चित्कंचिदन्योक्त्या वक्ति—

स्थलकमलमुग्धवपुषा सातङ्काङ्कस्थितैकचरणेन ।
आश्वासयति बिसिन्याः कूले बिसकण्ठिका शफरम् ॥६०७॥

**स्थलेति** । कमलिन्याः समीपे वलाका सत्रासं क्रोडे स्थित एकश्चरणो यस्य तेन स्थलकमलवत्सुन्दरशरीरेण मत्स्यं विश्वासयति । एवं च मत्स्यस्य कमलभ्रमेण समीपमागमनं भविष्यति ततश्चैतद्भोजनं विधेयमिति धिया तूष्णीमवतिष्ठत इति भावः । एवं चेयं दुष्टा, अत एतद्विश्वासो न विधेय इति व्यज्यते ॥

कश्चित्कामी दुष्प्रापां नायिकामवलोक्य समीरमुद्दिश्य वक्ति—

सनखपदमधिकगौरं नाभीमूलं निरंशुकं कृत्वा ।
अनया सेवित पवन त्वं किं कृतमलयभृगुपातः ॥ ६०८ ॥

**सनखेति** । नखक्षतसहितमत्यन्तगौरं नाभीमूलमंशुकरहितं कृत्वानया सेवित पवन, त्वं कृतो मलयाचलकटकात्पातो येन, एतादृशः किमिति वितर्कः । एवं च यदि त्वया भृगुपातो न कृतः स्यात्तर्हि कथमनया विगलितलज्जया सेवितः स्यात्, अतस्तवैव तपस्याधिक्यमिति व्यज्यते । तेन च त्वमेव धन्य इति । यद्वैतदपेक्षया किमधिकतरफलमस्ति यल्लिप्सया मलयभृगुपातस्त्वया कृत इति प्रश्नः । एवं चैतादृशसुखादन्यन्न पुरुषार्थरूपमिति व्यज्यते । रतोत्तरमपि समधिककामाविर्भावादरतार्थं पुनः प्रवृत्तां कान्तामालोक्याली नायकं वक्तीति वा ॥

अदृष्टवता श्रीस्तावदप्रयत्नेनापि लभ्यत इति कश्चिद्वक्ति—

सर्वाङ्गमर्पयन्ती लोला सुप्तं श्रमेण शय्यायाम् ।
अलसमपि भाग्यवन्तं भजते पुरुषायितेव श्रीः ॥ ६०९ ॥

**सर्वाङ्गमिति** । निखिलाङ्गं समर्पयन्ती चञ्चला । अथ च लोलेति श्रीनाम । श्रीर्विपरीतरतविधायिनीव शय्यायां श्रमेण सुप्तम् । एवं च शय्यादिरचनामात्रोद्योगशालित्वं व्यज्यते । उद्योगरहितमपि । अपिः प्रागप्यन्वेति । यद्वा लोलेत्यत्रान्वेति । अदृष्टशालिनं भजते । पक्षे सुगमम् ॥

सुदिनं तदेव यत्र स्मारं स्मारं वियोगदुःखानि ।
आलिङ्गति सा गाढं पुनः पुनर्यामिनीप्रथमे ॥ ६१० ॥

**सुदिनमिति** । तदेव समीचीनं दिनं यस्मिन्विरहदुःखानि स्मृत्वा स्मृत्वा

रात्र्याः प्रथमे प्रहर इति भावः। वारं वारं दृढं सालिङ्गति। आलिङ्गयिष्यतीत्यर्थः। त्रियामेति विहाय यामिनीपदोपादानेन निखिलजने जागरूकेऽपि सायंतनसमय एव चालिङ्गनादिविधानेन विगलितलज्जात्वं व्यज्यते। पथिकाशंसनमेतत्॥

काचित्कांचिद्वक्ति—

सान्तर्भयं भुजिष्या यथा यथाचरति समधिकां सेवाम्।
साशङ्कसेर्ष्यसभया तथा तथा गेहिनी तस्य॥ ६११॥

**सान्तर्भयमिति**। भुजिष्या दासी तस्य नायकस्यान्तर्भयसहितम्। स्वामिनी ज्ञास्यतीति धियेति भावः। यथा यथा सम्यगधिकाम्। संमतानुरागवत्त्वादिति भावः। सेवामाचरति तथा तथा गेहिनी। एवं च गृहकर्मव्यापृततयैतादृशानुचिताचरणज्ञानवैधुर्यं व्यज्यते। साशङ्कानर्थप्रतिभासहिता। किमिदानीमियं समधिकां सेवां करोतीति धियेति भावः। सेर्ष्या समत्सरा। प्रायेणेयमस्मिन्रतिमतीति धियेति भावः। सभया। लोकापवादादिति भावः। अत एव गेहिनीति पदमर्थवत्। एवं च सर्वदा स्वामिचरणपरिचरणं स्वयमेव विधेयम्, न तु गृहव्यापारवशाद्दास्यादिनेति ध्वन्यते। 'तस्याः' इति पाठे नायिकायाः। सान्तर्भयम्। न ज्ञातव्योऽनया नायकीयमत्सङ्ग इति धियेति भावः। इतरत्सुगमम्॥

नायको नायिकां वक्ति—

सुन्दरि दर्शयति यथा भवद्विपक्षस्य तत्सखी कान्तिम्।
पतति तथा समदृष्टिस्त्वदेकदासस्य सासूया॥ ६१२॥

**सुन्दरीति**। हे सुन्दरि, तस्यास्त्वत्सपत्न्याः सखी भवद्विपक्षस्य त्वत्सपत्न्याः कान्तिं यथा दर्शयति तथा त्वन्मात्रदासस्य मम। एवं च त्वदतिरिक्तायाः शोभाकथनं कथं मया सोढुं शक्यमिति व्यज्यते। सद्वेषा दृष्टिः पतति। अर्थात्त्वद्विपक्षे। एवं च न मयानुरागवशात्त्वद्विपक्षावलोकनं कृतं किं तु क्रोधवशादिति भावः॥

सपत्नीदुःखितां कान्तां नायकसखी वक्ति—

स्वाधीनैरधरव्रणनखाङ्कपत्रावलोपदिनशयनैः।
सुभगा सुभगेत्यनया सखि निखिला मुखरिता पल्ली॥६१३॥

**स्वाधीनैरिति**। हे सखि, स्वयं कर्तुं शक्यैर्दन्तक्षतनखक्षतपत्रवल्लीप्रोञ्छनदिवास्वापैः सुभगेत्यनया। त्वत्सपत्न्येत्यर्थः। समग्रापि पल्ली वाचालीकृता। पल्ली-

पदेन जाड्यं तेन च यथार्थज्ञानशून्यत्वं तेन चैतद्वचनमप्रमाणमिति व्यज्यते। निवारणानर्हत्वं वा। मुखरितेत्यनेन वचस्युपेक्षणीयत्व व्यज्यते। एवं च नायको नैतस्यामनुरक्तो न वा तत्कृतानि दन्तक्षतादीनि, किं तु मिथ्यैव लोके स्वसौभाग्यप्रकटनायानया स्वयमेव संपादितानीति विज्ञाय नायके मानादिकरणमनुचितं तवेति ध्वन्यते॥

काचित्कांचिद्वक्ति—

सरित इव यस्य गेहे शुष्यन्ति विशालगोत्रजा नार्यः।
क्षारास्वेव स तृप्यति जलनिधिलहरीषु जलद इव॥ ६१४॥

**सरित इति।** यस्य सदने सरित इव श्रेष्ठान्वयजाताः। पक्षे महत्तराद्रिजन्याः। नार्यः शुष्यन्ति। दुःखोद्रेकवशादिति भावः। स क्षारास्वेव। नीरसास्वेवेत्यर्थः। समुद्रलहरीषु मेघ इव तृप्यति। एवं च यः कुलीनस्वनायिकासु नाभिनन्दति तस्य नीरसनायिकावाप्तिरेव भवतीति व्यज्यते। यद्वा पराङ्गनालम्पटं नायकं नायिका वक्ति—जलनिधिपदेन नीचजन्यत्वमन्याङ्गनासु ध्वन्यते। जलदपदेन नायके मालिन्यं व्यज्यते॥

नायकदूती नायिकां वक्ति—

सकलकटकैकमण्डिनि कठिनीभूताशये शिखरदन्ति।
गिरिभुव इव तव मन्ये मनः शिला समभवच्चण्डि॥ ६१५॥

**सकलेति।** हे निखिलकटकमुख्यभूषणे। पक्षे कटकोऽद्रिनितम्बः। कठोरहृदये। पक्षे कठिनी खटिका। पद्मरागरूपरदे। पक्षे शिखरं शृङ्गम्। हे कोपने, पर्वतभूमेरिव तव मनः पाषाणः। पक्षे मनःशिला धातुविशेषः। संजात इति तर्कयामि। एवं च भवदेकशरण उचितमात्राचरणप्रवणे निजरमणे नैवंविधं नैष्ठुर्यं तव कर्तुं समुचितमिति ध्वन्यते। तेन चावश्यं तमनुसरेति॥

सखी नायिकां वक्ति—

सखि दुरवगाहगहनो विदधानो विप्रियं प्रियजनेऽपि।
खल इव दुर्लक्ष्यस्तव विनतमुखस्योपरि स्थितः कोपः॥ ६१६॥

**सखीति।** हे सखि, दुरवगाहः केनाप्युपायेन निवारयितुमशक्यः स चासौ

गहनः। वहुतर इत्यर्थः। पक्षे केनाप्युपायेनाकलयितुमशक्यः कुटिलाशयश्चेत्यर्थः। प्रियजनेऽपि नायकेऽपि। अपिः करणानर्हत्वमावेदयति। पक्षे स्वेप्सितजनेऽपि। एवं च किमुतान्यत्रेति भावः। विप्रियं दुःखं विदधानः। विनतं यन्मुखं तस्योपरि स्थितः। पक्षे साधोरुपरि स्थितः। साधोः क्लेशद इत्यर्थः। एवं च दुष्टस्य दुष्टाद्भीतिः साधुतो नेत्यर्थः। दुष्ट इव तव कोपो दुर्लक्ष्यो ज्ञातुमशक्यः। पक्षे द्रष्टुमशक्यः। एवं चैतादृशकोपकरणमनुचितं तवेति ध्वन्यते। 'विनयमुखोपस्थितः' इति पाठे विनयो मुखेऽग्रतो यस्यैतादृश उपस्थितः। जात इत्यर्थः। एवं चैतादृशविनयप्रदर्शनमप्यन्यादृशमेव मे भातीति व्यज्यते। पक्षे विनयो मुखे यस्य। न तु हृदय इति भावः। दुर्लक्ष्यः। विनयमुखत्वादेवेत्युभयत्र भावः। दुरवगाहेत्यादेः प्राग्वदेव। प्रियजनेऽपि विप्रियं विदधानः। प्रिये विनयप्रदर्शनस्योदासीनत्वादिति भावः। पक्षे प्राग्वत्। हे सखि, खल इव तव कोपः। एवं चैतादृशकोपकरणमनुचितं तवेति भाव इत्यर्थः॥

कथमियमुपरिविवाहोत्सवं नावलोकयतीति वादिनं विदिततद्वृत्तान्तः कश्चिद्वक्ति—

स्वेदसचेलस्नाता सप्तपदी सप्त मण्डलीर्यान्ती।
समदनदहनविकारा मनोहरा व्रीडिता नमति॥ ६१७॥

**स्वेदेति**। स्वेदेन। त्वद्दर्शनजेनेति भावः। सवसनस्नानशालिनी। सप्तपदसमाहाररूपा सप्त मण्डलीरतिक्रामन्ती। मदनरूपो यो दहनस्तस्य यो विकारस्तत्सहिता। चित्तहारिणी। लज्जिता नम्रीभवति। एवं चानया त्वच्चित्तमपहृतम्, अत एवाग्निदिव्ये स्वेदरूपजले सवसनप्लुता सप्तपदीरूपसप्तमण्डलातिक्रमकारिणी मदनरूपाग्निदाहशालिनी संजाताशुद्धिमत्तया लज्जावशान्नोर्ध्वमीक्षत इति भावः। एवं च त्वद्विषयकलज्जावशादेवमुन्नीयते यदियं विहितेऽपि विवाहे न त्वां लक्ष्यतीति व्यज्यते। अन्योऽपि तस्करः संजातदिव्यदूषणः किमिदानीं वक्तव्यं मयेति विगलितधिषणोऽधस्तादेव विलोकयन्नास्त इति लौकिकम्। यद्वा नायको नायिकासखीं वक्ति—एवं चेयं मन्मनोरूपवस्तु हृतवती वैवाहिकच्छद्मदिव्येऽपि शुद्धभाववती समपहृतवस्त्वददती मयेयं भुजपाशेन बद्ध्वा निर्दयं मर्दयित्वा मुष्ट्यभिघातैरुरसि ताडयित्वा दन्तनखक्षतैश्च क्लेशभागिनी विधेया तत्रभवत्या नैतत्पक्षरक्षणं क्षणमपि विधेयमिति व्यज्यते। तेन च कृतविवाहामप्येनां न मुञ्चामीति। यद्वा मनोहरा सुन्दरी लज्जिता नमति। स्वेदेत्यादिविशेषणस्य सप्तपदीत्यादिविशेषणं हेतुगर्भम्। एवं च नितम्बादिप्राशस्त्यमावेद्यते। लज्जायां तु स्वेदादिना

मदीयमदनविकार एभिर्ज्ञात इति धीर्हेतुः । एवं चैतादृशप्रौढापरिणय एव सम्यगिति व्यज्यत इति कश्चित्कंचिद्वक्तीत्यप्यर्थः ॥

समीचीनानामप्यसमीचीनसंसर्गादन्यथाभावो भवतीति कश्चित्कंचिद्वक्ति—

सुरसप्रवर्तमानः संघातोऽयं समानवृत्तानाम् ।
एत्यैव भिन्नवृत्तैर्भङ्गुरितः काव्यसर्ग इव ॥ ६१८ ॥

**सुरसेति** । समीचीनरसैः प्रकर्षेण वर्तमानः । पक्षे समीचीनरसवान् । समानाचरणवताम् । पक्षे एकजातीयच्छन्दसाम् । अयं समुदायः काव्यस्य सर्ग इवान्यादृशाचरणप्रवणैः । पक्षे विजातीयच्छन्दोभिः । एत्यैव । एवकारेण बहुकालावस्थितौ किं भविष्यतीति न विद्म इति व्यज्यते । भङ्गुरितः कुटिलीकृतः । पक्षे समापितः । एवं चासत्संगतिरनुचितेति ध्वन्यते । यद्वा सर्वेऽप्येते समीचीना मत्सहायपक्ष एव स्थिताः, परमधुनैव कश्चिद्दुष्टैरागत्यान्यथाभावं नीता इति कश्चित्कंचिद्वक्ति ॥

कश्चित्सखायं वक्ति—

सर्वासामेव सखे पय इव सुरतं मनोहारि ।
तस्या एव पुनः पुनरावृत्तौ दुग्धमिव मधुरम् ॥ ६१९ ॥

**सर्वासामिति** । हे सखे, सर्वासामेव । स्त्रीत्वसाधारणधर्मवत्तयेति भावः । सुरतं पय इव दुग्धमिव समीचीनम् । आवर्तितं दुग्धमिव तस्य एव पुनः पुनरावृत्तौ सुरतं मधुरम् । एवं च सर्वकामिनीनां सुरतं सममेव परमिदमधिकं तस्या यदुत्तरोत्तरसुरते माधुर्यमिति भावः । एवं चान्यासां प्रथमत एव माधुर्यं न पुनरुत्तरोत्तरत इति व्यज्यते । तेन च तत्तुल्या नान्या नायिकेति । यद्वा सर्वासामेव पुनः पुनरावृत्तौ सुरतं जलमिव मनोहारि पुनः पुनरावृत्तौ तस्या एव सुरतं दुग्धमिव मधुरम् । एवं च यथा जलदुग्धयोर्महदन्तरं तथान्यासां तस्याश्चोत्तरोत्तरसुरत इति व्यज्यते । प्रथमव्याख्याने पयःपदस्थाने दुग्धपदं दुग्धपदस्थाने पयःपदं वेत्युभयत्रैकपददानमुचितम् ॥

कश्चित्कंचिद्वक्ति—

स्वप्नेऽपि यां न मुञ्चसि या तेऽनुग्राहिणी हृदिस्थापि ।
दुष्टां न बुद्धिमिव तां गूढव्यभिचारिणीं वेत्सि ॥ ६२० ॥

**स्वप्नेऽपीति** । यां स्वप्नेऽपि । अपिनेतरकालसंग्रहः । एवं चासक्त्यतिशयो

द्योत्यते। पक्षे स्वप्रेऽपि बुद्धेः सत्त्वाद्यथाश्रुतम्। या हृदिस्थापि। तवेति भावः। तेऽनु पश्चाद्ग्राहिणी। परपुरुषमिति भावः। एवं च यां त्वं सर्वदा ध्यायसि सा त्वयि कचित्क्षणमपि गते परपुरुषमभिलषतीति भावः। अथवा त्वद्धृदिस्थापि परपुरुषानुग्रहवतीत्यर्थः। एवं च त्वद्धृदिस्थितिकालेऽपि परपुरुषे मनः कुरुते या सा त्वत्पश्चात्किं करिष्यतीति तत्र विघ्न इति व्यज्यते। यद्वा या तवानुग्रहकारिणीत्वेनाभिमता। एवं च वास्तवं तस्यास्त्वय्यनुग्रहो नास्तीत्यर्थः। पक्षे या ते। अविद्यमानेऽपि वस्तुनीति भावः। अनुग्राहिणी। अविद्यमानवस्तुविषयिणीत्यर्थः। अपिः पूर्वसमुच्चायकः। तां दुष्टां बुद्धिमिव गुप्तव्यभिचारकारिणीम्। पक्षे झटित्यज्ञेयभ्रमत्ववतीम्। न जानासि। एवं चैतादृशदुष्टायामासक्तिसंपादनं तवानुचितमिति व्यज्यते॥

कश्चित्कांचिद्वक्ति—

सपरावृत्ति चरन्ती वात्येव तृणं मनोऽनवद्याङ्गि।
हरसि क्षिपसि तरलयसि भ्रमयसि तोलयसि पातयसि॥६२१॥

**सपरावृत्तीति**। हे अनवद्याङ्गि। एवं च स्पृहणीयत्वमावेद्यते। परावृत्तिसहितं चलन्ती। पुनः पुनः पश्चान्निरीक्षमाणा चलन्तीत्यर्थः। त्वमित्यस्यानुपादानं लोकभीतिमावेदयति। पक्षे परिभ्रमणवती। मनः। ममेतिपदानुपादानेन यदीदं मनो मदीयं स्यात्तर्हि त्वत्कृतैतादृशैतदवस्था कथं मया द्रष्टुं शक्येति व्यज्यते। यद्वा मदीयत्वेन ज्ञाते मनसीतोऽप्यधिकतरपीडानया विधेयेति भीतिरावेद्यते। वात्या तृणमिव हरसि, अवलोकनेन स्वाधीनं करोषि। त्वय्यासक्तं भवतीति भावः। क्षिपसि। अनवलोकनेऽहमनया नानुगृहीत इति दुःखभाक्करोषीति भावः। तरलयसि। पुनरवलोकने मय्यनुग्रहवतीति धियेयं मयाञ्चले झटिति धर्तव्येति चाञ्चल्यभाक्करोषीति भावः। भ्रमयसि। पुनरनवलोकनेऽज्ञानशालिनं करोषि। सर्वथा किंकर्तव्यतामूढं संजातमिति भावः। तोलयसि। पुनरवलोकनेन किमस्मिन्किंचिद्धैर्यमस्ति न वेति ज्ञापकयथावस्थितिशालित्वाभाववत्करोषीति भावः। एवं क्षणं धैर्यशालि क्षणमधैर्यशालि संवृत्तमिति भावः। पातयसि मूर्च्छितं करोषि। पुनरवलोकनादिति भावः। एवं च त्वत्कटाक्षरूपसायकैरसमसायकेन भूयो भूयो जर्जरीकृतं सन्निष्प्राणमिव संजातमिति भावः। अन्योऽपि कश्चिद्वीरः पुनः पुनर्हन्यमानो मूर्च्छितो भवतीति लौकिकम्। एवं च निरपराधिनो ममैतादृशदुःखविधाने कथं नापराध्यति भवतीति व्यज्यते॥

नायिकासखी नायकं वक्ति—

सा बहुलक्षणभावा स्त्रीमात्रं वेति कितव तव तुल्यम् ।
कोटिर्वराटिका वा द्यूतविधेः सर्व एव पणः ॥ ६२२ ॥

**सेति** । हे कितव । एवं च तवैतादृशबुद्धिशालित्वमुचितमिति व्यज्यते । तव बहूनि यानि लक्षणान्यस्थूलाधरत्वादीनि तेषां भावः सत्ता यस्यां सा । यद्वा बहुला ये क्षणा उत्सवास्ते येभ्य एतादृशा भावा विलासा यस्यां सा । एवं चेतरनायिकातोऽधिकत्वमावेद्यते । पक्षे बहूनां समग्राणां लक्षणानां भाव आलोकनं चित्ताभिप्रायो वा यस्यां सा । एतादृशी सा नायिका स्त्रीमात्रं वेति तव । एवं चान्यस्य नैतादृशी मतिरिति भावः । तुल्यम् । मात्रपदेन लक्षणादिसत्त्वविरह आवेद्यते । अमुमेवार्थमर्थान्तरन्यासेन द्रढयति—द्यूतविधिसंबन्धिकोटिः कोटिसंख्याकं वस्तु कपर्दिका वा सर्व एव पणः । यद्वा द्यूतं विधिः कर्तव्यार्थो यस्य स तस्य । विधिपदमवश्यकर्तव्यत्वमावेदयति । एवं च यथा द्यूतसक्तस्य कोटिसंख्याकं वसु समधिकं वराटिका न्यूनेति ज्ञानशून्यत्वं तथा धूर्तस्य तव विशेषज्ञानशून्यत्वमिति भावः । एवं च गुणानभिज्ञतया त्वया तां मत्सखीं विहायान्यत्रासक्तिः क्रियत इति व्यज्यते ॥

सखी नायकं वक्ति—

सा विरहदहनदूना मृत्वा मृत्वापि जीवति वराकी ।
शारीव कितव भवतानुकूलिता पातिताक्षेण ॥ ६२३ ॥

**सेति** । हे कितव, पातिताक्षेण कृतकटाक्षेण । पक्षेऽक्षः पाशः । भवतानुकूलिता स्वाधीनीकृता । पक्षे संचरणक्षमा कृता । विरहानलखिन्ना सा वराकी । एवं च सरलत्वमावेद्यते । चतुरङ्गगुटिकेव मृत्वा मृत्वापि जीवति । एवं च तस्यास्त्वत्कटाक्षमात्रेण जीवनम्, अन्यथा मरणमेवेति भावः । एवं च या हि स्वदर्शनादिनानोपायैः स्ववशतामानीता तस्यां पुनरीदृशौदासीन्यसंपादनं कथमनौचित्यं ते नावहतीति व्यज्यते । तेन च सा त्वयानुग्राह्येति । पक्षे मरणं क्रीडाक्षमत्वम् । जीवनं तत्क्षमत्वम् ॥

नायिका सखीं वक्ति—

स्पर्शादेव खेदं जनयति न च मे ददाति निद्रातुम् ।
प्रिय इव जघनांशुकमपि न निदाघः क्षणमपि क्षमते ॥ ६२४ ॥

**स्पर्शादिति** । निदाघः प्रिय इव । एवं च निवारणानर्हत्वं ध्वन्यते । स्पर्श-

मात्रात् । एवं च किंचित्कालोत्तरं किमनेन विधेयमिति न विद्म इति व्यज्यते । पक्षे रतादिजन्यावस्था वक्तुं न शक्येति व्यज्यते । खेदं करोति । निद्रां कर्तुं च मे न ददाति । जघनसंबन्धि वसनमपि क्षणमपि न क्षमते । उभयत्र जघनवसनसत्त्वमावश्यकं तदभावे का वार्तालंकरणादीनां का च वार्ता घण्टिकादीनामिति भावः । एवं च प्रतिक्षणदृढतररतकारी मत्प्रिय इति व्यज्यते । एवं चैतादृशनिदाघकाले प्रियतममन्तरा नावस्थातुं शक्यम्, अतस्त्वरस्व तदानयनार्थमिति ध्वन्यते ॥

दूती नायकं वक्ति—

सा भवतो भावनया समयविरुद्धं मनोभवं बाला ।
नूतनलतेव सुन्दर दोहदशक्त्या फलं वहति ॥ ६२५ ॥

**सेति** । हे सुन्दर । एवं चासक्तियोग्यत्वं व्यज्यते । यद्वैतद्दोहदविशेषणम् । नूतनलता । नूतनपदेन चिरभाविफलयोग्यत्वं द्योत्यते । दोहदस्य शक्त्या फलमिव सा बाला भवतो निरन्तरचिन्तनेन समयविरुद्धम् । बाल्ये हि मनोभवोद्रेकवत्त्वं विरुद्धमिति भावः । फलविशेषणमप्येतत् । मन्मथं वहति । एवं च सा मदनकलाकलापानभिज्ञेति न मन्तव्यं त्वयेति व्यज्यते । तेन चाभुक्तभोगान्नाधिकं किमपि सुखम्, अतस्त्वरस्व तद्दर्शनायेति ॥

नायकं नायिकासखी वक्ति—

स्पृश्यति नखैर्न च विलिखति सिचयं गृह्णाति न च विमोचयति ।
न च मुञ्चति न च मदयति नयति निशां सा न निद्राति ॥ ६२६ ॥

**स्पृशतीति** । सा नखैः स्पृशति न च विलिखति । नखाग्रस्पर्शसंपादनेन मदनवत्त्वं नखक्षताद्यकरणेन लज्जावत्त्वमावेद्यते । सिचयम् । तत्करकलितमिति भावः । गृह्णाति न च विमोचयति । गृह्णातीत्यनेन लज्जावत्त्वं न विमोचयतीत्यनेन मदनवत्त्वं ध्वन्यते । न च मुञ्चति । गन्तुं न प्रयच्छति न वा गच्छतीत्यर्थः । न च मदयति । न मदयतीत्यनेन मान्मथस्पष्टचेष्टाद्यकरणेन लज्जावत्त्वं व्यज्यते । निशामतिवाहयति न निद्राति । तूष्णीं निशातिवाहनेन लज्जावत्त्वं निद्राद्यविधानेन मन्मथवत्त्वं द्योत्यते । एवं च मध्यास्वभावादियमेतादृशी न तु कोपादिमतीत्यतो भीतिमुत्सृज्यैनां निगृह्य स्वाभिलषितं संपादयेति ध्वन्यते ॥

नायकः सखायं वक्ति—

स्तनजघनद्वयमस्या लङ्घितमध्यः सखे मम कटाक्षः।
नोज्झति रोघस्त्यास्तटद्वयं तीर्थकाक इव ॥ ६२७ ॥

**स्तनेति**। हे सखे, तीर्थसंबन्धिकाको नद्यास्तटद्वयमिव लङ्घितो मध्यः कटिर्येन। सूक्ष्मत्वादिति भावः। पक्षे लङ्घितप्रवाहः। मम कटाक्षस्तस्या उन्नतम्। तटद्वयविशेषणमप्येतत्। स्तनजघनम्। प्राण्यङ्गत्वादेकवद्भावः। नोज्झति। तीर्थकाक इत्यनेन कटाक्षे काकोपमेयतया नायिकायां तीर्थरूपत्वप्रतिपादनेन प्राक्तनकृतसुकृतसमूहैकलभ्यत्वं नायिकायामावेद्यते। लङ्घितमध्य इत्यनेन मध्यपाते जीवनमेवासंभवीति व्यज्यते। तस्याः स्तने कदाचिज्जघने वा दृष्टिर्ममावतिष्ठते नान्यत्रेति भावः। एवं च तस्यामासक्तिस्त्वया न विधेयेति नाहमुपदेष्टव्य इति व्यज्यते ॥

नायकः सखायं वक्ति—

सव्रीडस्मितमन्दश्वसितं मां मा स्पृशेति शंसन्त्या।
आकोपमेत्य वातायनं पिधाय स्थितं प्रियया ॥ ६२८ ॥

**सव्रीडेति**। आ ईषत्कोपमेत्य लज्जास्मितकिंचिच्छ्वसितसहितम्। सख्यादिविलोकनाल्लज्जा। कथमयमकस्मादेव पश्यन्तीषु सखीषु तादृगाचरणप्रवृत्त इति स्मयेन स्मितम्। मन्मथाविर्भावाच्च मन्दश्वसितम्। मां मा स्पृशेति कथयन्त्या प्रियया वातायनं पिधाय स्थितम्। एवं च सख्यादिदृग्विषयतासंपादनेन यथेच्छरत्यनुमतिर्दत्तेति ध्वन्यते। तेन चैतादृशी नान्या चतुरेति ॥

नायकः सखायं वक्ति—

सकरग्रहं सरुदितं साक्षेपं सनखमुष्टि सजिगीषम्।
तस्याः सुरतं सुरतं प्राजापत्यक्रतुरतोऽन्यः ॥ ६२९ ॥

**सकरेति**। करग्रहणसहितम्। निषेधार्थमित्यर्थः। सरुदितम्। असह्यत्वज्ञापनायेति भावः। साक्षेपम्। ईदृशे कर्तव्ये कथमनीदृशं विधीयत इत्याक्षेपसहितमित्यर्थः। नखमुष्टिसहितम्। जेतुमिच्छा जिगीषा तत्सहितम्। सकरग्रहं सरुदितमित्यनेन नायककामसंदीपननिपुणत्वमथवा कोमलाङ्गीत्वम्, साक्षेपमित्यनेन कामतन्त्रनिपुणत्वम्, सनखमुष्टि सजिगीषमित्यनेन रसनिमग्नमानसत्वं नायिकायामा-

वेद्यते। तस्याः सुरतं सुरतम्। द्वितीयं सुरतपदम् 'यस्य मित्राणि मित्राणि' इत्यादिवत्सुखातिशयजनकमित्यर्थान्तरसंक्रमितवाच्यम्। अत एव तत्सुरतादन्यः प्राजापत्यक्रतुः। क्रतुपदेन कालान्तरभावि फलत्वं व्यज्यते। तेन चैतदतिरिक्तपत्नीसुरतं पुत्रादिजननोत्तरं सुखदं न तदानीमेवेत्यनेनापीयमेव ममातिशयप्रेमवतीति॥

दुर्जननिन्दाभिया परपुरुषे मानसमकुर्वाणां नायिकां दूती वक्ति—

सखि न खलु निर्मलानां विदधत्यभिधानमपि मुखे मलिनाः।
केनाश्रावि पिकानां कुहूं विहायेतरः शब्दः॥ ६३०॥

**सखीति**। हे सखि। एवं च हितोपदेशकथनार्हत्वं द्योत्यते। मलिना निर्मलानामभिधानमपि। अपिना संगत्यादेर्व्युदासः। निश्चयेन मुखे न विदधति। अमुमेवार्थमर्थान्तरन्यासेन द्रढयति—पिकानां कुहूं विहायान्यः शब्दः केनाश्रावि। न केनापीत्यर्थः। एवं च मलिनोक्तदुरुक्तैः किंचिन्न मनसि दुःखं विधेयमित्यावेद्यते। तेन च दुर्जनभीतिमुत्सृज्य स्वाभिलषितं यथेच्छं साधयेति॥

क्वचिल्लघुतापि समीचीनफलदेति कश्चित्कंचिद्वक्ति—

स्वल्पा इति रामबलैर्ये न्यस्ता नाशये पयोराशेः।
ते शैलाः स्थितिमन्तो हन्त लघिम्नैव बहुमानः॥ ६३१॥

**स्वल्पा इति**। ये रघुपतिसैन्यैः स्वल्पा इति हेतोः समुद्रस्यान्तर्न निःक्षिप्तास्ते शैलाः स्थितिमन्तः। भुवीति भावः। जाताः। अतो लाघवेनैव बहुमानः। महत्परिमाणस्थितिशालित्वादिति भावः॥

नायिकासखी नायकं वक्ति—

सा श्यामा तन्वङ्गी दहता शीतोपचारतीव्रेण।
विरहेण पाण्डिमानं नीता तुहिनेन दूर्वेव॥ ६३२॥

**सेति**। अत्र संबुद्धिपदानुपादानं नायकविषयकक्रोधवत्तामावेदयति। श्यामा षोडशवार्षिकी। पक्षे श्यामवर्णा। कृशाङ्गी। पक्षे स्थूलेतरा। सा नायिका दहता शीतोपचारेण तीव्रः। अधिक इत्यर्थः। तेन। विरहेण दूर्वा हिमेनेव पाण्डुतां नीता। एवं च त्वद्विरहखिन्ना सा त्वयानुग्राह्येति व्यज्यते॥

'सा पतिमात्रानुरागिणी कथं त्वया सह मया संगमनीया' इति वादिनीं सखीं नायको वक्ति—

सुनिरीक्षितनिश्चलकरवल्लभधाराजलोक्षिता न तथा।
सोत्कम्पेन मया सखि दृष्टा सा माद्यति स्म यथा॥ ६३३॥

**सुनिरीक्षितेति**। हे सखि। सा उत्कृष्टकम्पसहितेन। एतस्याः पतिर्द्रक्ष्यतीति धियेति भावः। सोत्कम्पेनेत्यनेन सेके चमत्कारपूर्वकत्वाभावो व्यज्यते। मया सिक्ता। जलेनेति भावः। यादृग्घृष्यति स्म, मत्ता बभूवेति वा, तादृक्सुष्ठु समीचीनविलोकनकारी निश्चलहस्तो यः प्रियतमस्तेन धाराजलसिक्ता न माद्यति स्म। सुनिरीक्षितेत्यादिना सेके चमत्कारपूर्वकत्वमावेद्यते। एवं च सा मय्यनुरक्तेति विज्ञायते। अतः सा त्वया मया सह संगमनीयेति व्यज्यते॥

दूती नायिकां वक्ति—

सखि मोघीकृतमदने पतिव्रते कस्तवादरं कुरुते।
नाश्रौषीर्भगवानपि स कामविद्धो हरः पूज्यः॥ ६३४॥

**सखीति**। हे सखि। एवं च हितोपदेशार्हत्वं ध्वन्यते। निष्फलीकृतमन्मथे, पतिमात्रानुरागिणि, तवादरं कः कुरुते। न कोऽपीत्यर्थः। अमुमेवार्थमर्थान्तरन्यासेन द्रढयति—भगवानपि स हरः शिवश्चतुर्दशी कामस्त्रयोदशी तद्वेधवान्पूज्यः। एवं च केवलस्य पूजानर्हत्वेऽपि तदभावेन कामविद्धतयैव पूजार्हता हरस्य तत्र का वार्तान्यस्येति भावः। एवं च यत्राचेतनरूपस्य शिवचतुर्दशीदिवसस्यापि कामाभिधानत्रयोदशीविद्धतयैव पूज्यताभिधानं धर्मशास्त्रे तत्र का वार्ता सचेतनस्य लोक इति व्यज्यते॥

नायको नायिकां वक्ति—

सा मयि न दासबुद्धिर्न रतिर्नापि त्रपा न विश्वासः।
हन्त निरीक्ष्य नवोढां मन्ये वयमप्रिया जाताः॥ ६३५॥

**सेति**। हन्त खेदे। नवोढां दृष्ट्वा वयमप्रिया जाता इत्यहं मन्ये। यतो मयि। इदमग्रेऽप्यन्वेति। सा दासबुद्धिर्न। पूर्वं यथा मय्यनुग्रहस्तथा नाधुनेत्यर्थः। सा रतिः प्रीतिर्न। पूर्ववत्प्रीतिर्नेत्यर्थः। सा। मन्मथविकारजेति भावः। लज्जा न। पूर्वं प्रियतमोऽयमिति बुद्ध्यान्यसमक्षं लज्जां कुर्वती स्थितेदानीं तद्बुद्ध्यभावात्तदभाववती वृत्तेति भावः। क्वचित् 'नापत्रपा' इति पाठः। स विश्वासो न।

यद्वा नायिका सखीं वक्ति—हे सखि, सा दासबुद्धिर्मयि न । यथा पूर्वं दासवदाज्ञां कुर्वन्स्थितस्तथा नाधुनेत्यर्थः । न प्रीतिः । नान्यतो लज्जा । पूर्वं मयि स्थितायामनेन कदाचिदस्या दुःखं भविष्यतीति धियान्यस्याः परिहासोऽपि न कृतः, इदानीं मामगणयित्वा निर्लज्जतया व्यवहरतीति भावः । न विश्वासः । किंचिद्वस्त्वाद्यपि मद्धस्ते नार्पयतीति भावः । अतो नवोढां वीक्ष्य वयमप्रिया जाता इत्यहं मन्ये । निरीक्ष्येत्यनेन संगमे किमनेन विधेयं तन्न विज्ञायते मयेति ध्वन्यते । एवं च सपत्नीसत्त्वमात्रमप्येतादृशदुःखदं किं पुनस्तत्प्राधान्यमिति व्यज्यते ॥

काचित्कांचिद्वक्ति—

सुचिरायाते गृहिणी निशि भुक्ता दिनमुखे विदग्धेयम् ।
धवलनखाङ्कं निजवपुरकुङ्कुमार्द्रं न दर्शयति ॥ ६३६ ॥

**सुचिरेति** । निशि भुक्ता चतुरेयं गृहिणी अत्यन्तचिरकालेनागते । प्रिय इति भावः । प्रातःकाले श्वेतनखचिह्नं स्वशरीरं कुङ्कुमार्द्रताभाववन्न दर्शयति । कुङ्कुमार्द्रमेव दर्शयतीत्यर्थः । सुचिरायात इत्यनेन नायिकायामन्यत्रासक्तिसंपादनयोग्यत्वं नायके च मन्मथविह्वलतया सम्यङ्निरीक्षणाभावेऽपि रतकारित्वमावेद्यते । गृहिणीत्यनेन स्वातन्त्र्यं तेन चान्यकर्तृकनिवारणानर्हत्वं व्यज्यते । निशीत्यनेन दर्शनानर्हत्वं नखक्षतेषु ध्वन्यते । दिनमुख इत्यनेन नखक्षतेषु दर्शनयोग्यत्वं द्योत्यते । विदग्धपदेन वञ्चनानिपुणत्वं व्यज्यते । धवलपदेन नखक्षतेषु प्राचीनत्वं धवलनखाङ्कमित्यनेन यथास्थितशरीरस्य दर्शनायोग्यत्वं ध्वन्यते । अकुङ्कुमार्द्रं न दर्शयतीत्यनेन प्राचीननखक्षतेष्वपि नवीनत्वभ्रमोदयेन प्राक्कृतानुचिताचरणगोपनमभिव्यज्यते । एवं चैवंविधचतुरयैवैतादृशाचरणं कर्तव्यं नान्ययेति ध्वन्यते । तेन च न त्वयेति । यद्वैतादृशरीत्यापि नायकः प्रतारयितुं शक्यः, अतो नखक्षतादिभीतिमुत्सृज्य मदुक्तमङ्गीकुर्विति दूती नायिकां वक्ति—

नायिका नायकं वक्ति—

स्तनजघनोरुप्रणयी गाढं लग्नो निवेशितस्नेहः ।
प्रिय कालपरिणतिरियं विरज्यसे यन्नखाङ्क इव ॥ ६३७ ॥

**स्तनेति** । हे प्रिय, स्तनजघनोरुप्रीतिमान् । पक्षे कामतन्त्रे एतत्स्थानेषु नखक्षतदानाद्यभिधानात् । अत्यर्थं लग्नः । हठालिङ्गनप्रवण इत्यर्थः । पक्षेऽत्यन्तं निखात इत्यर्थः । निवेशितस्नेहः कृतप्रीतिः । पक्षे दत्ततैलः । पीडोपशमार्थमिति

भावः। एतादृशस्त्वं नखाङ्क इव यद्विरज्यसे विरक्तो भवसि। पक्षे रुधिरशून्यः। इयं कालपरिणतिः। एवं चेदानींतनकालस्यैवायमपराधो न तवेति भावः। नखाङ्कोऽपि बहुकालेन शुष्को भवति। यद्वा यद्विरज्यसे इयं कालपरिणतिरिति काक्वा चिरकालसंगतेरिदं फलमित्यर्थः। एवं च यथा यथा चिरकालीनसंगतिस्तथा तथा सतां प्रीत्युत्कर्षः खलानां पुनरन्यथाभाव इति भावः॥

नायिकादूती नायकं वक्ति—

सा विच्छाया निशि निशि सुतनुर्बहुतुहिनशीतले तल्पे।
ज्वलति त्वदीयविरहादौषधिरिव हिमवतः पृष्ठे॥ ६३८॥

**सेति**। विच्छायान्यादृशाङ्गकान्तिमती। पक्षे छायाशून्या। प्रकाशशालित्वादिति भावः। त्वद्विरहात्सा सुतनू रात्रौ रात्रौ बहुहिमतुल्यशैत्यशालिनि। पक्षे बहुतुहिनेन। शीतले। तल्पे हिमालयस्य पृष्ठे औषधिरिव ज्वलति। एवं च दिवा लोकभीत्या संगुप्ता तदीयवेदना न ज्ञायतेऽस्माभिर्यामिन्यां तु तदीयवेदना विज्ञायत इति व्यज्यते। हिमवत्पृष्ठोपमानेन तस्याः कोमलतल्पोऽपि कार्कश्यमाविष्करोतीति व्यज्यते॥

नायिकासखी नायकं वक्ति—

सा नीरसे तव हृदि प्रविशति निर्याति न लभते स्थैर्यम्।
सुन्दर सखी दिवसकरबिम्बे तुहिनांशुरेखेव॥ ६३९॥

**सेति**। हे सुन्दर। एवं चासक्तियोग्यत्वं ध्वन्यते। यद्वा सुन्दरसखीत्येकं। नीरसे। रसः प्रीतिः। पक्षे तेजोमयत्वान्नीरसत्वम्। तव हृदि सा सुन्दरी सूर्यबिम्बे चन्द्ररेखेव प्रविशति, निर्याति, स्थैर्यं न लभते। एवं चास्थिरप्रकृतिस्त्वमेवासीति व्यज्यते॥

काचित्कांचिदन्योक्त्या वक्ति—

सुकुमारत्वं कान्तिर्नितान्तसरसत्वमान्तराश्च गुणाः।
किं नाम नेन्दुलेखे शशग्रहेणैव तव कथितम्॥ ६४०॥

**सुकुमारत्वमिति**। हे चन्द्ररेखे, सौकुमार्यं शोभात्यन्तसरसत्वमाभ्यन्तराश्च गुणा इति ते शशाङ्गीकारेणैव। अथ च शशजातीयपुरुषासक्त्या नाम निश्चयेन किं न कथितम्। अपि तु सर्वं कथितमित्यर्थः। एवं च यदि त्वयि सौकुमार्यादयो गुणाः स्युस्तदा कथमीदृशे पुरुषे समासक्तिः कृता स्यात्, अतस्त्वयि गुणा न

सन्तीति व्यज्यते । अथवा शशग्रहेण । एवं चैतादृशपुरुषसंबन्धात्तव सर्वं गुणादिकमनर्थकमेव संवृत्तमिति द्योत्यते । यद्वा सौकुमार्यादिगुणवत्तया पद्मिनीत्वमावेद्यते । पद्मिनिना यकायाः शशजातीयपुरुषयोग एव समुचित इति कामशास्त्रम् ॥

इतरगुणापेक्षया सद्वृत्तमेवाधिकतरमिति कश्चित्कंचिद्भङ्ग्यन्तरेण वक्ति—

सौरभ्यमात्रमनसामास्तां मलयद्रुमस्य न विशेषः ।
धर्मार्थिनां तथापि स मृग्यः पूजार्थमश्वत्थः ॥ ६४१ ॥

**सौरभ्येति** । सौगन्ध्यमात्रेच्छावतां मलयाचलवृक्षेषु । एवं च सर्वत्र सौगन्ध्यसत्त्वमिति भावः । न विशेषः । स्वेप्सितसौगन्ध्यस्य सर्वत्र सत्त्वादिति भावः । धर्मेच्छावतां तथापि सौगन्ध्यरूपसाधारणधर्मवत्त्वेऽपि पूजार्थमश्वत्थो गवेष्यः । एवं च पाण्डित्यादिगुणस्य सर्वत्रैकरूपसत्त्वेऽपि सद्भिः सद्वृत्तवत एवादरः क्रियत इति व्यज्यते ॥

कश्चित्कंचिद्वक्ति—

संवाहयति शयानं यथोपवीजयति गृहपतिं गृहिणी ।
गृहवृतिविवरनिवेशितदृशस्तथाश्वासनं यूनः ॥ ६४२ ॥

**संवाहयतीति** । गृहिणी । एवं च स्वाधीनत्वमावेद्यते । शयानं गृहपतिम्, न तु प्रियं यथा संवाहयति उपवीजयति च। उपसर्गेण समीरणे मन्दत्वमावेद्यते । तेन च स्वापे सत्वरभवनयोग्यत्वम् । सदनभित्तिरन्ध्रे निवेशिता दृग्येन तस्य यूनः । एवं च स्पृहणीयत्वमावेद्यते । तथाश्वासनं भवति । एवं चैतादृशोपायनिबन्धनैस्तत्स्वापसंपादनं मत्सविधागमनहेतुभूतमिति ज्ञानादिति भावः । एवं च स्त्रीणां विश्वासः केनापि न कार्य इति व्यज्यते ॥

'कथमियं ममानादरं कुरुते' इति वादिनं कंचन वारवनितासखी वक्ति—

सत्यं स्वल्पगुणेषु स्तब्धा सदृशे पुनर्भुजंगे सा ।
अर्पितकोटिः प्रणमति सुन्दर हरचापयष्टिरिव ॥ ६४३ ॥

**सत्यमिति** । हे सुन्दर । एवं चेतरगुणवत्ताभावो व्यज्यते । स्वल्पगुणेषु सा स्तब्धा । न नम्रेत्यर्थः । इदं सत्यम् । पक्षेऽल्पमौर्व्यामित्यर्थः । सदृशे तु । स्वगुणैरिति भावः । पक्षे महत्तरत्वादिति भावः । भुजंगे खिङ्गे । पक्षे सर्पे । अर्पितकोटिः । दत्तकोटिसंख्याकवसुरित्यर्थः । पक्षे दत्ताग्रभागा । हरचापयष्टिरिव

प्रणमति नमस्करोति । पक्षेऽत्यन्तं नम्रीभवति । एवं च सामान्यवनितात्वेन द्रव्यमात्रेच्छयेयं स्वासदृशं नायकं न भजतीति भावः । एवं च द्रव्यवत्तामात्रेण त्वया गर्वो न विधेय इति व्यज्यते ॥

नायिकासखी नायकं वक्ति—

सर्वसहां महीमिव विधाय तां बाष्पवारिभिः पूर्णाम् ।
भवनान्तरमयमधुना संक्रान्तस्ते गुरुः प्रेमा ॥ ६४४ ॥

**सर्वसहामिति** । अत्र संबुद्धिपदानुपादानं क्रोधवत्तामावेदयति । सर्वसहाम् । त्वत्कृतसर्वापराधसहनशीलामित्यर्थः । पक्षे तदभिधानाम् । बाष्पजलपरिपूर्णाम् । पक्षे जलपूर्णाम् । महीमिव तां विधाय तेऽयं गुरुः श्रेष्ठः । पक्षे बृहस्पतिः । प्रेमाधुना भवनान्तरम् । नायिकान्तरमित्यर्थः । पक्षे राश्यन्तरमित्यर्थः । संक्रान्तः । एवं च त्वदीयसर्वापराधसहनशीलां रुदतीमेतामतिसरलां विहायान्यत्रासक्तिं करोषीति त्वादृशोऽन्यो न दुष्टतर इति व्यज्यते । तेन च त्वयेत्थं न विधेयमिति । बृहस्पतिचलने चातिवृष्टिर्भवतीति ज्योतिःशास्त्रसिद्धान्तः ॥

कश्चित्कंचिद्वक्ति—

संभवति न खलु रक्षा सरसानां प्रकृतिचपलचरितानाम् ।
अनुभवति हरशिरस्यपि भुजंगपरिशीलनं गङ्गा ॥ ६४५ ॥

**संभवतीति** । सरसानां शृङ्गाररसवतीनाम् । पक्षे रसो जलम् । स्वभावचञ्चलाचरणानाम् । पक्षे चरितं वर्त्म । रक्षणं न संभवति । कुत इत्यत आह—हरशिरस्यपि । किमुतान्यत्रेति भावः । गङ्गा । एवं चैतादृशाकर्तव्यता नोचितेति व्यज्यते । भुजगपरिशीलनम् । अथ च खिङ्गसंभोगम् । अनुभवति । एवं चातिरक्षणादेः सत्त्वादेतस्याः सङ्गः कथं भविष्यतीति मनसि न कापि चिन्ता त्वया विधेयेति व्यज्यते ॥

बहुनायकावल्लभं स्वयं वाञ्छन्तीं कांचित्काचिद्भङ्ग्यन्तरेण वक्ति—

सुलभेषु कमलकेसरकेतकमाकन्दकुन्दकुसुमेषु ।
वाञ्छति मनोरथान्धा मधुपी स्मरधनुषि गुणाभावम् ॥ ६४६ ॥

**सुलभेष्विति** । कमलप्रभृतीनि यानि कुसुमानि तेष्वनायासलभ्येषु सत्सु मनोरथेनान्धा मधुपी मदनधनुषि मौर्वीभावम् । अथ चाप्रधानभावम् । वाञ्छति । कुसुमपदेन परिमले बहुलत्वं व्यज्यते । मधुपीपदेनाज्ञत्वं द्योत्यते । मदनधनुषी-

त्यनेन मदनस्याप्येतत्करणक एव जगज्जय इति प्रतिपादनेन लावण्यपुरुषार्थातिशयशालित्वं नायके व्यज्यते। तेन चानेककामिनीवल्लभत्वं द्योत्यते। एवं च सुलभसमीचीनपुरुषान्विहाय तादृशपुरुषे समासक्तौ क्रियमाणायामेतस्यातिगुणवत्कामिनीनां वाहुल्यात्तन्मध्ये एतस्या अप्रधानभाव एव स्यादिति व्यज्यते॥

कान्चित्कांचिद्वक्ति—

सा लज्जिता सपत्नी कुपिता भीतः प्रियः सखी सुखिता।
बालायाः पीडायां निदानिते जागरे वैद्यैः॥ ६४७॥

**सेति**। वैद्यैर्बालायाः पीडायां जागरे निदानिते। एतस्याः पीडायां जागरणमेव निदानमित्यगदंकारैर्निश्चित्योक्त इत्यर्थः। सा बाला लज्जिता। सुरतादिक्रीडाज्ञानादिति भावः। सपत्नी कुपिता। कथं प्रियतमोऽस्यामेतादृशासक्तिमान्संवृत्त इति धियेति भावः। प्रियो भीतः। मत्कृतापराधज्ञानं गृहिण्या जातमिति धियेति भावः। सखी। अर्थाद्बालायाः। सुखिता। स्वसखीसौभाग्यप्राकट्यादिति भावः। एवं च भर्तृसमीपगमने सम्यगेव भवतीति व्यज्यते॥

विदेशादागते प्रेयसि मानकारिणीं नायिकां सखी समुपदिशति—

सुचिरागतस्य संवाहनच्छलेनाङ्गमङ्गमालिङ्ग्य।
पुष्यति च मानचर्चां गृहिणी सफलयति चोत्कलिकाम्॥६४८॥

**सुचिरेति**। गृहिणी अत्यन्तचिरकालगतस्य। दयितस्येति भावः। संवाहनमिषेणाङ्गमङ्गमालिङ्ग्य मानम्। अवधिदिवसानागमनसंजातमिति भावः। पुष्यति च। 'मानगर्वम्' इति पाठे सर्वो द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावः। गर्वं स्वोत्कर्षाभिमानं पुष्यति च। उत्कण्ठां च सफलयति। सुचिरागतस्येत्यनेन संवाहनौत्कण्ठ्यौचित्यमावेद्यते। गृहिणीपदेनान्यासामीदृशी रीतिरिति व्यज्यते। एवं च या गृहिणी भवति तस्यास्त्वेतादृशी रीतिरत एतादृशानाचरणे तव गृहिणीत्वमेव न स्यादतो नायकसेवापुरःसरमेव मानादिकं विधेयमिति व्यज्यते। तेन च संवाहनच्छलेन मानसंगोपनमपि कर्तुं शक्यं सरलत्वसंरक्षणं चेति॥

नायिकादूती नायकं वक्ति—

सा सर्वथैव रक्ता रागं गुञ्जेव न तु मुखे वहति।
वचनपटोस्तव रागः केवलमास्ये शुकस्येव॥ ६४९॥

**सेति**। अत्र संबुद्धिपदानुपादानं दूतीगतक्रोधमावेदयति। स च नायका

पराधम् । सा मत्सखी सर्वप्रकारेणैव रक्तानुरक्ता । त्वयीति भावः । एवकारेण सर्वथान्यथा नाशङ्कनीयमिति व्यज्यते । पक्षे सर्वतो रक्तरूपवती । रागं प्रीतिम् । लौहित्यं गुञ्जेव मुखे न वहति । वचनकुशलस्य । एवं च परप्रतारणनिपुणत्वमावेद्यते । पक्षे शब्दोच्चारणनिपुणस्य तव शुकस्येवास्ये केवलं रागः प्रीतिः । पक्षे लौहित्यम् । एवं च सा सर्वात्मना त्वय्यनुरागवती परंतु केवलं न मुखेनानुरागप्रकटनं करोतीति तादृशी न काचिदन्या सरला । त्वं तु केवलं मुखेनैव प्रीतिमाविष्करोषि, अतस्तु शठ इति व्यज्यते । तेन च कथं त्वद्वचनं मया विश्वसितव्यमिति ॥

काचित्कांचिच्छिक्षयति—

सायं कान्तभुजान्तरपतिता रतिनीतसकलरजनीका ।
उषसि ददती प्रदीपं सखीभिरुपहस्यते बाला ॥ ६५० ॥

**सायमिति** । सायं संध्यासमये कान्तस्य भुजयोर्मध्ये पतिता । मध्यपदेन निःसारणानर्हत्वं व्यज्यते । पतितेत्यनेन तस्या नापराध इति ध्वन्यते । रत्या नीता निखिला रात्रिर्यया । एवं च कान्तभुजान्तरपतने रतेर्निवारणाशक्यतया तस्या नापराध इति भावः । प्रातः प्रदीपं ददती । रात्र्यपगमाज्ञानादिति भावः । उपसर्गेण बहुलतैलादिदानेनेदानीमेव सायंतनसमयः संवृत्त इति ज्ञानवत्त्वमावेद्यते । सा बाला सखीभिरुपहस्यते । एवं च गृहकृत्यं यामिनीप्रथमयाम एव विधाय पश्चात्कान्तसदनं प्रविशेति ध्वन्यते ॥

नायको दूतीं वक्ति—

सा तीक्ष्णमानदहना महतः स्नेहस्य दुर्लभः पाकः ।
त्वां दर्वीमिव दूति प्रयासयन्नस्मि विश्वस्तः ॥ ६५१ ॥

**सेति** । हे दूति, स तीक्ष्णो मानरूपो वह्निर्यस्या एतादृशी बहुलस्य स्नेहस्य प्रीतेः । अथ च तैलस्य । पाकः परिपाको दुर्लभो भवति । दर्वीमिव त्वां प्रयासयन्गमनागमनव्यापारशालिनीं कुर्वन् । पक्षे आलोडयन् । विश्वासं प्राप्तोऽस्मि । अत्यन्तमानशालिन्यास्तस्याः स्नेहावस्थितिर्दुर्लभा परंतु त्वदीयपरिश्रमेण सा भवित्रीति भावः । एवं च त्वदेकसाध्या तत्प्रीत्यवस्थितिरिति व्यज्यते । तीक्ष्णाग्नौ बहुतरस्नेहपरिपाकोऽपि दर्वीचालनं विना दुर्लभो भवति ॥

काचित्कांचिदन्योक्त्या वक्ति—

स्नेहक्षतिर्जिगीषा समरः प्राणव्ययावधिः करिणाम् ।
न वितनुते कमनर्थं दन्तिनि तव यौवनोद्भेदः ॥ ६५२ ॥

**स्नेहेति** । हे दन्तिनि, तव तारुण्योद्गमः प्रीतिनाशः, जेतुमिच्छा, प्राणनाशावधिः सङ्ग्रामः, इति कमनर्थं गजानां न वितनुते । अपि तु सर्वम् । एवं च त्वन्निमित्तं तरुणानां परस्परं स्नेहनाशादि भवतीति व्यज्यते । तेन च त्वमत्यन्तसुभगेति ॥

काचित्कांचिद्वक्ति—

सदनादपैति दयितो हसति सखी विशति धरणिमिव बाला ।
ज्वलति सपत्नी कीरे जल्पति मुग्धे प्रसीदेति ॥ ६५३ ॥

**सदनादिति** । मुग्धे, प्रसीदेति शुके जल्पति सति प्रियो गृहाद्गच्छति । गृहिणीक्रोधभयादिति भावः । सखी हसति । कथमिदानीं मत्सख्यधीनतामापन्न इति धियेति भावः । तोषादिति वा भावः । बाला । एवं च लज्जायोग्यत्वं व्यज्यते । धरणिमिव विशति । लज्जावशादिति भावः । सपत्नी ज्वलति । द्वेषवशान्मानवशाद्वेति भावः । एवं चैतादृशाचरणमत्यन्तं सम्यगिति व्यज्यते ॥

नायको वक्ति—

संकुचिताङ्गीं द्विगुणांशुकां मनोमात्रविस्फुरन्मदनाम् ।
दयितां भजामि मुग्धामिव तुहिन तव प्रसादेन ॥ ६५४ ॥

**संकुचितेति** । हे हिम, तव प्रसादेन संकुचिताङ्गीं द्विगुणवस्त्रां चित्तमात्रे विस्फुरन्मदनो यस्यास्तां दयितां मुग्धामिव भजामि । एवं च यद्वशात्प्रौढापि नवोढेव भवतीति व्यज्यते । तेन च त्वत्तुल्यो नान्यः कश्चिन्मदुपकर्तेति । नवोढाप्यङ्गसंकोचादिमती भवति ॥

दूती नायिकां वक्ति—

सखि लग्नैव वसन्ती सदाशये महति रसमये तस्य ।
वाडवशिखेव सिन्धोर्न मनागप्यार्द्रतां भजसि ॥ ६५५ ॥

**सखीति** । हे सखि । एवं च हितोपदेशार्हत्वं ध्वन्यते । तस्य महति प्रशस्ते । एवं चान्यकृतापराधसंगोपनकारित्वं द्योत्यते । पक्षे गभीरे । रसमये

प्रीतिप्रचुरे । पक्षे रसो जलम् । आशयेऽन्तःकरणे । पक्षेऽभ्यन्तरे । सिन्धोराशये वडवार्चिरिव निरन्तरं लग्नैव वसन्ती मनागप्यार्द्रतां स्निग्धताम् । पक्षे सजलतां न भजसि । एवं च स तु त्वय्यत्यन्तमासक्तः, त्वं तु रूक्षतामेव भजसीत्यनुचितं तवेदमिति ध्वन्यते ॥

नायिका दूतीं वक्ति—

सखि मिहिरोद्गमनादिप्रमोदमपिधाय सोऽयमवसाने ।
वन्ध्योऽवधिवासर इव तुषारदिवसः कदर्थयति ॥ ६५६ ॥

**सखीति** । हे सखि । एवं चैतादृशसंबुद्ध्या तुष्टा झटिति कार्यं करिष्यतीत्यतो दूतीपदानुपादानम् । सूर्योद्गमनप्रभृति सुखमाच्छाद्य । 'मिहिरोदयसमयप्रमोदम्' इति क्वचित्पाठः । वन्ध्यो निष्फलः । नायकागमनाभावात् । अवधिवासर इव सोऽयं हिमदिवसः समाप्तौ कदर्थयति । यथावधिदिवसे प्रातरद्यायास्यति दयित इत्यानन्दः सायं च प्रियतमानागमे प्रातःकालीनसुखोपमर्देनात्यन्तं दुःखं भवति तथा हिमदिवसे प्रातः सूर्यरश्मिभिः संजातं सुखं दूरीकृत्य सायंतनसमये शीत-दुःखमत्यन्तं भवतीति भावः । एवं च रात्रिरियमत्यन्तदीर्घा नैकाकितयातिवाहयितुं शक्येत्यतः संयोजयान्यनायकेन मामिति ध्वन्यते । यद्वा तुषारदिवस इवावधिदि-वसोऽवसाने कदर्थयति । एवं चैतावत्कालं मया प्राणा निरुध्य स्थापिताः, इदानीं दयितानागमननिर्णये नैते मया निरोद्धुं शक्या अत एतद्रक्षणं यथा भवति तथा यतस्वेति सखीं प्रत्युक्तिः । एवं चाग्रेऽन्यादृशाचरणे नाहं भवत्या निषेधनी-येति व्यज्यते ॥

दूती नायिकां वक्ति—

सुरभवने तरुणाभ्यां परस्पराकृष्टदृष्टिहृदयाभ्याम् ।
देवार्चनार्थमुद्यतमन्योन्यस्यार्पितं कुसुमम् ॥ ६५७ ॥

**सुरेति** । परस्पराकृष्टदृष्टिचित्ताभ्याम् । 'चक्षूरागः प्रथमं तदनु चित्तासङ्गः' इत्युक्तत्वात्प्रथमं दृष्ट्युपादानम् । तरुणाभ्यां देवालये देवपूजार्थमुद्यतं कुसुमं परस्परस्यार्पितम् । सुरभवन इत्यनेनावश्यकधर्माधर्मविवेककरणौचित्यमावेद्यते । जनसंमर्दो वा । तेन च तदगणनेन साहसातिशयः । देवार्चनार्थमुद्यतमित्यनेन मनुष्यादेर्दातुमयुक्तमित्यावेद्यते । तेन च परलोकभ्रंशभीतिशून्यत्वम् । कुसुममित्ये-कवचनेन बहूनां कुसुमानां सत्त्वेऽन्येनापि देवार्चनस्य संपादयितुं शक्यतया न

तथा दोषः, तदभावे चैतादृशाचरणेऽत्यन्तमज्ञत्वं व्यज्यते । तेन च प्रीत्यतिशयः। एकवचनमविवक्षितमिति ऋजवः । एवं चैतादृशी रीतिः, अतस्त्वयापि भीति-मुत्सृज्य यथेष्टाचरणं विधेयमिति ध्वन्यते ॥

संजातोऽयं संकेतकाल इति काचित्कांचिद्वक्ति—

सायं कुशेशयान्तर्मधुपानां निर्यतां नादः ।
मित्रव्यसनविषण्णैः कमलैराक्रन्द इव मुक्तः ॥ ६५८ ॥

**सायमिति** । सायं निर्गच्छताम् । भावकमलसंकोचभियेति भावः । मधु-पानाम् । एवं चोन्मत्तत्वं ध्वन्यते । कमलान्तर्नादो मित्रस्य सूर्यस्य । विकासक-त्वान्मित्रत्वम् । व्यसनमतस्तेन खिन्नैः कमलैराक्रन्द इव मुक्तः । एवं च नायकः संकेतोत्सवेन वयस्यैः सह मधु पीत्वा कामबाधाव्यसनमनुप्राप्त आस्ते, इदं तु मित्रदुःखदुःखितैस्तद्वयस्यैरेवाभिहितम्, अतस्त्वरय संकेतकाल एव झटिति तत्र गन्तुमिति व्यज्यते ॥

नायको वक्ति—

सुमहति मन्युनिमित्ते मयैव विहितेऽपि वेपमानोरुः ।
न सखीनामपि रुदती ममैव वक्षःस्थले पतिता ॥ ६५९ ॥

**सुमहतीति** । मयैव । एवं च नान्यस्यापराध इति व्यज्यते । अत्यन्तमहत्तरे मन्युकारणे विहितेऽपि कम्पमानोरू रुदती ममैव हृदयस्थले । स्थलपदं विशालतां गमयति । यद्वा कृत्रिममपि समाधानं न कृतं मयेति व्यज्यते । सुप्ता । न सखी-नामपि । सखीपदं वक्षःस्थलस्यापयोग्यतां गमयति । अपिस्तस्मिन्नावश्यकतामावेद-यति । यद्वा न सखीनामपि । सपत्नीनामित्यर्थः । समक्षमित्यध्याहारः । मयैव मन्युनिमित्ते विहितेऽपीत्यादि प्राग्वत् । एवं च सपत्नीसमक्षकृतापराधस्यातिदुः-खदत्वमिति भावः । अथवा सखीनामपि । अपिर्नायिकां समुच्चिनोति । मन्यु-निमित्ते मयैव विहिते मम वक्षःस्थल एव न पतितेति काकुः । स्थल एवेत्यनेना-त्यन्तसरलत्वं व्यज्यत इत्यर्थः । एवं च मदङ्गनातुल्या नान्याङ्गनेति ध्वन्यते ॥

काचित्कांचिद्वक्ति—

सुभग व्यजनविचालनशिथिलभुजाभूदियं वयस्यापि ।
उद्वर्तनं न सख्याः समाप्यते किंचिदपगच्छ ॥ ६६० ॥

**सुभगेति** । हे सुभग । एतादृशाङ्गनासमासक्तिमत्त्वादिति भावः । इयं वय-

स्यापि । एवं च दास्यादेः का वार्तेति भावः । व्यजनस्य विशेषचालने शिथिलह-स्ताभूत् । एवं च शनैर्व्यजनचालने न किमपि भवतीति भावः । सख्या उद्वर्तनं न समाप्यते । सात्त्विकभावरूपस्वेदातिशयादिति भावः । किंचिदितोऽपसर । किंचिदित्यनेन दूरगमने दुःखं सख्या भविष्यतीति ध्वन्यते । एवं चेयमत्यन्तं त्वय्यासक्तेति ॥

नायिकासखी नायकं वक्ति—

सव्रीडा नखरदनार्पणेषु कुपिता प्रगाढमचिरोढा ।
बहुयाच्ञाचरणग्रहसाध्या रोषेण जातेयम् ॥ ६६१ ॥

**सव्रीडेति** । सलज्जा प्रगाढं नखक्षतदन्तक्षतेषु । कृतेष्वित्यर्थः । कुपितेयं नवोढा । एवं च नखक्षतादिना कोपौचित्यं ध्वन्यते । रोषेण । त्वदीयेनेत्यर्थः । बहुचाटुवचनप्रणिपातसमाधेया जाता । एवं च नवोढात्वेन दन्तक्षताद्यसहनेन कुपितायां नायिकायां तव क्रोधकरणमनुचितमिति भावः । एवं चेदानीं चाटुवच-नादिनास्याः कोपमपनय त्वमिति व्यज्यते । तेन च तवैवायमपराध इति ॥

कश्चित्कंचिद्वक्ति—

सुगृहीतमलिनपक्षा लघवः परभेदिनः परं तीक्ष्णाः ।
पुरुषा अपि विशिखा अपि गुणच्युताः कस्य न भयाय ॥ ६६२ ॥

**सुगृहीतेति** । सम्यग्गृहीतो दुष्टानां पक्षोऽङ्गीकारो यैः । इत्यनेन त्यागान-र्हत्वं व्यज्यते । तेन चोपदेशानर्हत्वम् । पक्षे झटिति निष्कासनानर्हश्यामपक्षवन्त इत्यर्थः । लघवो नीचाः । पक्षेऽल्पपरिमाणवन्त इत्यर्थः । परान्भेदयन्ति ते । अन्येषां परस्परभेदजननेन कलहप्रवर्तका इत्यर्थः । पक्षे इतरच्छेदकारकाः । तीक्ष्णाः । क्रूरकर्माण इत्यर्थः । पक्षे यथाश्रुतम् । पुरुषा अपि बाणा अपि गुण-च्युताः साधुत्वादिगुणहीनाः । पक्षे गुणो ज्या । कस्य न भयाय । अपि तु सर्वस्य भयायेति भावः । एवं चैतादृशपुरुषसंगतिकरणमनुचितमिति व्यज्यते ॥

दुष्टस्य किमपि कर्म न सम्यक्फलायेति कश्चिद्वक्ति—

स्वकपोलेन प्रकटीकृतं प्रमत्तत्वकारणं किमपि ।
द्विरदस्य दुर्जनस्य च मदं चकारैव दानमपि ॥ ६६३ ॥

**स्वेति** । स्वस्य कपोलेन प्रकटीकृतम् । दानस्य ततोऽप्युत्पत्तेरिति भावः ।

अथ च स्वमुखेनाभिहितं मया दानं कृतमिति । किमप्यनिर्वचनीयं प्रकृष्टमत्तत्वकारणम् । दानमपि । अपिनान्यकर्मणः का वार्तेति भावः । गजस्य खलस्य च मदमेव चकार । एवं च खलसंगतिरनुचितेति व्यज्यते ॥

नायकस्य मौढ्यादियमपि मूढैवेति मन्वानमुपपत्तिं दूती वक्ति—

सत्यं पतिरविदग्धः सा तु स्वधियैव निधुवने निपुणा ।
मार्त्तिकमाधाय गुरुं धनुरधिगतमेकलव्येन ॥ ६६४ ॥

**सत्यमिति** । पतिरचतुर इदं सत्यम् । अत एव पतिपदं साभिप्रायम् । सा तु स्वबुद्ध्यैव सुरते निपुणा । एनमेवार्थमर्थान्तरन्यासेन द्रढयति—मृत्स्वरूपं गुरुं संस्थाप्यैकलव्यनाम्ना निषादेन धनुरधिगतम् । एवं च 'उपदेशक्रमो राम व्यवस्थामात्रपालनम् । ज्ञप्तेस्तु कारणं तात शिष्यप्रज्ञैव केवलम् ॥' इति वसिष्ठवचनात् । मार्त्तिकं द्रोणाचार्यं विधायैकलव्येन धनुर्विद्याभ्यस्तेति भारते । एवं च तस्यामचातुर्यं नाशङ्कनीयं त्वयेति ध्वन्यते ॥

नायकदूती नायिकां वक्ति—

सौभाग्यमानवान्स त्वयावधीर्यापमानमानीतः ।
स्वं विरहपाण्डिमानं भस्मस्नानोपमं तनुते ॥ ६६५ ॥

**सौभाग्येति** । सौभाग्याभिमानवान्स त्वयावगणय्यापमानं प्रापितः । भस्मस्नानसदृशं स्वं स्वकीयं विरहपाण्डिमानम् । क्वचित् । 'तव' इति पाठः । तनुते । यथा कश्चिदभिमानी अवगणितः सर्वाङ्गे भस्म संस्राव्य सर्वं परित्यज्य दुःखवशात्तिष्ठति तथायं त्वद्विरहरूपभस्मस्नानं करोति, अत एनं प्रसन्नीभूयाङ्गीकुर्विति व्यज्यते ॥

काचित्कांचिद्वक्ति—

सखि मम करञ्जतैलं बहुसंदेशं प्रहेष्यसीत्युदिता ।
श्वशुरगृहगमनमिलितं बाष्पजलं संवृणोत्यसती ॥ ६६६ ॥

**सखीति** । हे सखि । एवं चोपदेशार्हत्वं व्यज्यते । बहूनां संदेशो यत्र । बहुतररोगिप्रार्थ्यमानमित्यर्थः । एवं चावश्ययाचनीयत्वप्रेषणीयत्वे व्यज्येते । अथ च बहुतरकामुकसंकेतविषयमित्यर्थः । एवंविधं करञ्जतैलं प्रहेष्यसीत्युक्ता श्वशुरसद्मगमनावसरसंजातबाष्पजलमसतीति संवृणोति । एवं च तत्रापि मया करञ्जवृक्ष-

संकेतं विधाय कामुकस्त्वदर्थं प्रेषणीय इति न कापि त्वया चिन्ता विधेयेति ध्वन्यते। एवं च गृहपदं सार्थकम् । बहूनां सम्यग्देशरूपमिलनेन निगूढतया यथेच्छसुरत-योग्यत्वं ध्वन्यते ॥

कथं मयैतादृशसमये समागन्तुं शक्यमित्याशङ्क्य दूती नायिकां वक्ति—

संदर्शयन्ति सुन्दरि कुलटानां तमसि विततमषिकल्पे ।
मौलिमणिदीपकलिका वर्तिनिभा भोगिनोऽध्वानम् ॥ ६६७॥

**संदर्शयन्तीति** । हे सुन्दरि, विततमषीतुल्ये तमसि मस्तकमणय एव दीप-कलिका येषां ते वर्तितुल्या भोगिनः सर्पाः कामुकाश्च मार्गं सम्यग्दर्शयन्ति । एवं च सर्पफणामणिसंजातप्रकाशेनैव तवाध्वज्ञानं भविष्यतीत्यतो मार्गज्ञानाभावशङ्का-मपास्य कार्यं साधयेति ध्वन्यते । अथवा नायका एव मस्तकस्थमणिप्रकाशैर्मार्ग-मादर्शयन्तीत्यनेन नातः परं मयात्रागन्तव्यं किं तु नायक एव त्वामागत्य संकेतं प्रापयिष्यतीति ध्वन्यते ॥

दुष्टस्योत्कर्षेऽन्येषां क्लेशवत्त्वैव भवतीति कश्चित्कंचिदन्योक्त्या वक्ति—

सर्वं वनं तृणाल्या पिहितं पीताः सितांशुरवितारा: ।
प्रध्वस्ताः पन्थानो मलिनेनोद्गम्य मेघेन ॥ ६६८ ॥

**सर्वमिति** । मलिनेन मेघेनोद्गम्य सर्वं वनं वनस्थलं तृणपङ्क्त्याच्छादितम् । सितांशुरवितारा: पीता आच्छादिताः । मार्गाः प्रध्वस्ताः । वनमित्यनेन विश्रान्ति-दातृत्वप्रतिपादनात्सितांशुरित्यनेन सौम्यत्वव्यञ्जनाद्रविरित्यनेन निखिलकर्मप्रवर्तक-त्वध्वननात्तारयन्तीति व्युत्पत्त्या तारा इत्यनेन सद्बुद्धिदातृत्वद्योतनात्पन्थान इत्य-नेनावश्यरक्षणीयत्वदर्शनादेतादृशपुरुषापकारकरणादसमीचीनत्वाविष्करणेन दुष्टपुरु-षोदयाशंसनमप्यनुचितं किं पुनस्तत्संपादनमिति व्यज्यते ॥

झटिति मन्त्रो न प्रकाश्य इति कश्चित्कंचिद्वदति—

सम्यगनिष्पन्नः सन्योऽर्थस्त्वरया स्वयं स्फुटीक्रियते ।
स व्यङ्ग एव भवति प्रथमो विनतातनूज इव ॥ ६६९ ॥

**सम्यगिति** । सन् । समीचीनोऽपीत्यर्थः । सम्यक्संपूर्णमसंजातो योऽर्थ-स्त्वरया स्वयं प्रकटीक्रियते । स्वयमित्यनेनान्येन प्रकटीकरणे सिद्ध्यैवायं वक्ति

नास्माभिरेवं विचारितमिति समाधातुं शक्यमित्यावेद्यते। आद्यो विनताया गरुड-जनन्यास्तनूजोऽरुणस्तद्वत्स व्यङ्ग एव। एवकारेणान्यथाबुद्धिकरणानर्हत्वं ध्वन्यते॥

कश्चित्कंचिद्वक्ति—

सज्जन एव हि विद्या शोभायै भवति दुर्जने मोघा।
न विदूरदर्शनतया कैश्चिदुपादीयते गृध्रः॥ ६७०॥

**सज्जनेति**। समीचीनजन एव विद्या शोभार्थं भवति। फलदा भवतीत्यर्थः। दुर्जने निष्फला। अमुमेवार्थमर्थान्तरन्यासेन द्रढयति—अत्यन्तदूरदर्शित्वेन गृध्रः कैश्चिन्नोपादीयते। एवं च विद्यावत्त्वेऽपि त्वया दुर्जनत्वं न विधेयमिति व्यज्यते। एवकारेणैव न दुर्जन इत्यर्थप्रतीतौ दुर्जनेत्यादि निरर्थकमिवाभाति। यद्वा शोभायैवेति योजना। विद्या सज्जने शोभाप्रदा न धनप्रदेत्यर्थः। दुर्जने मोघा फलत्वावच्छिन्नताजनिका। शोभाप्रदापि नेत्यर्थः। अथवा सज्जने विद्यैव शोभायै फलप्रदा न त्वविद्येत्यर्थः। दुर्जने विद्यैव मोघा निष्फला न त्वविद्येत्यर्थः॥

समीचीनस्वनायक एव रुचिरुचितेति वादिनीं कांचित्काचिद्वक्ति—

सुभगं वदति जनस्तं निजपतिरिति नैष रोचते मह्यम्।
पीयूषेऽपि हि भेषजभावोपनते भवत्यरुचिः॥ ६७१॥

**सुभगमिति**। जनः। एवं च सर्वैकवाक्यत्वमावेद्यते। तं सुभगं वदति। मह्यं निजपतिरिति हेतोरेष पतिर्न रोचते। अमुमेवार्थमर्थान्तरन्यासेनाह—भेषजभावापन्नेऽमृतेऽपि निश्चयेनारुचिर्भवति। एवं च निजपतित्वमेव दोष इति भावः। एवं च पतिपदमर्थवत्। अत्र न रोचते इति प्रागभिधानादग्रेऽपि रुचिर्न भवतीत्येव युक्तमित्याभाति। अरुचिपदाद्द्वेषवत्त्वप्रतीतेः॥

त्वत्कटाक्षविक्षेपाक्षिप्तः क्षणमपि न त्वां विना धृतिं लभत इति नायकदूती नायिकां वक्ति—

सौधगवाक्षगतापि हि दृष्टिस्तं स्थितिकृतप्रयत्नमपि।
हिमगिरिशिखरस्खलिता गङ्गेवैरावतं हरति॥ ६७२॥

**सौधेति**। सौधगवाक्षगतापि ते दृष्टिः स्थितौ। धैर्यस्येति भावः। पक्षे गतिनिवृत्तौ। कृतः प्रयत्नो येन तमपि हीति निश्चयेन हिमाचलशिखरात्स्खलिता गङ्गा

ऐरावतमिव हरति। सौधस्य हिमगिरिशिखरसाम्येनात्युच्चत्वं दुष्प्राप्यत्वं च व्यज्यते। एवं च स त्वयानुग्राह्य इति ध्वन्यते॥

गृहिणीसत्त्वाच्च त्वया सह संगतिर्मम चिरस्थायिनीति वादिनीं नायिकां नायको वक्ति—

सहधर्मचारिणी मम परिच्छदः सुतनु नेह संदेहः।
न तु सुखयति तुहिनदिनच्छत्रच्छायेव सज्जन्ती॥ ६७३॥

**सहेति**। हे सुतनु। एवं च स्पृहणीयत्वं व्यज्यते। मम सहधर्मचारिणी परिच्छदः कुटुम्बकम्। अन्नाच्छादनादिनोपकरणीयेति भावः। इह न संदेहः। तु पुनः सज्जन्ती सेवातत्परा। पक्षे सज्जीभवन्ती। शीतदिवसीयच्छत्रच्छायेव न सुखयति। एवं च सा केवलं कुटुम्बिनीमात्रं त्वं तु रतिसुखदेत्यतस्त्वया सह मत्संगतिश्चिरमवस्थायिनीति व्यज्यते॥

दुष्टसंपर्कात्त्वन्निकटे न केऽपि समीचीनाः समायान्तीति कश्चित्कंचिदन्योक्त्या वक्ति—

सकलगुणैकनिकेतन दानववासेन धरणिरुहराज।
जातोऽसि भूतले त्वं सतामनादेयफलकुसुमः॥ ६७४॥

**सकलेति**। हे निखिलगुणैकस्थान भूरुहराज, दानववसत्या त्वं भूतले समीचीनानां न ग्राह्याणि फलकुसुमानि यस्यैतादृशो जातोऽसि। भूतले त्वमिल्यनेन नान्ये महीरुहा एतादृशाः किं तु त्वमेवेति भावः। एवं चैतादृशदुष्टसंगत्या सजातीयवृद्धमध्ये त्वया प्रतिष्ठा न विधेयेति व्यज्यते॥

नायको नायिकां वक्ति—

सुन्दरि ताटङ्कमयं चक्रमिवोद्वहति तावके कर्णे।
निपतति निकामतीक्ष्णः कटाक्षबाणोऽर्जुनप्रणयी॥ ६७५॥

**सुन्दरीति**। हे सुन्दरि, त्वदीये कर्णे ताटङ्कस्वरूपं चक्रमिवोद्वहति धारयति सति। पक्षे ऊर्ध्वं करोति सति। अत्यन्ततीक्ष्णोऽर्जुनप्रणयी। कृष्ण इत्यर्थः। शुष्क इति वा। पक्षे पाण्डुसुतार्जुनप्रेरित इत्यर्थः। कटाक्षरूपो बाणः। नायकचित्तापहरणादिति भावः। पक्षे तत्तुल्यः। एवं चाकर्णान्तविशाललोचना त्वमसील्यन्यथासिद्धकुतूहलेन मानापनोदनमभिव्यज्यते। सूर्याराधनसंजातकुन्तीतनय-

कर्णोऽपि यदा महीगिलितरथचक्रं निष्कासितुमुपक्रान्तवांस्तदार्जुनेन बाणेन ताडितः—इति पुराणम् ॥

भाग्यादिकं समीचीनमित्रस्य नास्तीति चिन्ताव्याकुलं कंचन कश्चिद्वक्ति—

स्वाधीनैव फलर्द्धिर्जनोपजीव्यत्वमुच्छ्रयच्छाया ।
सत्पुंसो मरुभूरुह इव जीवनमात्रमाशास्यम् ॥ ६७६ ॥

**स्वेति** । मरुभुवि रोहतीति मरुभूरुहस्तस्येव मरुदेशीयवृक्षस्येव समीचीनपुरुषस्य फलं द्रव्यादि । पक्षे यथाश्रुतम् । तस्य समृद्धिः स्वाधीनैव । इदमग्रेऽपि लिङ्गविपरिणामेनान्वेति । जनानामुपजीव्यत्वम् । अन्नादिदातृत्वात् । पक्षे फलादिप्रदानात् । अधिका छाया । इतरदुःखनिवारकत्वमित्यर्थः । पक्षे यथाश्रुतम् । जीवनमायुः । पक्षे जलम् । तदेवाशास्यम् । कर्कशदेशवसतिमानेवमर्थेन मरुभूरुह इत्यपि सत्पुंसो विशेषणम् । एवं चायुष्ये सर्वमपि भवत्येवेत्यतस्त्वया न कापि जीवतस्तस्य चिन्ता विधेयेति ध्वन्यते ॥

संपत्तिसंपन्नस्तव पतिः संवृत्त इति वादिनीं नायिका सखीं वक्ति—

संतापमोहकम्पान्संपादयितुं निहन्तुमपि जन्तून् ।
सखि दुर्जनस्य भूतिः प्रसरति दूरं ज्वरस्येव ॥ ६७७ ॥

**संतापेति** । हे सखि, ज्वरस्येव दुर्जनस्य भूतिरैश्वर्यम् । पक्षे भवनं भूतिः । संतापमोहकम्पान्सम्यगुत्पादयितुं जन्तून्नितरां हन्तुमपि दूरं प्रसरत्यधिकतरा भवति । एवं चैतस्य संपत्तौ जातायां सपत्न्यादिसंपादनेन दुःखम्, किमस्याग्रे भविष्यतीति चिन्ताबाहुल्येन मौढ्यम्, समधिकक्रोधकरणेन कम्पम्, दण्डदानेन चास्माकं प्राणविश्लेषमेवैतदैश्वर्यं करिष्यति न परं सुखलेशमपीति व्यज्यते । ज्वरोत्पत्तावपि संतापादिकमतितरां भवतीति चायुर्वेदे ॥

विद्यैवाभ्यसनीया त्वयेदानीं न द्रव्ये मनः कर्तव्यमिति कश्चित्कंचिद्वक्ति—

सुखयतितरां न रक्षति परिचयलेशं गणाङ्गनेव श्रीः ।
कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापि ॥ ६७८ ॥

**सुखयतीति** । श्रीर्वेश्येवातिशयेन सुखयति । परिचयलेशं न रक्षति । सरस्वती कुलकान्तेव जन्मजन्मापि न त्यजति । एवं च विद्याभ्यास आवश्यक इति भावः ॥

नायिका सखीं वक्ति—

**स्वसदननिकटे नलिनीमभिनवजातच्छदां निरीक्ष्यैव ।**
**हा गृहिणीति प्रलपंश्चिरागतः सखि पतिः पतितः ॥ ६७९ ॥**

**स्वेति** । हे सखि, स्वसदनसविधे । एवं च च्छदग्रहणयोग्यत्वं ध्वन्यते । कमलिनीं नूतनसंजातदलाम् । एवं च पूर्वपत्राभावो नायिकाविरहनिबन्धन एवेति ध्वन्यते । दृष्ट्वैव । एवं च प्रश्नाद्यकरणेनातिशयिताधैर्यमावेद्यते । तत्कालमागतः । एवं च चिरप्रवासाभावेन तथाविधविरहाद्ययोग्यत्वेऽपि तदज्ञानेनात्यन्तासक्तिरावेद्यते । हा गृहिणि, इति प्रलपन् । संपूर्णवाक्यानभिधानं च दुःखोद्रेकमावेदयति । पतिः । प्राणेभ्योऽपि मयि स्नेहवानित्यर्थः । पतितः । मूर्च्छयेति भावः । यद्वा हे सखि, निलयनिकटे न तु निलये । एवं चातिविरहयोग्यत्वं ध्वन्यते नायिकायाम् । यद्वा निलयनिकट इत्यनेन दर्शनयोग्यत्वं तेन चावश्योच्छेदनीयत्वमावेद्यते । अभिनवानां नूतनानाम् । अर्थात्पत्राणाम् । जातः समूहो यत्र । एतादृशानि च्छदानि । अर्थात्पुराणानि यस्यां सा तां नलिनीं निरीक्ष्यैवाचिरागतः पतिर्हा गृहिणि, इति प्रलपन्पतितः । एवं च मत्प्रस्थितौ नियतमेषा विरहमसहमाना जीवनवती प्राचीननवीनदलसमृद्धिशालिनीं विहन्यादेव । न चेयं व्याहता । तेन न जीवतीयमिति नलिनीदर्शनसमसमयमेव निश्चयेन मूर्च्छित इति ध्वन्यते । अचिरागत इत्यनेनैतादृशसंभावनानर्हत्वं तथापि तत्करणेनात्यन्तनायिकासक्तिमत्त्वं नायके व्यज्यत इत्यर्थः । एवं चैतादृशो नायकोऽन्यस्या नेति भावः । क्वचित् 'नलिनीदलानि मलिनानि वीक्ष्यैव' इति पाठः ॥

नायकसखी नायिकां वक्ति—

**सखि चतुराननभावाद्वैमुख्यं क्वापि नैव दर्शयति ।**
**अयमेकहृदय एव द्रुहिण इव प्रियतमस्तदपि ॥ ६८० ॥**

**सखीति** । हे सखि, एवं च सत्यवादार्हत्वं ध्वन्यते । अयम् । एवं चान्येषामन्यादृशी गतिरिति भावः । प्रियतमो विधातेव चतुराननभावात्सुमुखत्वात् । चातुर्यवत्त्वादिति यावत् । पक्षे चतुर्मुखत्वात् । क्वापि वैमुख्यम् । विरसत्वमित्यर्थः । पक्षे मुखाभाववत्त्वं नैव दर्शयति । दर्शयत्येव नेत्यपि योजना । चतुराननभावादेवेत्यन्वयः । एवं च न चेतसः सकाशादिति भावः । तदपि तथापि एकस्याम् । त्वयीति भावः । हृदयं यस्यैतादृशः । एवं चान्यासु चातुर्यवशादासक्तिं प्रदर्शयति

वास्तवं तु त्वय्येवासक्तिरिति व्यज्यते। धातुरपि चतुर्मुखत्वेऽपि हृदयस्यैकत्वात्। यद्वा त्वत्प्रियतमः सर्वसपत्नीषु समबुद्धिरिति वादिनीं सखीं नायिका वक्ति—एवं च मय्येवासक्तिस्तस्य नान्यत्रेति ध्वन्यते॥

सुन्दरत्वादिगुणयुक्तः कथं न पराङ्गनासक्त इति तर्कयन्तीं नायिकां नायकसखी वक्ति—

सत्यं मधुरो नियतं वक्रो नूनं कलाधरो दयितः।
स तु वेद न द्वितीयामकलङ्कः प्रतिपदिन्दुरिव॥ ६८१॥

**सत्यमिति**। सः। इदमग्रेऽप्यन्वेति। मधुरः सुन्दरो मृष्टभाषी वा। इदं सत्यम्। नात्र संदेह इति भावः। एवमग्रेऽपि। एवं च स्पृहणीयत्वमावेद्यते। वक्रो नियतं वक्रोक्तिनिपुणः कुटिलो वा। एवं च पराङ्गनारञ्जकत्वं ध्वन्यते। कलाधरः। नूनं निश्चितम्। एवं च पराङ्गनाचित्ताकर्षणनिपुणत्वं व्यज्यते। दयितः। तु पुनः। कलङ्कोऽपवादस्तच्छून्यः प्रतिपच्चन्द्र इव द्वितीयामपरां न वेद। एवं च मधुरत्वादिगुणसत्त्वेऽपि न तादृगन्यः साधुरिति व्यज्यते। प्रतिपच्चन्द्रोऽपि मधुरो वक्रः कलावानपि निष्कलङ्को द्वितीयाभिधां तिथिं न जानाति। सत्यं नियतं नूनमेभिः पदैर्मधुरत्वादौ न संदेह इति प्रतिपादनेन तद्वत्त्वेऽपि तत्कार्याभाववत्त्वेनातिसद्वृत्तत्वं व्यज्यते। न च तस्मिन्यथाकथंचिदन्यादृगाचरणसंभावनया कोपकरणं तवोचितमिति प्रतियोगिविशेषानुपादानेन मधुरत्वादौ सर्वप्रतियोगिकत्वेन सर्वाधिक्यमावेद्यते। यद्वा सौन्दर्यादिगुणयुक्तस्त्वद्दयितः कथं नापराङ्गनालम्पट इति वादिनीं सखीं नायिका वक्ति—एवं चैतादृशनायकवत्तया स्वस्मिन्नाधिक्यमावेद्यते॥

दुर्जनस्य स्वीयपक्षरक्षणमपीति कश्चित्कंचिद्वक्ति—

स्वस्थानादपि विचलति मज्जति जलधौ च नीचमपि भजते।
निजपक्षरक्षणमनाः सुजनो मैनाकशैल इव॥ ६८२॥

**स्वेति**। स्वाङ्गीकृतरक्षणचित्तः सुजनो मैनाकाभिधपर्वत इव स्वस्थानादपि विचलति। अपिश्चलनानर्हत्वमावेदयति। परसदनं गच्छतीत्यर्थः। डलयोरैक्याज्जडा मूर्खा धीयन्ते यस्मिन्निति जडसमूहस्तत्रापि मज्जति। तद्रूपभाग्भवतीत्यर्थः। यद्वा समुद्रपर्यन्तमपि गच्छतीत्यर्थः। एवं च क्लेशागणनमावेद्यते। क्षुद्रमपि भजत आराधयति। एवं च सुजनो यदङ्गीकारं करोति तन्निर्वाहं स्वस्यानुचितैरपि

नानाविधोपायैः करोति न दुष्ट इति सुजनसंनिधिरेवोचित इति ध्वन्यते । पक्षच्छेदनप्रवृत्तेन्द्रभयान्मैनाकोऽपि पृथिवीं विहाय समुद्रे गत्वा तन्नीचदेशमप्यवलम्ब्य स्थितः—इति पुराणप्रसिद्धिः ॥

मानवतीं नायिकां सखी वक्ति—

संवृणु बाष्पजलं सखि दृशमुपरज्याञ्जनेन वलयैनाम् ।
दयितः पश्यतु पल्लवपङ्कजयोर्युगपदेव रुचम् ॥ ६८३ ॥

**संवृण्विति** । हे सखि । एवं च हितकथनार्हत्वं ध्वन्यते । तेन च मदुक्तं कुर्विति । बाष्पोदकं संवृणु । कज्जलेनोपरज्यैनां दृशं वलय । उत्तरङ्गयेत्यर्थः । दयितः । एवं चावश्यसमाधेयत्वमावेद्यते । किसलयेन्दीवरयोरेककालमेव रुचं पश्यतु । एवं च रोदनादिना रक्ततामापन्नाया दृशः कज्जलदानेन श्यामतासंपादनेन व्यधिकरणत्वेन प्रसिद्धयोरपि पल्लवेन्दीवरयोरैकाधिकरण्यसंपादनेन सर्वाद्भुतवस्तुप्रदर्शनजनितानन्ददानेन नय स्वाधीनतामिति भावः । 'दृशम्' इति स्थाने 'भृशम्', 'पल्लव–' इति स्थाने 'पल्वल–' इति पाठे भृशमधिरज्यैनां दृशमित्यध्याहार्य वलयेति योजना । अञ्जनदानेन पङ्कवत्तासंपादनेन पङ्कजसत्त्वयोग्यता । एवं च सरसि पङ्केरुहवत्ता प्रसिद्धा । पल्वलेऽपि तद्भवनेन चमत्कारातिशयप्रदर्शनेन नायकचित्ताकर्षकत्वं तव सुलभमिति ध्वन्यते । 'एनम्' इति पाठे नेत्रमित्यध्याहारः । नायकं वलय विलोकयेति वा योज्यम् । मानश्चायमन्यथासिद्धकुतूहलायपनेयः । 'पल्वलपङ्केरुहसङ्गसकलरुचम्' इत्यपि क्वचित्पाठः ॥

अत्यन्तं सा त्वद्विरहखिन्ना त्वदधीनैवेत्यवगत्यानुग्राह्या नायिकेति तत्सखी नायकं वक्ति—

सा पाण्डुदुर्बलाङ्गी नयसि त्वं यत्र याति तत्रैव ।
कठिनीव कैतवविदो हस्तग्रहमात्रसाध्या ते ॥ ६८४ ॥

**सेति** । एषा पाण्डूनि दुर्बलान्यङ्गानि यस्या एतादृशी । त्वद्विरहवशादिति भावः । त्वं यत्र नयसि तत्रैव याति । यास्यतीत्यर्थः । एवं चान्यविषयकप्रेमशून्यत्वमावेद्यते । कठिनीव कैतवविदः । एवं त्वदीय एवापराधो न तस्या इति भावः । यद्वा येन व्याजेन तत्र गत्वा तत्संमानं विधेयं तत्सर्वं त्वया विज्ञायते किं मयोपदेष्टव्यमिति भावः । ते हस्तग्रहमात्रसाध्या । एवं च चाटुवचनादिकं किमपि नापेक्षितमिति भावः । खटिकापि पाण्डुरवर्णा सूक्ष्मा लेखककरग्रहाधीना यत्र यत्र नीयते तत्र तत्र गच्छति ॥

कस्यचिद्दूती कांचन वक्ति—

सखि विश्वगञ्जनीया लक्ष्मीरिव कमलमुखि कदर्यस्य ।
त्वं प्रवयसोऽस्य रक्षावीक्षणमात्रोपयोग्यासि ॥ ६८५ ॥

**सखीति** । हे सखि, कदर्यस्य कृपणस्य विश्वोपमर्द्या लक्ष्मीरिव । एवं च पुरुषोत्तमसंगतियोग्यत्वं व्यज्यते । कमलवदने, त्वं प्रकृष्टं वयो यस्येत्येवंविधस्यास्य रक्षणं रक्षा वीक्षणं च तन्मात्रे उपयोगो यस्याः । कृपणलक्ष्मीरपि भोगाद्यभावात्तथाविधेति भावः । एतादृश्यसि । एवं चात्यन्तसौन्दर्यशालिनी त्वमेतस्य सुरताक्षमस्य जरठस्य नोपयोगिनी, अतः पुरुषविशेषे मनः कुर्विति व्यज्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता सकारव्रज्या ।

---

हकारव्रज्या ।

नायकः सखायं वक्ति—

हृदयज्ञया गवाक्षे विसदृक्षं किमपि कूजितं सख्या ।
यत्कलहभिन्नतल्पा भयकपटादेति मां सुतनुः ॥ ६८६ ॥

**हृदयेति** । कलहभिन्नशय्या सुतनुर्भयव्याजाद्यथा मां प्रत्येति तथा हृदयज्ञया नायिकाभिप्रायज्ञानवत्या सख्या गवाक्षे किमपि वक्तुमशक्यं विसदृशं कूजितम् । विसदृक्षमित्यनेन भययोग्यत्वम् । एवं च कलहोत्तरसंजातसंतापं नायिकाया विज्ञाय तथाविधविलक्षणकूजिते सख्या कृते भयव्याजेन मन्निकटे नायिकागतेति नायिकाकलहो नातिचिरावस्थायीति व्यज्यते ॥

सखी नायिकां वक्ति—

हरति हृदयं शलाकानिहितोऽञ्जनतन्तुरेष सखि मुग्धे ।
लोचनबाणमुचान्तर्भ्रूधनुषा किण इवोल्लिखितः ॥ ६८७ ॥

**हरतीति** । हे सखि मुग्धे सुन्दरि, शलाकया निहित एष कज्जलतन्तुः । तन्तुपदेन रेखायां तनीयस्त्वं व्यज्यते । लोचनरूपो यः शरस्तन्मोचनकर्त्रा भ्रूधनुषोल्लिखितः किण इव हृदयम् । अर्थान्नायकस्य । हरति । एवं चैतादृशत्वदीयदृगनुगृहीतो निगृहीत इव संवृत्तः, अत एनमनुकम्पया द्रुतमनुगृहाणेति व्यज्यते ।

अथवा मुग्धे सुन्दरे। नायक इत्यर्थः। 'मुग्धः सुन्दरमूढयोः' इति। लोचनवाणं मुग्धेति योजना प्राग्वत् ॥

क्रोधवशादपमानितं नायकं नायिका समाधत्ते—

हससि चरणप्रहारे तल्पादपसारितो भुवि स्वपिषि।
नासदृशेऽपि कृते प्रिय मम हृदयात्त्वं विनिःसरसि ॥६८८॥

**हससीति**। चरणताडने हास्यं करोषि। शयनीयाद्दूरीकृतो भूमौ स्वापं करोषि। असदृशेऽयोग्ये कृतेऽपि हे प्रिय, मम हृदयात्त्वं न विनिःसरसि। एवं च चरणप्रहारादिरूपानुचितावमानने क्रोधात्कृतेऽपि चेतसा त्वद्विषयकानुरागभागिन्येवाहमिति चरणताडनादिजन्यमदीयापराधमनादृत्यानुग्रहं कुर्विति व्यज्यते। यद्वा सपत्नीसांनिध्यरूपानुचिते विहितेऽपि। त्वयेति भावः। मम हृदयात्त्वं नापगच्छसि। अत्र हेतुमाह—चरणप्रहारे हससीत्यादि। एवं च त्वदीयैतादृशसहनशीलस्वरूपगुणाकृष्टचित्ततया त्वदीयैतादृशानुचिताचरणजनितक्रोधेन न मय्यवस्थितिर्लभ्यत इति व्यज्यते। तेन चाहमधुना त्वयि प्रसन्नेति ॥

नायके नायिकासक्तिविशेषं सखी वक्ति—

हसति सपत्नी श्वश्रू रोदिति वदनं च पिदधते सख्यः।
स्वप्नायितेन तस्यां सुभग त्वन्नाम जल्पन्त्याम् ॥ ६८९ ॥

**हसतीति**। हे सुभग, तस्यां नायिकायां स्वप्नायितेनोत्स्वापेन त्वन्नाम जल्पन्त्यां सत्यां सपत्नी हसति। एतस्या असतीत्वज्ञानोत्तरं प्रियाप्रियत्वं भविष्यतीति सुखाविर्भावादिति भावः। श्वश्रू रोदिति। इदं चेदन्यैः श्रुतं तदानर्थ एवापद्येत। अथवेयमेतादृशी संवृत्ता, कथमतः परं पुनस्तनयविवाहसंपादनमिति दुःखोद्रेकादिति भावः। सख्यश्च वदनम्। नायिकाया इति भावः। पिदधते। एवं च वर्णानामस्फुटत्वसंपादनेन पुनर्नामग्रहेऽपि सम्यग्ज्ञानमन्येषां मा भवत्विति धियेति भावः। एवं चैतस्यास्तत्रैतादृशी गतिरिति त्वमेवाधुना शरणमित्यवगत्यानुरक्तां तामनुगृहाणेति व्यज्यते ॥

नायकः सखायं वक्ति—

हृदयं मम प्रतिक्षणविहितावृत्तिः सखे प्रियाशोकः।
प्रबलो विदारयिष्यति जलकलशं नीरलेखेव ॥ ६९० ॥

**हृदयमिति**। हे सखे, प्रबलः प्रतिक्षणं विहितावृत्तिर्यंनैतादृशः प्रियासंबन्धी

शोकस्तरङ्गपङ्क्तिर्जलसंबन्धिघटमिव मम हृदयं विदारयिष्यति । एवं च मयि प्रस्थितुं कृतोद्योगे संजातप्रियादुःखं प्रबलत्वाद्वारं वारं जायमानत्वान्मम हृदयं दुःखोद्रेकवशाद्भिन्नं करिष्यतीत्यर्थः । प्रियादुःखादप्यत्यन्तं मम दुःखं भावीति भावः। यद्वा वारं वारं जायमानः प्रबलः। एवं च प्रतीकारानर्हत्वमावेद्यते प्रियायाः। एवं चावश्यभवनयोग्यत्वं शोके द्योत्यते । विरहजः शोको मम हृदयं स्फोटयिष्यति । एवं च प्रियविरहजन्यदुःखं मया सोढुमशक्यमिति न मया प्रस्थितिर्विधेयेति व्यज्यते । यद्वाननुभूतप्रियाविरहः कश्चित्सखायं पृच्छति—प्रियासंबन्धिशोको मम हृदयं विदारयिष्यतीति । एवं च प्रियासंबन्धित्वेन शोकस्य प्रियाहृदयविदारकत्वमुचितं नान्यहृदयविदारकत्वमिति व्यज्यते । मम हृदयमित्यनेन हृदयविदारणेऽसह्यत्वं तन्निवारणोपायसंपादने चावश्यकर्तव्यत्वं ध्वन्यते। तरङ्गपङ्क्तिरपि प्रतिक्षणकृतावृत्तिः प्रबला जलार्थं प्रक्षिप्तं कलशं स्फोटयति ॥

नायिका सखीं वक्ति—

हन्त विरहः समन्ताज्ज्वलयति दुर्वारतीव्रसंवेगः ।
अरुणस्तपनशिलामिव पुनर्न मां भस्मतां नयति ॥ ६९१ ॥

**हन्तेति** । दुःखेन निवारयितुमशक्यस्तीव्रो दुःसहः संवेग आधिक्यं यस्य स विरहः समन्तात् । सर्वाङ्गमित्यर्थः । सर्वत्रेति वा । क्वापि विश्रान्तिस्थानं नास्तीति भावः । मां ज्वलयति । हन्त खेदे । अरुणस्तपनशिलामिव पुनर्न भस्मतां प्रापयति । एवं विरहे सति जीवनान्मरणमेव वरमिति व्यज्यते ॥

कश्चित्कांचिदन्योक्त्या वक्ति—

हृत्वा तटिनि तरङ्गैर्भ्रमितश्चक्रेषु नाशये निहितः ।
फलदलवल्कलरहितस्त्वयान्तरिक्षे तरुस्त्यक्तः ॥ ६९२ ॥

**हृत्वेति** । हे तटिनि, एवं च निष्कामगमनयोग्यत्वं ध्वन्यते । तरङ्गैर्हृत्वा चक्रेष्वम्भसां भ्रमेषु भ्रमिं प्रापितः । आशये मध्ये न स्थापितः । फलदलवल्कलैर्हीनस्तरुस्त्वयान्तरिक्षे त्यक्तः । एवं च तरङ्गरूपकटाक्षैरेनं स्वाधीनीकृत्येतस्ततो भ्रामयित्वा स्वान्तःकरणेऽकृत्वा द्रव्यादिहीनत्वमासादयित्वाकस्मात्परित्यक्तोऽयं नायकः, इदमनुचितं तवेति ध्वन्यते ॥

सखी नायिकां वक्ति—

हृतकाञ्चिवल्लिबन्धोत्तरजघनादपरभोगभुक्तायाः ।
उल्लसति रोमराजिः स्तनशंभोर्गरललेखेव ॥ ६९३ ॥

**हृतेति** । न विद्यते परो यस्मात् । अत्युत्कट इत्यर्थः । यो भोगः सुरतं तत्रोपभुक्तायास्तव हृतकाञ्चिवल्लिबन्धेनोत्तर उच्छूनो यो जघनस्तद्धेतोः स्तनशंकरस्य विषलेखेव रोमावलिरुल्लसति । एवं च काञ्चिबन्धत्रुटनोद्धुरजघनकथनेन रतातिशयवत्त्वमावेद्यते ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता हकारव्रज्या ।

---

क्षकारव्रज्या ।

कथं त्वयि प्रीतिमकुर्वाणेऽपि नायके त्वं विनीतेति वादिनीं सखीं नायिका वक्ति—

क्षीरस्य तु दयितत्वं यतोऽपि शान्तोपचारमासाद्य ।
शैलोऽङ्गान्यानमयति प्रेम्णः शेषो ज्वरस्येव ॥ ६९४ ॥

**क्षीरस्येति** । क्षीरस्यापि दयितत्वं प्रीतिविषयत्वं यतः । यस्मादित्यर्थः । शान्तोपचारं समाप्तोपचारम् । आरोगिणमित्यर्थः । आसाद्य । एवं च क्षीरस्य क्षीरत्वेन सर्वस्पृहणीययोग्यत्वेऽपि रोगग्रस्तं प्रति न स्पृहणीयत्वमेवमन्याङ्गनानुरागरूपरोगग्रस्तं प्रति नाहं स्पृहणीयेति भावः । एवं च न तस्यापराधो न वा मम काचित्क्षतिरिति व्यज्यते । तेन च कंचित्कालोत्तरमहं तत्स्पृहणीया भविष्यामीति । तु पुनः । शीलस्यायं शैलसंबन्धीत्यर्थः । पक्षे शिलानामयं शैलः । अत्यन्तगुरुतापादक इति भावः । ज्वरस्येव प्रीतेः शेषोऽङ्गानि । ममेति भावः । आनमयति । एवं च यथा पर्वततुल्यो ज्वरशेषोऽङ्गानि बलादानयति तथा शीलसंबन्धी प्रीतेः शेषो मां विनीततां प्रापयतीति भावः । एवं च यद्यपि तथाविधप्रीतेरभावादहमविनीततां कर्तुमिच्छामि तथापि शीलप्रीतिशेषो मां बलाद्विनीततां नयतीति व्यज्यते । तेन च न ममापराध इति । यद्वा नायिकासखी नायकं वक्ति—हे शान्त । एवं चापराधजनकत्वाभावो व्यज्यते । यतः क्षीरस्याप्युपचारम् । आवर्तितत्वशर्करादिसंपर्कादिकमित्यर्थः । आसाद्य दयितत्वं प्रीतिविषयत्वं भवति । एवं च स्वतः क्षीरस्य माधुर्यवत्त्वेऽप्यावर्तनशर्करादिसंपर्कवशात्प्रीतिविषयत्वं यथा तथा

पराङ्गनालम्पटत्वादिराहित्येन त्वयि प्रीतिविषयत्वेऽपि वारंवारागमनचाटुवचनरचनादिमत्तया प्रीतिविषयत्वं भावीति व्यज्यते । एवं चाहमपराधाभाववानिति तूष्णीमेवावस्थितिरनुचिततरेति व्यज्यते । तु पुनः प्रेम्णः शैलः पर्वतो ज्वरस्य शेष इवाङ्गान्यानमयति । एवं च यथा बलाज्ज्वरशेषोऽङ्गनमनाभावमिच्छोरप्यङ्गनमनं करोत्येव तथा यदि त्वं तद्विषयकबहुतरप्रेमवानसि तर्हि तदेव त्वां बलात्प्रमाणादिशालिनं करिष्यतीति भावः । एवं च नाहमपराधीति किमिति प्रणामादिकं न करिष्यामीति वक्तुं नोचितं तवेति ध्वन्यत इत्यर्थः । कुपितनायिकां समाधातुमशक्ता दूती नायकं वक्ति । योजना प्राग्वत् । एवं च तस्यां तीव्रः कोपो न वा शीलप्रेमशेषः । अतस्तस्यास्त्वं न दयित इति भाव इति प्रतिभाति । परं तु मानस्यासाध्यत्वप्रदर्शनेनाभासत्वमायाति ॥

नायिका नायकं वक्ति—

क्षान्तमपसारितो यच्चरणावुपधाय सुप्त एवासि ।
उद्घाटयसि किमूरू निःश्वासैः पुलकयन्नुष्णैः ॥ ६९५ ॥

**क्षान्तमिति** । अत्र संबुद्धिपदानुपादानं क्रोधमावेदयति । अपसारितो दूरीकृतश्चरणावुपधानीकृत्य सुप्त एवासि तत्क्षान्तम् । उष्णैः । संतापजत्वादिति भावः । निःश्वासैः पुलकयन्नूरू किमुद्घाटयसि । इयमेव हि त्वां प्रति मदीया क्षमा यच्चरणसविधे सुप्त इतो न निराकृतोऽसि । त्वं पुनर्धृष्ट ऊरुविघटनं करोषि महत्साहसं तवेति ध्वन्यते । तेन चैतन्न मया सोढव्यमिति । यद्वा यदपसारितश्चरणावुपधाय सुप्त एवास्यतः क्षान्तं त्वदीयानुचितमिति भावः । क्षमाफलमेवाह—उष्णैः श्वसितैः पुलकयन्नूरू किमित्युद्घाटयसि । एवं च त्वदीयसहनशीलतया मया त्वदीयापराधजदुःखं त्यक्तम्, अतो दुःखजाञ्श्वासान्परित्यज्याचिरमालिङ्गनचुम्बनादि विधेहीति ध्वन्यते । एवं च पुलकयन्निति सार्थकम् ॥

कश्चित्कंचिद्वक्ति—

क्षुद्रोद्भवस्य कटुतां प्रकटयतो यच्छतश्च मदमुच्चैः ।
मधुनो लघुपुरुषस्य च गरिमा लघिमा च भेदाय ॥ ६९६ ॥

**क्षुद्रेति** । क्षुद्रा मधुमक्षिका । अथ च क्षुद्रो नीचः । तदुत्पन्नस्य । कटुतां रूक्षताम् । अथ च कटुभाषिताम् । प्रकटयतः । उच्चैरुत्कटं मदमुन्मादम् । अथ

च गर्वम्। यच्छतः कुर्वतः मधुनो माक्षिकस्याधमपुरुषस्य च गौरवं गुरुत्वं लाघवं तुच्छत्वं च भेदाय। यद्वा मधु मद्यम्, क्षुद्रा कण्टकारिकेत्यर्थः। एवं चाधमसंगतिर्न विधेयेति ॥

इत्यनन्तपण्डितकृतगोवर्धनसप्तशतीव्यङ्ग्यार्थदीपनया समेता क्षकारव्रज्या।

---

स्वकृतौ गुणाढ्यादिमहाकविकृतिसमतां वक्ति—

पूर्वैर्विभिन्नवृत्तां गुणाढ्यभवभूतिवाणरघुकारैः।
वाग्देवीं भजतो मम सन्तः पश्यन्तु को दोषः ॥ ६९७ ॥

**पूर्वैरिति**। गुणाढ्यभवभूतिवाणकालिदासैः पूर्वैः प्राक्तनैर्विभिन्नवृत्तामपि लक्षणसरणिशालिनीं (लक्षणया स्वैरिणीं) वाग्देवीं भजतो मम को दोषः। न कोऽपीत्यर्थः। इदं सन्तः पश्यन्तु। एवं च वाग्देव्या एकत्वेऽपि वैलक्षण्येन पूर्वैः सेवितत्वान्मयापि वैलक्षण्येन सा सेवितेति न मद्दोषगणनं सतामुचितमिति भावः। सन्त इत्यनेन नासतां प्रार्थना। अथ च पूर्वैर्गुणाढ्यादिभिर्विभिन्नशीलां वाग्रूपां देवीं राज्ञीं भजतो मम को दोषः। इदं सन्तः पश्यन्तु। एवं च 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति वचनाद्वाग्देवीभजनं न मम दोषावहमिति भावः। एवं च स्वस्मिन्वाक्पतित्वमावेद्यते। एवं च कारपदोपादानान्नाश्लीलता ॥

स्वग्रन्थस्य समीचीनत्वात्सर्वहर्षजनकत्वमिति वक्ति—

[1]सत्पात्रोपनयोचितसत्प्रतिबिम्बाभिनववस्तु।
कस्य न जनयति हर्षं सत्काव्यं मधुरवचनं च ॥ ६९८ ॥

**सत्पात्रेति**। नवमभिनवं वस्तु सत्काव्यं मधुरवचनं च कस्य न हर्षं जनयति। अपि तु सर्वस्येति भावः। सत्पात्रेत्यादिविशेषणत्रितयस्यार्थः क्रमेण।

---

१. बहुषु मूलपुस्तकेष्वयं समीचीनः पाठो वर्तते. टीकानुकूलपाठस्त्वयम्—'सत्पात्रोपनयोचितं सत्प्रतिबिम्बमभिन्नं नवं वस्तु.' अस्मिन्पाठे स्फुट एव च्छन्दोभङ्गः. इमामार्यामग्रिमां च भङ्क्त्वा निपीयानन्तपण्डितो व्याख्यातवानिति भाति. एवमेव आकारव्रज्यायाम् 'आरोपिता शिलायाम्–'(८१)इत्याद्यार्या टीकानुरोधेन च्छन्दोभङ्गदूषितैव मुद्रिता. मूलपुस्तकेषु तु 'आरोपिता शिलायामश्मेव त्वं स्थिरेति मन्त्रेण' इति साधीयान्पाठो दृश्यते.

समीचीनं यत्पात्रं संपुटादि तत्रोपनयाय स्थापनायोचितम् । अत्यन्तसंरक्षणीयमिति धियेति भावः । एवं च बहुमूल्यत्वमावेद्यते । सन्समीचीनः । परीक्षक इत्यर्थः । तस्य प्रतिबिम्बो याथातथ्यस्वरूपपरिचयो यस्य । क्षुद्रपरीक्षकस्य तद्गुणयथार्थज्ञानं न भवतीति भावः । एतादृशमभिन्नं सर्वदैकरूपम् । एवं च बहुकालसत्त्वेऽपि दोषासंस्पर्शितया मुक्ताफलादिव्यतिरेको ध्वन्यते । तेन चावश्यस्पृहणीयत्वम् । सत्पात्रे सहृदये पुंसि य उपनयः प्रापणं तत्रोचितम् । एवं च सहृदयस्यैव सत्काव्यश्रवणेऽधिकार इति भावः । सत्पात्रेण सहृदयेन च य उपनयः पठनादिस्तत्रोचितम् । एवं च सत्काव्यपाठेऽपि सहृदयस्यैवाधिकार इति ध्वन्यते । सत्स्वनादिकाव्यवासनाव्युत्पत्तिशालिहृदयेषु प्रतिबिम्बः सम्यग्बोधो यस्य । एवं च सत्काव्यार्थबोधोऽपि सहृदयस्यैवेति भावः । अभिन्नं सर्वसहृदयान्प्रत्येकरूपम् । सत्पात्राय समीचीनायोपसमीपे नयेन विनयेनोचितम् । 'तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥' इति स्मरणात्सत्पात्रं प्रत्येतावतोऽपि स्वधर्मसंरक्षणकारित्वादिति भावः । समीचीनः प्रतिबिम्बो यस्यैतादृशो यश्चन्द्रस्ततोऽभिन्नम् । तद्रूपमित्यर्थः । एवं च मधुरवचने सुधारूपत्वप्रतिपादनान्निखिलतापापनोदकत्वं बहुतरपुण्यैकलभ्यत्वं विरलत्वं च ध्वन्यते । अथवा मधुरवचनवतो देवरूपत्वं व्यज्यते । यद्वा मधुदैत्यं रात्यङ्गीकरोति । वधबलेन मुक्तिदत्वादिति भावः । तद्विषयकं यद्वचनं तदित्यर्थः । कथंभूतम् । सत्पात्रे शमादिसंपत्तिशालिनि य उपनय उपदेशस्तत्रोचितम् । सतः सत्स्वरूपस्य ब्रह्मणः प्रतिबिम्बनं प्रतिबिम्बो विज्ञानं यस्मादेतादृशं तत् । अभिन्नमेकम् । यद्यपि भगवत्प्रतिपादका बहवो वेदान्तभागास्तथापि 'सर्वेषां वेदान्तवाक्यानां ब्रह्मणि समन्वयः' इत्युक्तत्वादेकार्थत्वादेकत्वोक्तिः । अथवा सतः समीचीनाचरणस्य पात्रम् । गुरुरित्यर्थः । तस्य समीपे नयनं नयः प्रापणम् । स्वस्येति भावः । 'समित्पाणिराचार्यं श्रोत्रियमुपगच्छेत्' इत्यनेन गुरूपसत्तेर्विहितत्वादिति भावः । तेनोचितो योग्यः । प्राप्य इत्यर्थः । सत्प्रतिबिम्बनं सत्प्रतिबिम्बः समीचीनज्ञानं यस्यैतादृशम् । अभिन्नमखण्डितम् । केनापि नावगणितमिति भावः । यद्वा मधुनामकदैत्याङ्गीकारकर्तुः परमेश्वरस्य वचनं वेदान्तभाग इति भावः । एवं च सत्काव्ये भगवद्वाक्यतुल्यताप्रतिपादनेनावश्यपरिशीलनीयत्वं ध्वन्यते । अनर्घमणितुल्यताप्रतिपादनेन चार्थप्राप्तिजनकत्वं काव्ये व्यज्यते । एवं च पुरुषार्थसाधनीभूततया काव्येऽवश्यविधेयत्वं ध्वन्यते ॥

एका ध्वनिद्वितीया त्रिभुवनसारा स्फुटोक्तिचातुर्या ।
पञ्चेषुषट्पदहिता भूषा श्रवणस्य सप्तशती ॥ ६९९ ॥

**एकेति** । एका मुख्या । ध्वननं ध्वनिः । व्यञ्जनेति यावत् । सैव द्वितीया सहायभूता यस्याः । एवं चोत्तमकाव्यमयीत्वं सप्तशत्यां ध्वन्यते । त्रिभुवनसाररूपा । यद्वा त्रिभुवने सारं रसस्तद्वतीत्यर्थः । अथवा त्रिभुवनं सारं यया । एवं च त्रिभुवनेप्येतदसत्त्वे निःसारतैवासीत्, इदानीमनया सारवत्ता जातेति भावः । स्फुटमुक्तिचातुर्यं यस्याम् । यद्वा स्फुटं व्यक्तमुक्तिचातुर्यं यया । पञ्चेषुर्मदनस्तद्रूपो यः षट्पदस्तस्य हिता । स्वकर्तव्यतासहायतयेति भावः । श्रवणस्य श्रोत्रस्य । सतामिति भावः । भूषा भूषणरूपा । सप्तशती । सप्तशतीनामकोऽयं ग्रन्थ आस्ताम् । एवं च सद्भिरियं सप्तशती श्रोतव्येति प्रार्थना व्यज्यते । पञ्चेषुषट्पदहिता श्रवणस्य भूषेत्यनेन सप्तशत्यां मञ्जरीत्वं व्यज्यते । यद्वा सप्तशत्यां नायिकात्वारोपणेनावश्यस्पृहणीयत्वं व्यनक्ति । सप्तशती । सतां हृद्यास्तामित्यध्याहारेण योजना । ए हर्म्योदरे । एकारस्य हर्म्योदरवाचकत्वमेकाक्षरनिघण्टेऽवसेयम् । अव्ययत्वाच्चास्य सर्वलिङ्गसर्वविभक्तितुल्यत्वम् । कस्य सुखस्याध्वनि मार्गे द्वितीया । नानया विना गृहान्तर्वर्तिसुखमार्ग इति भावः । एवं च गार्हस्थ्यसुखेच्छावतेयमवश्यं सेवनीयेति व्यज्यते । त्रिभुवने सारभूता । बहुविधव्ययायाससाध्ययागादिजन्यस्वर्गादावपि नायिकैव भोगेषु मुख्येति भावः । यद्वात्रेः सकाशाद्भवतीत्यत्रिभु चान्द्रं ज्योतिस्तस्य वनं समूहस्तस्य साररूपा । एवं चेयं चन्द्रसारैर्निर्मितेति भावः । एवं चान्योपायासाध्यतापोपशामकत्वमावेद्यते । यद्वा त्रिभुवनं सारं यया । एवं च नायिकासांनिध्ये सारासाररूपस्यापि त्रिभुवनस्य साररूपतैव भवतीति व्यज्यते । स्फुटमुक्तिचातुर्यं यस्याः । स्फुटमित्यनेन निःसंदिग्धत्वं ध्वन्यते । यद्वा स्फुटा सप्रसादोक्तिर्यस्य । प्रसन्नार्थकोक्तिशालिनि नायके चातुर्यं यस्याः । एवं चानभिज्ञनायकं प्रति यदि न कामिनी चमत्कारकारिणी तदा न काचित्क्षतिरिति भावः । यद्वास्फुटोक्तौ वक्रोक्तौ चातुर्यं यस्याः । पञ्चेषोर्मदनस्य षड्भिः संधिविग्रहयानासनद्वैधीभावाश्रयरूपोपायैः पदाय वृद्धिरूपाय हिता । कामोऽप्येनामेवासाद्य संध्याद्युपायैर्जगज्जयवत्तया वृद्धिभाग्भवतीति भावः । एवं च मदनस्य सर्वस्वभूतेयमिति व्यज्यते । पञ्चेषुपदेन स्वल्पसामग्रीवतोऽपि महत्तरकार्यनिर्वाहकतयातिमन्त्रनिपुणत्वमावेद्यते । अथवा पञ्चेषोः षट्पदरूपा । ज्यारूपेत्यर्थः । अत एव च हिता ।

एवं चानया विना मदनधनुरनर्थकमेवेति भावः । यद्वा पञ्चेषुरूपभ्रमरस्य हिता । एवं च प्रसिद्धलतातिशयशालिलतात्वं नायिकायां व्यज्यते । तेन चातिकोमलाङ्गीत्वम् । श्रवणस्य भूषणरूपा । एवं च नायिकागुणेषु सर्वदा श्रवणेच्छाविषयत्वं ध्वन्यते । यद्वा एकस्याद्वितीयस्य ब्रह्मस्वरूपरसस्य यद्वा मुख्यस्य ब्रह्मस्वरूपरसस्याध्वनि मार्गे द्वितीया । ब्रह्मविद्येति भावः । त्रिभुवनं सारं यया । एवं च ब्रह्मविद्योत्पन्नतत्त्वज्ञानस्य सर्वत्र ब्रह्मभावनारूपसारसाम्राज्यमिति भावः । अथवा त्रिभुवनं साररूपं यया । ब्रह्मात्मकत्वेन निर्णयादिति भावः । स्फुटमुक्तौ चातुर्यं सामर्थ्यं यस्याः । वाचामगोचरस्यापि प्रतिपादनादिति भावः । यद्वा स्फुटम् । प्रकटतयेति यावत् । उक्तौ प्रतिपादने सामर्थ्यं यस्याः । अतिनिगूढस्याप्यात्मरूपरसस्य स्फुटप्रतिपादनमत्यन्तं दुष्करमिति भावः । स्फुटे प्रकटे सर्वदा स्वप्रकाशरूपे ब्रह्मण्युक्तौ चातुर्यं यस्याः । स्वप्रकाशत्वे झटिति ज्ञानयोग्यत्वेऽपि स्वापेक्षासंपादनेन चातुर्यवत्ता । पञ्चस्य प्रपञ्चस्य बाणरूपा ये षट्संख्याकाः कामक्रोधलोभमोहमदमत्सरास्तेषां यत्स्थानमज्ञानं तस्याहिता नाशिका । स्वजन्यज्ञानद्वारेति भावः । इषुत्वेनातिदुःसहत्वम् । एभिः कृत्वैव प्रपञ्चस्यापि दुःखदत्वम् । श्रवणस्य श्रोतव्येत्यादिविधिविहितस्य भूषा । श्रुतिजन्यज्ञानस्यैव समीचीनत्वमिति भावः । सप्तशती सतां हृद्यास्ताम् । एवं च रसे ब्रह्मरूपताप्रतिपादनात्सप्तशत्यां ब्रह्मविद्यात्वप्रतिपादनेन तत्परिशीलनं सतां सर्वदा समुचितमिति ध्वन्यते । संख्याक्रमोऽप्यत्र ॥

स्वग्रन्थावलोकने लोकप्रवृत्त्यर्थमाधिक्यं वक्ति—

कविसमरसिंहनादः स्वरानुवादः सुधैकसंवादः ।
विद्वद्विनोदकन्दः संदर्भोऽयं मया सृष्टः ॥ ७०० ॥

**कवीति** । कविसङ्ग्रामे सिंहनादः । एवं चैतत्संदर्भश्रवणेऽन्यकवीनां दर्पहानिरवश्यं भवतीति ध्वन्यते । स्वराः षड्जादय अनुवादो यस्य । एवं चैतन्माधुर्यन्यूनमाधुर्यवत्ता षड्जादाविति भावः । सुधाया एकः संवादः साजात्यं यस्य । एतत्सजातीया सुधेति भावः । यद्वा सुधारूप एकः सम्यग्वदनं वादो यस्य सः । एवं चैतत्संदर्भस्यैकदोच्चारणं सुधासमसुखावहम् । वारंवारोच्चारणपरिभावनादिकं तु ब्रह्मानन्दास्वादकृदिति व्यज्यते । विदुषां विनोदस्य कन्दः । एवंचैतद्ग्रन्थस्याविदुषां विनोदजनकत्वाभावे न क्षतिरिति भावः । अयं संदर्भो मया सृष्टः ॥

उदयनबलभद्राभ्यां सप्तशती शिष्यसोदराभ्यां मे ।
द्यौरिव रविचन्द्राभ्यां प्रकाशिता निर्मलीकृत्य ॥ ७०१ ॥

**उदयनेति** । शिष्यसोदराभ्यामुदयनबलभद्राभ्यां सप्तशती रविचन्द्राभ्यां द्यौरिव निर्मलीकृत्य संशोध्य । पक्षे ध्वान्तरहितां कृत्वा । प्रकाशिता शिष्यप्रशिष्यद्वारा विस्तारिता । पक्षे प्रकाशविषयीकृता । एवं च प्रथमत इयं मत्कृतिस्तत्राप्युदयनाचार्यबलभद्राभ्यां संशोध्य शिष्येभ्यः पाठिता । अतोऽत्र दूषणं विभाव्योद्भावनीयमिति व्यज्यते ॥

हरिचरणाञ्जलिममलं कविवरहर्षाय बुद्धिमान्सततम् ।
अकृतार्यासप्तशतीमेतां गोवर्धनाचार्यः ॥ ७०२ ॥

**हरीति** । मतिमान्गोवर्धनाचार्यो हरिचरणयोरञ्जलिम् । प्रणाममित्यर्थः । विरच्य्येति भावः । सततं कविश्रेष्ठसंतोपाय । एवं चापकृष्टकवीनामसंतोषे न काचित्क्षतिरिति भावः । अमलं यथा भवति तथैतां सप्तशतीमकृत । अत्रापरोक्षेऽपि परोक्षवन्निर्देशेनौद्धत्याभावो व्यज्यते । यद्वा मतिमान् । एवं च सप्तशत्या भगवदर्पणकरणं समुचितमेतस्येति भावः । गोवर्धनाचार्यः सततं कविवरहर्षाय । स्थितामिति शेषः । एतामार्यासप्तशतीममलं स्वच्छं हरिचरणयोरञ्जलिं पुष्पाञ्जलिमकृत । एतत्पक्षेऽपि मया कृतेति वचनाभाव आचार्यस्य विनयवत्तामावेदयति । अत्र भामा सत्यभामेति वदञ्जलिः पुष्पाञ्जलिः । तात्पर्यान्यथानुपपत्त्या लक्षणेति वा । तद्ग्राहकं चामलपदम् ॥

अर्थागमे सरणिरत्र बहुप्रकारा संदृश्यते तदपि निर्वहणक्षमेयम् ।
मद्दर्शिता रसवती निखिलावदातसाहित्यशालिविबुधैः परिशीलनीया ॥

ब्रह्मैवास्ति रसस्तदर्थकगिरो वेदान्तभागाः परं
ज्ञात्वैवं निरमायि यन्निजधिया विस्तारहीनं मया ।
तद्गोवर्धनवाचि साचिरचनं व्यङ्ग्यार्थसंदीपनं
सीतासंयुतरामचन्द्रचरणाम्भोजे चिरं तिष्ठतु ॥
अब्दे लोचनबिन्दुसप्तशशभृत्प्रस्तारसंलक्षिते ( १७०२ )
चैत्रे मासि सिते शिवस्य दिवसे मार्तण्डसद्वासरे ।

पुण्यस्तम्भनिवासिना सुमतिनानन्ताभिधेनादरा-
त्काश्यां सद्विदुषामकारि कुतुकाव्यङ्ग्यार्थसंदीपनम् ॥
कदाचित्कस्मिंश्चिद्वचसि यदि वार्थे मम भवे-
द्भ्रमः सोऽयं सद्भिर्न खलु गणनीयो निजहृदि ।
भ्रमाभावं यस्मिन्निखिलनिगमोऽप्याह सततं
स एवैको यस्माज्जगति जगदीशो रघुपतिः ।
ग्रन्थोऽयं विदुषा सृष्टः पण्डितानन्तशर्मणा ।
खद्वयाश्वसमुद्राख्य (४७००) संख्यको व्यङ्ग्यदीपकः ॥

इति श्रीमद्गोदावरीपरिसरालंकृतपुण्यस्तम्भस्थितिविराजमाननीलकण्ठपण्डित-
तनूजबालोपण्डितात्मजतिमाजीपण्डिताङ्गजानन्तपण्डितविरचित-
व्यङ्ग्यार्थदीपनसमेता श्रीमद्गोवर्धनाचार्यकृता
आर्यासप्तशती समाप्ता ।

---

१. अयं श्लोकः केपुचित्पुस्तकेपु न दृश्यते.